KÂVYAMÂLÂ. 62.



# THE RÂGHAVAPÂṆDAVÎYA

OF

## KAVIRÂJA.

WITH THE COMMENTARY OF S'AS'ADHARA.

EDITED BY

MAHÂMAHOPÂDHYÂYA PAṆḌIT S'IVADATTA

Head Paṇḍit and Superintendent, Sanskṛit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂṆḌURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1897.

*Price* $1\frac{1}{4}$ *Rupees.*

काव्यमाला. ६२.

श्रीकविराजविरचितं

# राघवपाण्डवीयम् ।

शशधरविरचितया प्रकाशाख्यया व्याख्यया समेतम्

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबो-
पाह्वपाण्डुरङ्गात्मजकाशीनाथशर्मणा
च संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९७



मूल्यं सपादो रूप्यकः

# काव्यमाला।

## कविराजविरचितं

# राघवपाण्डवीयम्।

### शशधरविरचितप्रकाशसहितम्।

प्रथमः सर्गः।

श्रीगणेशं रमानाथं नत्वा गुरुपदाम्बुजम्।
रघुपाण्डुमये काव्ये मया टीका प्रतन्यते॥

तत्रादौ कविरारब्धग्रन्थसमाप्त्यर्थमिष्टदेवतानमस्काररूपं मङ्गलं कुर्वन्नाह—

स्वाधिष्ठानाम्बुजरजःपुञ्जपिञ्जरमूर्तये।
इच्छाधीनजगत्सृष्टिकर्मणे ब्रह्मणे नमः॥ १॥

तस्मै ब्रह्मणे नमोऽस्तु। ब्रह्माणं नमामीत्यर्थः। कीदृशाय। स्वस्याधिष्ठानमासनं यदम्बुजं पद्मं तस्य रजःपुञ्जः परागसमूहस्तद्वदतिपिञ्जरा पीता मूर्तिः शरीरं यस्य तस्मै। 'अधिष्ठाने पुरे चक्रे प्रभावे ध्यासनेऽपि च' इति मेदिनीकरः। 'पिञ्जरः शबले पीते क्लीबे स्वर्णे च पित्तले' इति च। 'मूर्तिः काठिन्यकाययोः' इत्यमरः। 'पिञ्जरो रक्तपीते च' इति विश्वः। ब्रह्मणो रक्तत्वेऽपि पीतत्वं रजोगुणख्यापनाय। इच्छा स्वाकाङ्क्षा तदधीनं स्वायत्तं जगतो विश्वस्य सृष्टिकर्म सृष्टिक्रिया यस्य तस्मै। सृष्टिकर्तुर्नतिः[1] काव्यसृष्टिसामर्थ्याय[2]॥

पुनातु वः सरस्वत्या विलासशिशुकः शुकः।
करांशुमयमाणिक्यपञ्जरान्तरगोचरः[3]॥ २॥

सरस्वत्या विलासशिशुकः शुकः वो युष्मान् पुनातु। विलासाय क्रीडायै शिशुको बालकः। शिशुरिव शिशुकः। 'इवे प्रतिकृतौ' इति कः। प्रशंसायां वा। शिशुः प्रशस्तः शिशुकः। एकपदं वा। सरस्वत्या आसमन्ताद्यो विलासः तदर्थं शिशुः। 'विलासो हावभेदे स्याल्लीलायामपि' इति मेदिनीकरः। 'शिशुकः शिशुमारे स्याद्बालकद्रुमयोरपि'[4]।

---

१. 'कर्त्रे' ख. २. 'काव्यसामर्थ्यलाभाय' ख. ३. 'तलांशु' कलिकातामुद्रितपाठः. ४. 'बालकोलूपिनोरपि' इति पाठो मेदिन्यां दृश्यते.

'शुको व्याससुते कीरे' इति विश्वः । कीदृशः शुकः । सरस्वत्याः करस्य हस्तस्य येंऽशवः किरणाः तद्विकारस्य माणिक्यपञ्जरस्य यदन्तरं मध्यं तद्गोचरः । स्थानं यस्य । करस्य रक्तत्वात् । करमध्यवर्तीत्यर्थः ॥

भवानीं कविः स्मरति—

ब्रह्माण्डमण्डलछद्मपद्मकुड्मलदीर्घिका ।
जायतां जगतः शान्त्यै शांभवी शक्तिरेकला[1] ॥ ३ ॥

शंभोरियं शांभवी शक्तिर्जगतो विश्वस्य शान्त्यै निरुपद्रवाय जायतां भवतु । कीदृशी । एकं लातीत्येकला अद्वितीया । 'एकोऽन्यकेवलश्रेष्ठसंख्यासु' इति कोशः । तथा—ब्रह्माण्डमण्डलस्य छद्मना कपटेन यत्पद्मकुड्मलं कमलकलिका तस्य दीर्घिका वापी । कमलस्य वाप्या भाव्यम् । जगदाधारभूतेत्यर्थः ॥

श्रीलतालिङ्गिताङ्गस्य विष्णुकल्पद्रुमस्य वः ।
अवतारमहाशाखाः पुष्णन्तु[2] फलमीप्सितम् ॥ ४ ॥

विष्णुरेव कल्पद्रुमः तस्यावतारा मत्स्यादय एव महाशाखा वो युष्माकं वाञ्छितफलं पुष्णन्तु पुष्टं कुर्वन्तु । 'शाखा द्रुमांशे वेदांशे भुजे पक्षान्तरेऽन्तिके' इति विश्वः । कीदृशस्य । श्रीरेव लता तयालिङ्गिताङ्गस्तस्य । तरुलताश्लिष्टो रूपकालंकारः ॥

कान्तिः श्रीकण्ठकण्ठस्य जयत्यालिङ्गनोत्सुका ।
स्कन्धारूढेव कालिन्दी मौलिमन्दाकिनीर्ष्यया ॥ ५ ॥

श्रीकण्ठकण्ठस्य कान्तिर्जयति उत्कर्षेण वर्तते । कीदृशी । मौलौ शिरसि या मन्दाकिनी गङ्गा तस्यामीर्ष्ययामर्षेणालिङ्गनोत्सुका अत एव स्कन्धमारूढा कालिन्दी यमुनेव । स्कन्धारूढमालिङ्गनविशेषोऽपि ॥

स नः करोतु विघ्नानां वारणं वारणाननः ।
मदधाराभिरारब्धभोगावलिरिवालिभिः[3] ॥ ६ ॥

स वारणाननो गजमुखो नोऽस्माकं विघ्नानां वारणं निषेधं करोतु । विघ्नवारणत्वेन प्रसिद्धत्वात् । कीदृशः । मदधाराभिरारब्धा भोगानां सर्पशरीराणां आवलिः श्रेणिर्यत्र । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । कीदृशीभिर्मदधाराभिः । उत्प्रेक्ष्यते—अलिभिर्भ्रमरैरिव । मदधारा यत्रास्य सर्प इवाभासते इत्यर्थः ॥

जगत्प्रदीपयोर्वंशौ सूर्याचन्द्रमसोरपि ।
ययोरुद्दीपितौ वाग्भिस्तौ वन्दे कविपुंगवौ ॥ ७ ॥

तौ प्रसिद्धौ कविपुंगवौ कविश्रेष्ठौ वाल्मीकिव्यासौ वन्दे नौमि । कवी पुंगवाविति

---

१. 'एकिका' कलि०. २. 'फलन्तु' कलि०. ३. 'मदराविभि' कलि०.

वा । 'उपमितं व्याघ्रा–' इति समासः । 'पुंगवाः कविभैषज्ये प्रधाने चोत्तरच्छदे' इति विश्वः । तौ कौ । जगत्प्रदीपयोः विश्वप्रकाशयोः सूर्याचन्द्रमसोर्वंशौ ययोर्वाग्भिरुद्दीपितौ प्रकाशितौ रामायणभारतरूपेण वर्णितौ । दीपोऽपि वस्तुप्रकाशकः ॥

अन्यो विधाता वाल्मीकिरादिकाव्यं कमण्डलुः ।
रघुनाथकथा गङ्गा तया पूता जगत्रयी ॥ ८ ॥

वाल्मीकिरन्यो द्वितीयो विधाता ब्रह्मा, आदिकाव्यं रामायणं कमण्डलुः, रघुनाथकथा गङ्गा, तया पूतं पवित्रितं जगत्रयम् । ब्रह्मकमण्डलुस्था गङ्गा जगत्पुनातीति प्रसिद्धम् ॥

द्वैपायनोऽपरो ब्रह्मा तत्सृष्टिर्भारतार्णवः ।
सूक्तयो दिव्यरत्नानि त्रैलोक्यं तैरलंकृतम् ॥ ९ ॥

द्वैपायनो वेदव्यासोऽपरो द्वितीयो ब्रह्मा, भारतरूपोऽर्णवः, तत्सृष्टिस्तस्य कृतिः सूक्तयः सद्वचनानि दिव्यरत्नानि, तै रत्नैस्त्रैलोक्यमलंकृतं शोभितम् ॥

निःश्रेण्यौ ब्रह्मलोकस्य वाग्देव्याः कर्णकुण्डले ।
धर्मद्रुममहामूले वाल्मीकिव्यासयोः कृती ॥ १० ॥

वाल्मीकिव्यासयोः कृती रामायणभारते ब्रह्मलोकस्य निःश्रेण्यौ ब्रह्मलोकारोहणसाधनभूते, वाग्देव्याः सरस्वत्याः कर्णकुण्डलस्थानीये, धर्मरूपद्रुमस्य महामूलम्, तयोः श्रवणाद्धर्मो वर्धते ॥

भारतादिपुराणानि श्रीरामचरितानि च ।
त्रिसंध्यसवनान्येष सर्वसाधारणो मखः ॥ ११ ॥

भारतादीनि पुराणानि रामचरितानि च त्रिसंध्यं सवनानि त्रिषवणानि एष मखो यज्ञः सर्वसाधारणः सर्वेषामेतच्छ्रवणद्वारात् ॥

पुराणरामायणभारतादिक्षीराणि संयोजितभक्तिवत्सैः ।
पुरातनैर्या दुदुहे कवीन्द्रैः सा भारती कामदुघा ममास्तु ॥ १२ ॥

सा भारती सा सरस्वती मम कामदुघा अभिलाषदात्री अस्तु । कामान् दुग्धे सा कामदुघा कामधेनुर्भवतु । सा का । या पुराणैः प्राचीनैः कवीन्द्रैः वाल्मीक्यादिभिः पुराणानि मत्स्यादीनि रामचरितं भारतमित्यादीनि क्षीराणि पयांसि दुदुहे दुग्धा । द्विकर्मकः । कीदृशैः । संयोजिता भक्तिरेव वत्सा यैः । भारतीभक्तिं कृत्वा पुराणादीनि कृतानीत्यर्थः ॥

अस्ति कादम्बसंतानसन्तानकनवाङ्कुरः ।
कामदेवः क्षमादेवकामधेनुर्जनेश्वरः ॥ १३ ॥

कामदेवो नाम जनेश्वरो राजास्ति । कीदृशः । कादम्बसंतानः कादम्बसंज्ञकराज-

वंशः स एव सन्तानकः कल्पतरुः तस्य नवाङ्कुरो नूतनपल्लव उत्थितः। 'अङ्कुरो रुधिरे लोम्नि सलिलेऽभिनवोद्गमे'। तथा—क्षमादेवानां विप्राणां कामधेनुः अभिलषितदाता। 'द्विजात्यग्रजन्मभूदेववाडवाः' इत्यमरः॥

कामः पुरातनो येन नूतनेनाभिभूयते।
भार्गवो राघवेणेव रामो रामेण संगरे॥ १४॥

येन नूतनेन कामदेवेन पुरातनो जीर्णः कामदेवोऽभिभूयते तिरस्क्रियते। नूतनं जीर्णपराभवकारीति प्रसिद्धम्। यथा रामेण भार्गवो रामोऽभ्यभूयत॥

दत्तयः कीर्तयश्चैव यदीयाः कर्णमार्गगाः।
कान्ताभ्यश्च कविभ्यश्च कामदं यस्य दर्शनम्॥ १५॥

यदीया यस्य संबधिन्यो दत्तयो दानानि कीर्तयो यशांसि च कर्णमार्गगाः श्रवणपथगामिन्यः। श्रवणपथान्तरगमनशीला इत्यर्थः। यस्य पुनर्दर्शनं कान्ताभ्यो रमणीभ्यः, कविभ्यश्च कामदं रतिभावजनकम्, अभिलषितदं वा। यस्येमा यदीयाः। 'त्यदादीनि च' इति वृद्धसंज्ञायां 'वृद्धाच्छः'॥

दधानोऽपि धनुर्विद्यावैशारद्यं किरीटिवत्।
अङ्गनापाङ्गबाणानां यः स्वयं याति लक्ष्यताम्॥ १६॥

यः कामदेवनृपोऽङ्गनाया अपाङ्गबाणानां लक्ष्यतां ग्राह्यतां स्वयं याति गच्छति। अपाङ्गेन कटाक्षालोकनमुक्तम्। तेनाङ्गनानामपाङ्गलोकनमेव बाणः तेषामिति। अपाङ्गो नेत्रप्रान्तः स एव बाण इति वा। किंविशिष्टः। किरीटिवदर्जुन इव धनुर्विद्याया धनुर्वेदस्य वैशारद्यं विशारदत्वं विज्ञत्वं दधानोऽपि धारयन्नपि। अपि विरोधे। योऽर्जुन इव धनुर्विद्यापारगः स स्त्रीणामपाङ्गबाणानां लक्ष्यः कथं स्यादिति विरोधः। अथवा स्वयमपाङ्गबाणलक्ष्यतां याति, न शत्रूणामिति भावः। केचित्तु—अर्जुनस्तावच्छत्रूणां बाणलक्ष्यः। अयं तु तद्विलक्षण इति व्यतिरेकः॥

यद्यशोराजहंसस्य ब्रह्माण्डं पञ्जरायते।
ग्रासक्षीरायते चास्य पुरस्तात्क्षीरनीरधिः॥ १७॥

यस्य राज्ञो यशोराजहंसस्य पञ्जरायते पञ्जरं भवति। पञ्जरमिवाचरतीति यावत्। क इत्याह—ब्रह्माण्डम्। जगदित्यर्थः। अन्योऽपि राजहंसः पञ्जरे तिष्ठति। अस्येदं यशः सकलजगदुदरे तिष्ठति इति भावः। अस्य यशोराजहंसस्य पुरस्तात्पुरस्थितः क्षीरनीरधिः क्षीरसमुद्रो ग्रासक्षीरायते ग्रासक्षीरमिवाचरति इति। अत एवोक्तम्—'विहाय नीरमादत्ते क्षीरं हंसो यथा तथा' इति। जलमिश्रक्षीरे जलं परित्यज्य क्षीरं हंसो गृह्णाति इति तज्जातिः। जगदुदरव्यापकत्वेन तद्यशसामुक्तम् एतद्यशसा ब्रह्माण्डं व्याप्तमिति॥

श्रीविद्याशोभिनो यस्य श्रीमुञ्जादियती भिदा ।
धारापतिरसावासीदयं तावद्धरापतिः ॥ १८ ॥

श्रीयुक्तात्सलक्ष्मीकान्मुञ्जाद्राजविशेषादस्य राज्ञः कामदेवस्येयती भिदा एतावानेव भेदः । किंविशिष्टस्य । श्रीविद्याशोभिन इति श्रीश्च विद्या च श्रीविद्ये ताभ्यां शोभितुं शीलं यस्य तथा श्रीविद्याशोभिन इत्युभययोगित्वादेकश्रीयुक्तस्य मुञ्जस्यास्माद्भेद उक्तः । अपरं चेदमाह—असौ मुञ्जो राजा धारापतिरासीत् धारा नाम तन्नगरी तत्पतिः । तत्स्वामीत्यर्थः । अयं तु कामदेवो धरापतिः पृथ्वीपतिः अतएव नगरीपतेर्मुञ्जादसौ विलक्षण इति । 'सैन्याग्रस्कन्दसंतत्योर्धाराश्च गतिपञ्चके । द्रवद्रव्यप्रमाणे स्त्री' इति विश्वः ॥

धर्मार्थकामान्भजता यथावदनुबन्धिनः ।
अवन्ध्या येन नीयन्ते सज्जना इव वासराः ॥ १९ ॥

येन वासरा दिवसा अवन्ध्याः सफला नीयन्ते । सज्जन इवेति सहोपमेयम् । सज्जना अपि सफला नीयन्ते इत्यर्थः । किंविशिष्टेन । धर्मार्थकामान्भजता । अपवर्गसहितान् पुरुषार्थचतुष्टयान्सेवमानेनेत्यर्थः । विधानतिक्रमेणेत्यर्थः । अनुबन्धिनः । परस्परसंबद्धानित्यर्थः । सज्जना इवेति निदर्शनोक्तिरिति केचन ॥

दूषणध्वंसदक्षेण पुण्यसेतुप्रवर्तिना ।
रामेणेव कृतं येन जनस्थानमकण्टकम् ॥ २० ॥

येन जनस्थानं जनपदोऽकण्टकं कण्टकशून्यं कृतम् । न विद्यन्ते कण्टका यत्र तत्तथा । रामेणापि जनस्थानं देशविशेषोऽकण्टकं कृतमिति । उभयं विशिनष्टि—दूषणस्य दोषस्य निराकरणे दक्षेण कुशलेन । पक्षे—दूषणस्य राक्षसस्य ध्वंसने दक्षेणेति । पुण्यो यः सेतुबन्धः तस्य प्रवर्तकेन । 'पुण्यं त्रिषु मनोज्ञे स्यात्क्लीबे सुकृतधर्मयोः' इति विश्वः । पक्षे समुद्रबन्धनिर्वर्तकेनेति ॥

भूरिक्षमाभारभृता विजयार्जितसंपदा ।
भूमेरुत्खातशल्येन यस्तुल्यो धर्मजन्मना ॥ २१ ॥

योऽयं राजा धर्मजन्मना युधिष्ठिरेण तुल्यः । सदृश इत्यर्थः । उभयत्र समानविशेषणमाह—भूरीति । क्षमा क्षान्तिः पृथ्वी वा तस्या भूरिर्महान्यो भारस्तस्य धारकेन । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । विशिष्टेन जयेन विजयेनार्जुनेन वा अर्जिता संपद्येन । भूमेरिति । उत्खातः शल्यो रिपुर्येन । पक्षे—शल्यो राजविशेषो येन । भूमेरिति पञ्चम्यन्तमिति केचन । 'तिथिभेदाग्निमन्थानशैलपुत्रीसखीषु च । जयन्त्यां च स्त्रियां शक्रतनये जयने जयः ॥' इति विश्वः ॥

यथा सर्वेषु देवेषु कामदेवो जगत्प्रियः ।
तथा मनुष्यदेवेषु कामदेवो जगत्प्रियः ॥ २२ ॥

जगतां प्रियो जगत्प्रियो जगत्सु प्रिय इति वा । अतिसुन्दरत्वात्सर्वेषु देवेषु कामदेवः कंदर्पो यथा, तथैव मनुष्यदेवेषु राजसु कामदेवो नाम नृपो जगत्प्रिय इति ॥

आदित्यस्यान्ववायो जयति रघुपतेर्जन्मनोज्जृम्भितश्री-
स्तत्साम्यं सोमवंशः श्रयति सुरभितः पाण्डवानां यशोभिः ।
धत्ते तत्साम्यमद्य[१] स्मरहरधरणीसंभवस्यान्ववायो
यस्यालंकारभावं भजति कृतधियां कामदः कामदेवः ॥ २३ ॥

आदित्यस्यान्ववायो वंशः सूर्यवंशो जयति उत्कर्षेण वर्धताम् । किंविशिष्टः । रघुपते रामस्य जन्मनोज्जृम्भितस्य वर्धिता प्रकाशिता श्रीर्यस्य सः । तथा सोमवंशोऽपि तत्सूर्यवंशतुल्यतां श्रयति । पाण्डवानां यशोभिः ख्यातः । स्मरहरधरणीसंभवोऽपि वंशः कादम्बवंशः अद्य तत्साम्यं तयो राघवपाण्डववंशयोः सादृश्यं धत्ते धारयति । 'तत्प्रौढिम्' इति पाठान्तरम् । तयोः प्रौढिमाधिक्यमित्यर्थः । यस्यालंकारभावमलंकारत्वं कामदेवो नाम राजा भजति । इति कृतधियां पण्डितानां [कामदः] ॥

केचिद्दानेषु वीराः समरभुवि पुनः केचिदन्ये दयायां
कर्णाद्याः पार्थमुख्याः खचरपतिमुखाः पूर्वमासन्युगेषु ।
तेषां तेषां च तेषामपि वहति धुरं सांप्रतं तावदस्या-
मेकः श्रीकामनामा जलनिधिलहरीस्रग्धरायां धरायाम् ॥ २४ ॥

पूर्वं पुरा राजान एवमासन् अभवन् । तथा हि—केचित्कर्णाद्या दानेषु प्रवीरा उत्कृष्टाः । समर्था इति यावत् । केचित्पार्थप्रभृतयः समरभुवि सङ्ग्रामभूमौ प्रवीराः । अन्ये खचरपतिमुखा ग्रहराजादयो दयायां करुणायां प्रवीरा इति । यद्वा के ते इत्याह—केचिद्राजानो दाने धनादिवितरणे प्रवीराः प्रवीणा उत्कर्षदानेन वा । 'दो अवखण्डने' इति धात्वनुसारात् सुखाद्यपहर्तार इत्यर्थः । केचित्समरभुवि प्रवीराः । अन्ये पुनर्दयायां करुणायामिति । कर्णाद्या राधेयप्रभृतयः । पार्थमुख्या युधिष्ठिरप्रभृतयः केचिदिति विवरणम् । खचरपतिमुखा इति खे आकाशे चरन्ति खचरा ग्रहनक्षत्राणि तेषां पतिः सूर्यश्चन्द्रो वा तौ मुखे अग्रे येषां ते तथा । सूर्यवंशसोमवंशभवा इत्यर्थः । सांप्रतमिदानीं तस्यां धरायां पृथिव्यामेकः कामदेवनामा नृपः तेषां कर्णादीनां राज्ञां धुरं वहति धारयति । दानदयासङ्ग्रामेषु एक एव प्रवीण इति तेभ्यो विलक्षणोऽयमिति भावः । जलं निधीयतेऽस्मिन्निति जलनिधिः समुद्रः तस्य लहरी तरङ्गमाला सैव स्रक् पुष्पमाला तां धारयति बिभर्ति या सा तथोक्ता ॥

आनेता मध्यदेशात्प्रवचनविदुषां सोमपां ब्राह्मणाना-
मारोढा मर्त्यमूर्त्या सुरपतिसदसो मण्डनं मानवत्याः ।

---

१. 'तत्प्रौढि' कलि०.

जेता भूमेर्जयन्तीपुरपुरमथनश्रीपदाम्भोजभृङ्गः
सोऽपि क्ष्मापस्त्रिनेत्रः स्वकुलकुलगिरिं योऽनुलेभे तपोभिः ॥२५॥

सोऽपि क्ष्मापः पृथ्वीपालः त्रिनेत्रः प्रज्ञाचक्षुषा नेत्रत्रयवान्। अथवा त्रिनेत्र इव शंकर इवेति लुप्तोपमेयम्। किंचित्सादृश्यप्रतिपादकहेतुमाह—य इति। योऽयं तपोभिः स्वकुलकुलगिरिमनुलेभे प्राप। यस्य स्वकुलं कुलगिरिमिव कैलासमिव। स्वकुलमेव कुलगिरिमिति वा। 'कुलं जनपदे गेहे सजातीयगणेऽपि च' इति मेदिनीकरः। तं विशिनष्टि—आनेतेति। मध्यदेशाद्गङ्गायमुनयोरन्तर्वेदिदेशादानेता आनयनकर्ता। केषामित्याह—ब्राह्मणानामिति। प्रवचनविदुषां वेदज्ञानाम्। 'अथ प्रवचनं वेदे प्रकृष्टवचनेऽपि च' इति मेदिनीकरः। सोमपां कृतसोमलतापानानां कृतज्योतिष्टोमत्वात्। आरोढेति। मर्त्यमूर्त्या अनुपरुध्येन(?) सुरपतिसदसः इन्द्रसभाया आरोढा आरोहणकर्ता। योगित्वात्। मानवत्यो मनस्विन्यो मण्डनमलंकारः। भूमेः [जेता]। दिग्विजयेनेति शेषः। जयन्तीपुरे नगरे यः पुरमथनदेवस्तस्य श्रीस्तस्या यत्पादारविन्दं तस्य भृङ्गः। क्ष्मां पातीति क्ष्मापः॥

न्यञ्चत्काञ्चीमनोज्ञाः सुललितमधुराः कुन्तलैरुल्लसन्त्यः
पुष्णन्त्यो हारशोभां धृतकरकटकाः कान्तिमद्वेदिमध्याः।
अङ्गश्रीभङ्गिभाजः परिमिलदलकाः प्रोल्लसत्कामरूपाः
सेवन्ते तं समन्तादनुदिनमबलाश्रेणयः क्षोणयश्च ॥ २६ ॥

अनुदिनं प्रत्यहं समन्तात् सर्वतः अबलाश्रेणयोऽङ्गनापङ्क्तयः क्षोणयो भूमयश्च तं राजानं सेवन्ते भजन्ति। उभयं विशिनष्टि—न्यञ्चदिति। न्यञ्चन्ती चलन्ती या काञ्ची चलन्ती या क्षुद्रघण्टिका देशविशेषो वा तया मनोज्ञाः मनोहराः। तथा—सुललितेन शोभनेन विलासेन मधुरा मनोहराः। पक्षे—सुललिता मधुरानगरी यत्र। 'ललितं हावभेदे स्याल्ललितं चेष्टि(प्सि)ते त्रिषु' इति विश्वः। तथा—कुन्तलैः केशविन्यासैरुल्लसन्त्यः। पक्षे—कुन्तलैर्देशविशेषैः। 'कुन्तलाः स्युर्जनपदे हलो वालश्च कुन्तलः' इति विश्वः। पुष्णन्त्य इति। हारेण मुक्ताहारेण शोभां पुष्णन्त्यो वर्धयन्त्यः। पक्षे—हारस्य देशविशेषस्य शोभामिति। 'हारो मुक्तावली देशः (युधि)' इति मेदिनीकरः। तथा—धृतं करेण हस्तेन कटकं वलयं याभिस्ताः। पक्षे—धृतः करो राजग्राह्यभागो यत्र एवंविधं कटकं सानुर्यत्रेति तत्पर्यन्तोऽपि करग्रहणात्। 'कटकं वलये सानौ' इत्यमरः। 'करो वर्षोपले रश्मौ पाणौ ग्राह्येभशुण्डयोः' इति विश्वः। कान्तिमदिति। कान्तिमत्कान्तियुक्तं वेदिवत् क्रिमिविशेषवन्मध्यं यासामिति। पक्षे—कान्तिमद् वेदिमध्यमन्तर्वेदिर्यत्र तास्तथा। यद्वा वेदिः परिष्कृता भूमिः मध्यं मध्यदेशः। 'वेदिः क्रिमिविशेषे स्याद्देशे संस्कृतभूतले' इति विश्वः। अङ्गेति। अङ्गलक्ष्म्या देहलक्ष्म्या भङ्गिं भजन्ते यास्ताः।

---

१. 'मनोज्ञा अनुदिनम्' मूलपाठः.

पक्षे—अङ्गो देशविशेषः। परीति। परितो मिलदलकः शोभनकेशविन्यासः। पक्षे—परिमिलितालका नगरी यत्र। तथा—प्रोल्लसत् प्रकर्षेणोल्लसत्काममतिशयितं कामनाविषयं वा रूपं सौन्दर्यं यासां तास्तथा। पक्षे—देशविशेषः कामरूपः॥

कूर्माकारं चरणयुगलं धूतदिग्दन्तिशुण्डा-
दण्डावूरू भुजयुगमपि व्यक्तनागेन्द्रशोभम्।
प्रायः पृथ्वीधरणविषये तत्समर्थान्पदार्था-
नेकीकृत्य त्रिभुवनसृजा निर्मिता यस्य मूर्तिः॥ २७॥

यस्य चरणयुगलं कूर्माकारं कूर्मसदृशम्। पृष्ठोन्नतमित्यर्थः। तदुक्तं सामुद्रिके—'कूर्मोन्नतौ च चरणौ मनुजेश्वरस्य' इति। केचित्तु—कूर्मस्याकाशे यत्र रेखादिना कूर्माकारत्वयोगादिति। यस्य ऊरू धूतदिग्दन्तिशुण्डादण्डाविति धूतौ निरस्तौ दिग्दन्तिनः शुण्डादण्डौ याभ्यां तौ। तथा—यस्येति सर्वत्रानुषज्यते। भुजयुगलमपि बाहुद्वयमपि व्यक्तनागेन्द्रशोभं व्यक्ता नागेन्द्रवच्छोभा यस्य तत्तथा। तत्सदृशमित्यर्थः। आजानुलम्बित्वेन दैर्घ्याद्वासुकिसमानम्। यद्वा नागेन्द्रस्य हस्तिनः शुण्डादण्डो लक्ष्यते। तदुक्तं सामुद्रिके—'करिकरसदृशौ वृत्तावाजानुलम्बिनौ पीनौ। बाहू पृथ्वीश्वराणामधर्मिणां रोमशौ ह्रस्वौ॥' इति। प्रायो बाहुल्येन यस्य मूर्तिः शरीरं त्रिभुवनसृजा ब्रह्मणा पृथ्वीधरणविषये भूधारणार्थं तत्समर्थान् पदार्थानेकीकृत्य विशकलितानितस्ततः आहृत्य वर्तुलीकृत्य निर्मिता सृष्टेति। कार्यविशेषेण कारणविशेषानुमानादिति कूर्मदिग्वारणनागराजानां त्रयाणां पृथ्वीधारकत्वादिति॥

कस्त्राता कामदेवः समरविजयिनां कोऽग्रणीः कामदेवः
कस्त्यागी कामदेवः सरसकविगिरां किं पदं कामदेवः।
कः सेव्यः कामदेवः श्रितभरणविधौ कः कृती कामदेवः
प्रश्नानामेकमेकप्रतिवचनमहो रामवत्कामदेवः॥ २८॥

एवंविधानां प्रश्नानां प्रतिवचनमुत्तरमेकः कामदेव एव नान्य इति रामवत् राम इव। 'तेन तुल्यं क्रिया चेद्वतिः'। प्रश्नस्वरूपमाह—कस्त्रातेत्यादि। त्राता पालकः कः कथ्यते इति प्रश्ने कामदेव एवोत्तरं जायते नान्यदिति। यथा कस्त्रातेति प्रश्ने राम इति कश्चिदुत्तरं ददाति। इति। एवं सर्वत्र। समरविजयिनां सांग्रामिकाणां मध्येऽग्रणीः क इति प्रश्ने कामदेव एवोत्तरम्। कस्त्यागी कः त्यागवानिति दातेति कामदेवो नान्यः। यद्यपि त्यागदानयोरौपाधिकभेदस्तथापि सामान्येनोपन्यासः। त्यागस्वरूपे परस्वत्वापत्तिर्न विवक्षिता। दाने च परस्वत्वापत्तिर्विवक्षिता इति भेदः। एवं यागहोमपूजादावपि विशेषोऽस्ति। तदत्र विस्तरभयान्न लिखितः। तद्विवेकाधिकार एव तद्विवरणमिति।

सरसकविगिरामिति । सरसानां शृङ्गारादिरसयुक्तानां कविवाणीनां पदं स्थानं किम् । इति प्रश्नान्तरम् । कामदेव इति उत्तरम् । श्रित इति । श्रित आश्रितः सेवकादिः तस्य भरणविधौ कः कृतीति प्रश्ने कामदेव इत्युत्तरम् । 'कृतिनौ दक्षपण्डितौ' इति विश्वः ॥

जित्वा शत्रून्स्वमभिविशतो धाम हर्म्याग्रलग्ना
भावोद्भेदाद्गलितगतयो लोलमालायताक्ष्यः ।
प्रान्तप्रेङ्खच्छफरकनकस्तम्भशोभैर्निजाङ्गैः
सीमन्तिन्यो विदधति दृढं यस्य मीनध्वजत्वम् ॥ २९ ॥

सीमन्तिन्यो विलासिन्यो यस्य मीनध्वजत्वं कंदर्पत्वं दृढं विदधति पुष्णन्ति । मीनरूपो ध्वजो यस्य यौगिकं नाम मीनरूपध्वजस्य भावान्मीनध्वजत्वमस्येति गौणत्वादिति । कैरित्याह—निजैरङ्गैरिति । स्वशरीरैरित्यर्थः । किंविशिष्टैः । प्रान्ते समीपे प्रेङ्खच्चलच्छफरो मत्स्यविशेषो यत्र एवंभूतो यः कनकस्तम्भस्तद्वच्छोभा येषामिति तैरिति । अन्योऽपि ध्वजः कनकदण्डे निबध्यते, मीनोऽयं कनकदण्डे ध्वजः, स एव तथेति तात्पर्यम् । वस्तुतः कंदर्पसादृश्यमुक्तम् । कुत एवमित्याह—हर्म्याग्रलग्ना इति । हर्म्याग्रे हर्म्यशिखरे लग्नाः स्थिताः सीमन्तिन्य इति । तस्य किंविशिष्टस्य । शत्रून् जित्वा स्वं धाम गृहमभिविशत इत्यर्थः । अत एव भावोद्भेदाद्गलितगतयस्तद्दर्शनसंजातसात्त्विकभावान्मन्थराः स्तम्भोपमाः स्थिता इति । 'स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका गुणाः ॥' इति भरतोक्तम् । 'आकुलितगतयः' इति पाठान्तरम् । भावोद्भेदेनाकुलिता गतयो यासामिति । लोलं चञ्चलं मालावत् स्रगिवायतं दीर्घमक्षि यासां तास्तथोक्ताः । 'लोलमान–' इति पाठे लोलमानानि चञ्चलानि दीर्घाणि चक्षूंषि यासामिति वा । 'लोलमीन–' इति पाठे चक्षुषो मीनतुल्यत्वम् । राजदर्शनसंजातस्तम्भानां तासामङ्गनानां यष्टिसाम्यमिति । स्फुटात्र मीनध्वजतेति उत्प्रेक्ष्यमिति ॥

योषावेषो विषधरगृहं केशमोक्षोऽम्बुगर्भः
शष्पग्रासः शबरशिबिरं शम्बरत्वङ्निचोलः ।
पाण्योः शाखाः कवलनविधिर्धारणं कण्ठदाम्नां
यच्छत्रूणां भवति भुवने जीवनोपायवर्गः ॥ ३० ॥

भुवने लोके यस्य शत्रूणां द्विषां जीवनोपायवर्गः कार्पण्यसमूह एवमनेन प्रकारेण भवतीति तन्निदर्शयति—योषावेषोऽलंकरणं आकारो वा योषावेषः स्त्रीरूपत्वम्, स्त्रीणामवध्यत्वात् । तदुक्तम्—'अवध्या हि स्त्रियो राजंस्तिर्यग्योनिगतैरपि' । योषाया वेषो यत्रेति वा । विषधरगृहं पातालम् । तत्प्रवेश इति शेषः । यद्वा—विषधरगृहं कलत्रं मम स्वामिवधो यदि त्वया कर्तव्यस्तदा विषभक्षणे स्त्रीवधं दास्यामीति विषधररक्षणादेवंरूपत्वमिति । 'गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि' इति मेदिनीकरः । विषधरवद्गृहं वा अ-

तिसंगुप्तत्वाद्बिलवद्गृहमिति विषधरयुक्तं वा गृहमारण्यवासित्वात् । केशमोक्ष इति । केशस्य कचस्य मोक्षो मोक्षणं त्यागो यत्रेति मुण्डनं वा व्रतादिधारणलिङ्गादवध्यत्वख्यापनमिति व्रतिनो ह्यवध्यत्वादिति । केशमोक्षः केशाबन्धनमिति वा । अम्बुगर्भ इति । जलधिप्रवेश इत्यर्थः । शष्पग्रास इति । शष्पं नवतृणं ग्रासः कवलम् । मुखेन तृणग्रहणमिति पशुरूपताख्यापनमिति वा । शबरशिबिरमिति । तत्प्रवेश इति शेषः । शबरः पर्वतवासी तस्य शिबिरमवस्थानमिति । यथा शबरः पर्वते वसति, तथासावपि पर्वतवासीत्यर्थः । यद्वा शबरश्चण्डिकापतिस्तच्छिबिरमिति तपस्विरूपत्वात् जटाधारणादिति । 'चण्डालभेदे पानीये शबरश्चण्डिकापतौ' इति मेदिनीकरः । शम्बरत्वगिति । शम्बरस्य मृगविशेषस्य त्वक् चर्म निचोलः परिच्छदो यस्य स तथा शबरत्वङ् निचोलो वा । जीवनोपायवर्ग इति । 'शंबरो दैत्यहरिणमत्स्यशैलजिनान्तरे' इति मेदिनीकरः । तद्धारणेन व्याधरूपत्वप्रकाशनात् करुणया अवध्यत्वम् । तद्रूपा वृत्तिर्वा । पाण्योरिति । पाण्योर्हस्तयोः । शाखा अङ्गुलयः । कवलनविधिः कवलनविधानम् । मुखे अङ्गुलीप्रवेशनमिति । कण्ठे गले च दाम्नां रज्जूनां धारणमारोपणं गलपाशत्वात् ॥

विशिष्टगीता धृतवंशदीप्तिः श्रुतिप्रतिष्ठा पुरुषार्थसूतिः ।
सन्मार्गविस्तारवती सुजातिर्यं भारतश्रीर्भजतेऽभिरामा ॥ ३१ ॥

यं राजानं भारतश्रीर्भजते सेवते । भारतस्य व्यासोक्तग्रन्थविशेषस्य भारतस्य भरतापत्यविशेषस्य युधिष्ठिरादेर्वा भारतस्य भारतखण्डस्य वा । 'व्यासर्षिभाषिते ग्रन्थे जम्बुद्वीपे च भारतम्' । साधारणानि विशेषणान्याह—विशिष्टगीतेति । विशिष्टा गीता उपनिषद्विशेषो यत्र । पक्षे—विशिष्टेन सज्जनेन गीता शब्दिता विशिष्टगीतेति । राजलक्ष्मीरपि विशिष्टेन महत्तरेण गीतेति । 'गीतं शब्दितगीतयोः' इति विश्वः । विशेषेण शिष्ट आचारवान् गीतः ख्यातो यत्र वा । 'वेदप्रामाण्यस्वीकर्ता शिष्ट इत्युच्यते बुधैः' इति । विशिष्टा अन्येभ्य उत्कृष्टा गीता ख्याता वेति वा । धृतेति । वंशस्य वंशानुचरितस्य दीप्तिर्यत्र । पक्षे—धृता वंशस्य निजान्ववायस्य दीप्तिर्यया सा तथोक्ता । अयमपि स्ववंशप्रकाशक इति । 'पुंसि वंशः कुले वेणौ पृष्ठावयववर्गयोः' इति मेदिनीकरः । धृता वंशेन वेणुना दीप्तिः शोभा यत्र भारतलक्ष्म्यां सा तथा । धृता वंशप्रकाशनवन्मणिदीप्तिर्यत्रेति वा । श्रुतिप्रतिष्ठेति । श्रुतौ वेदे प्रतिष्ठा ख्यातिर्यस्याः सा तथा, उपनिषद्विशेषत्वात् । श्रुतौ श्रवणे प्रतिष्ठा यत इति वा, शब्दरूपत्वात् । पक्षे—श्रुतौ वेदे प्रतिष्ठा यस्याः । 'हिरण्यवर्णां—' इत्यादि ऋग्वेदे तथोक्तिः । राजापि श्रुत्या वेदेन प्रतिष्ठितः । 'प्रतिष्ठा गौरवे क्षितौ' इति विश्वः । 'श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्त्तयोः स्त्रियाम्' इति मेदिनीकरः । श्रुता वायवान्ते (?) प्रतिष्ठा यस्या इति पक्षान्तरम् । पुरुषार्थस्य धर्मादिचतुष्टयस्य सूतिरुत्पत्तिर्यत्र सा तथा । यदाकर्णनाद्धर्मार्थयोरुत्पत्तिः । पक्षे—पुरुषार्थस्य पुरुषप्रयोजनस्य वा सूतिरुत्पत्तिर्यस्याः सा

तथा पौरुषजनक इत्यर्थः । पक्षे—पुरुषाणामर्थस्य धनस्य सूतिर्यस्याः सा तथा । 'शब्दानामभिधेयेऽपि निवृत्तौ च प्रयोजने । स्यादर्थः पुंसि विषये द्रव्यकारणवस्तुषु ॥' इति विश्वः । पुरुषविषयस्य सूतिर्यत्रेति वा । कर्मभूमित्वाद्भारतखण्डस्येति । सन्मार्गविस्तारवतीति सन् श्रेष्ठो यो मार्गः तस्य विस्तारो यत्र तादृशी । पक्षे—सतः सदाचारस्य यो मार्गो वर्त्म तद्विस्तारवती । 'मार्गो मृगमदे मासप्रभेदेऽन्वेषणाध्वनोः' इति विश्वः । सुजातिः शोभना जातिर्ब्राह्मणत्वादिर्यत्र । शोभनानां पुरुषाणां जातिर्जन्म(?) । पक्षे—सुजातिरुत्कृष्टवंशवती । पक्षे—शोभना जातिर्यतः । सुजातिः श्लाघ्यो गुणी शूरो बुद्धिमान् । अभिरामेति । [1]अभिर्भयशून्यो रामो रामभद्रः बलभद्रो वा यत्रेति वा । पक्षे अभिरमतीति अभिरामो यत्रेति वा । असावप्यभिराम इति । अथवा—भा प्रभा दीप्तिः, रतं संभोगः, श्रीर्लक्ष्मीः संततं सेवते इति द्वन्द्वसमासः । परवाल्लिङ्गतया भारतश्रीरिति [2]रूपम् । विशिनष्टि विशेषतः शिष्टेन मान्येन साधुजनेन वा गीता । पक्षे—विशिष्टं गीतं गानं यत्र तत्तथा । लिङ्गव्यत्ययेन(?) विशेषणम् । पक्षे—विशिष्टेन पण्डितेन गीता स्तुतेति । धृतेति । धृता वंशस्य दीप्तिर्यया । पक्षे—धृता वंशस्यान्ववायस्य दीप्तिः प्रकाशनं ययेति । श्रुतीति । श्रुत्यैव श्रवणमात्रेण प्रतिष्ठा यस्याः सा तथा । पक्षे—श्रुतौ कर्णे प्रतिष्ठा यत्र । श्रूयते एव परं न केनापि दृश्यते । इति लिङ्गव्यत्ययः । पक्षे—श्रुतौ वेदे प्रतिष्ठा यस्या इति । पुरुषेति । पुरुषार्थस्य कामस्य सूतिर्यत्र । पक्षे—पुरुषाणामर्थस्य पौरुषस्य वा सूतिर्यत इति । सन्मार्गेति । सतः श्रेष्ठस्य मार्गस्य मृगमदस्य विस्तारो यत्र । पक्षे—सतां मार्गस्य विस्तारो यत्रेति । सुजातिरिति । शोभना जातिरुत्पत्तिर्यस्यामिति । पक्षे—शोभना जातिः पुष्पविशेषो यत्र । शोभना जातिः पद्मिनीत्यादिः स्त्रीजातिविशेषो वा यत्र । पक्षे—शोभना जातिर्वंशो यत इति । अभिरामेति । अभिरामा मनोहरा इत्यर्थः । पक्षे—अभिरामेत्यत्र लिङ्गव्यत्ययः । पक्षे—अभिरामयति सौन्दर्यादिनेति । अपरं विस्तरभयान्न लिखितमिति ॥

छत्रचन्द्रमसि यस्य निर्मले लोकतापम[3]पहर्तुमुद्यते ।
कुड्मलीभवति वैरिभूभृतामातपत्रशतपत्रसंततिः ॥ ३२ ॥

यस्य राज्ञश्छत्रं चन्द्रमा इव छत्रचन्द्रमाः तस्मिन्निर्मले स्वच्छे लोकानां तापं संतापमपहर्तुं निवारयितुमुद्यते सति वैरिभूभृतां विपक्षराज्ञां(?) आतपत्रशतपत्रसंततिः पद्मसदृशच्छत्रपङ्क्तिः कुड्मलीभवति मुकुलीभवति । संकुचिता भवतीत्यर्थः । चन्द्रोदये पद्मानां संकोचो जायते, इत्युचितम् । एतस्य च्छत्रे उदिते सति विपक्षाणां पराजयो भवति कुतः संमुखागमनमिति प्रतापातिशयशालित्वमुक्तमिति ॥

---

१. 'दृढभक्तिः' इत्यत्रेव सामान्ये नपुंसकत्वाङ्गीकारेण 'अभि भयशून्यम्' इति पाठोऽङ्गीकार्यः, अन्यथा ह्रस्वानुपपत्तिः. २. इतरेतरयोगद्वन्द्वत्वे एकवचनानुपपत्तिः, समाहारद्वन्द्वे दीर्घानुपपत्तिरिति चिन्त्यमेतत्. ३. 'अपहन्तुम्' कलि०.

औदार्ये रघुनाथधर्मसुतयोस्तत्सोदराणां पुनः
सौभ्रात्रे पतिदेवताव्रतविधौ पृथ्वीसुताकृष्णयोः।
श्रीरामायणभारतार्णवकृतेष्वाख्यानरत्नेषु च
श्रेयान्संप्रति कामदेवनृपतिः कौतूहली वर्तते॥ २३॥

कामदेवनृपतिरिदानीं कौतुकवान् वर्तते। कुत्रेति। औदार्ये इति। रघुनाथस्य रामभद्रस्य धर्मसुतस्य युधिष्ठिरस्य चौदार्ये उदारत्वे। तद्वर्णन इति भावः। उदारस्य भावः कर्म वा औदार्यमिति। अन्यत्रापि च। तत्सोदराणां भरतादीनां भीमादीनां च सौभ्रात्रे च सौहृदे च। तथा—पृथ्वीसुतायाः सीतायाः कृष्णाया द्रौपद्याश्च पतिदेवतारूपस्य व्रतनियमस्य विधाने करणे तयोर्विवाहे वा। तथा—रामायणं वाल्मीकिरचितं, भारतं व्यासरचितं दुरवगाहत्वेन तौ समुद्राविव तत्र कृतेषु प्रतिपादितेष्वाख्यानरत्नेषु कथारूपेषु रत्नेष्वित्रति श्रेयान् श्रेष्ठः। नृपतिविशेषणम्॥

राज्यचिन्तां विहायैतद्गोष्ठ्यां को विशेषस्तत्राह—

ज्ञानं जृम्भयति श्रियं विशदयत्यानन्दमुद्दीपय-
त्याधत्ते मतिपाटवं वितनुते वाचां समीचीनताम्।
प्रत्यक्षीकुरुते पदार्थनिवहं ख्यातिं प्रतिष्ठापय-
त्यन्यः को नृपतेर्विनोदविभवः सत्सूक्तिगोष्ठीरसात्॥ २४॥

सतां सूक्तिः श्रेष्ठा वाणी सती वा सूक्तिः तया या गोष्ठी संलापः परस्परालापः तत्र रसादनुरागातिशयात्। आसङ्गादिति यावत्। नृपतेर्विनोदस्य उद्वेगापनयनस्य सुखविशेषस्य विभवः प्रभुत्वमन्यः कोऽस्ति। अपि तु न कोऽपि तस्मादस्तीत्यर्थः। 'गोष्ठी सभासंलापयोः स्त्रियाम्' इति मेदिनीकरः। 'रसोऽनुरक्तौ मात्सर्ये' इति विश्वः। कुत एवमित्याह—ज्ञानं जृम्भयति वर्धयति। विशिष्टतां प्रापयतीत्यर्थः। सदसद्विवेकात् सर्वत्र गोष्ठीरसस्यैव कर्तृत्वमिति। श्रियमिति। श्रियं लक्ष्मीं वाणीं वा विशदयति विशदां करोति प्रकाशोत्कर्षप्रापणात्। आनन्दमुद्दीपयति उज्ज्वलं करोति सुखहेतुजननात्। मतिपाटवं बुद्धिकौशल्यमाधत्ते प्रहेलिकाद्यर्थबोधनात्। वाचां वाणीनां समीचीनतामुत्कर्षं वितनुते विस्तारयति, उत्कृष्टवादित्वात्। पदार्थनिवहं शब्दानामभिधेयसमूहं प्रत्यक्षीकुरुते ज्ञापयति, वाच्यवाचकावगमात्। ख्यातिं प्रसिद्धिं प्रतिष्ठापयति प्रतिष्ठाविधाता। यद्वा—गुर्वीं करोति। 'प्रतिष्ठा गौरवे स्थितौ' इति विश्वः। 'श्रीर्वेशरचनाशोभाभारतीषु च संपदि' इति विश्वप्रकाशः। केचित्तु—'ज्ञानं हेयोपादेयविषयां बुद्धिं जृम्भयति प्रस्तारयति। ततश्च श्रियं शोभां कान्तिं तेजो विशदयति। दानादिना धनादीनां सफलीकरणात् श्रियं लक्ष्मीमिति वा। ततश्चानन्दमुद्दीपयति। निःश्रेयसाधिगमेन। ज्ञानकर्मणोर्हेतुत्वेन श्रुतेः।

ततश्च मतिपाटवमाधत्ते मतेरात्मनश्च । अर्थादात्मनः पटुतामादधाति' आत्मविषयानुमितिहेतुत्वात् । ततोऽपि वाचां समीचीनतां सत्यं वितनुते कर्तव्यनिश्चयात् । ततश्च निदिध्यासनादिना पदार्थनिवहं प्रमाणादिपदार्थं साक्षात्कुरुते । ततश्च ख्यातिमात्मनः साक्षात्कारं प्रतिष्ठापयति स्थिरीकरोति । पुरुषार्थचतुष्टयाधिगमोऽप्यत एव भवतीति ॥

तस्यावदातैः कविसूक्तिसूत्रैः संस्यूतनानागुणरत्नराशेः ।
विनोदहेतोः कविराजसूरिर्निबन्धनद्वन्द्वमिदं विधत्ते ॥ ३५ ॥

कविश्चासौ राजा चेति कविराजः । सूरिः पण्डितविशेषः । कविराजेषु सूरिरिति वेति पुरुषोत्तमवत्समासः । स इदमग्रे वक्ष्यमाणं निबन्धनद्वन्द्वं निबन्धनयुग्मं रामायणभारतरूपकथाद्वयमेकरूपेण वाक्येन भासमानं विधत्ते विदधाति । किमर्थमित्याह—तस्येति । तस्य राज्ञः कामदेवस्य विनोदाय प्रीत्यर्थम् । किंविशिष्टस्य । कवीनां सूक्तिसूत्रैः शोभनोक्तिरूपैः अवदातैर्विशुद्धैः संस्यूताः संबद्धीकृता ग्रथिता नानागुणाः काव्यालंकाराः श्लेषादय एव रत्नराशयो यस्य स तथा । पुरुषगुणा इति च । 'सूत्रं तन्तुव्यवस्थयोः' इति विश्वः । 'स्यूतः प्रसेवकः' इति मेदिनीकरः । अन्यस्यापि रत्नराशेः सीवनं ग्रन्थनं सूत्रेणैव क्रियते इत्युक्तिः ॥

श्रीरामायणमाणिक्यं भारतस्वर्णमुद्रितम् ।
न कस्य कुरुते लोके विस्मयोल्लासि मानसम् ॥ ३६ ॥

श्रीरामायणं रामचरितं माणिक्यमिव, भारतं पाण्डवचरितं सुवर्णमिव, तेन मुद्रितं संबद्धं सत् श्रीरामायणमाणिक्यं कण्ठे कस्य मानसं चित्तं विस्मयोल्लासि आश्चर्योल्लासितं न कुरुते । अपि तु सर्वस्यैव कुरुत इति । अथ च माणिक्यं सुवर्णमुद्रितं हिरण्यखचितं सुवर्णाङ्गुलीयसंगतं वा मानसं सर्वस्यैव विस्मितं करोतीति । केचित्—'श्रीरामायणमाणिक्यभारतस्वर्णमुद्रितम्' इति समस्तमाहुः । तत्र श्रीरामायणमाणिक्येन भारतस्वर्णेन च संबद्धं यत् निबन्धनमिति प्रस्तावेन लभ्यते । तत्कस्य मानसमेवं न कुरुते इत्यर्थः । सर्वथोपादेयता ममैतन्निबन्धनस्य भविष्यतीति भावः ॥

अथ प्रारिप्सितकाव्यस्य परिपाटीं श्लोकद्वयेन प्रतिजानीते—

प्रायः प्रकरणैक्येन विशेषणविशेष्ययोः ।
परिवृत्त्या क्वचित्तद्वदुपमानोपमेययोः ॥ ३७ ॥
क्वचित्पदैश्च नानार्थैः क्वचिद्वक्रोक्तिभङ्गिभिः ।
विधास्यते मया काव्यं श्रीरामायणभारतम् ॥ ३८ ॥

प्राय इति । अग्रिमेण श्लोकेन सहान्वयः । मया युग्मकं काव्यं विधास्यते । विधातुमारभ्यत इति संबन्धः । तत्र प्रकारमाह—क्वचिदिति । क्वचित्प्रकरणस्य प्रस्तावस्यै-

क्येन भासनम् । प्रकरणात्प्रस्तावादैक्येन वर्णनमिति वा । विशेषणविशेष्ययोः परिवृत्त्या परिवर्तनेन । एकत्र विशेषणं तस्य विशेष्यत्वम्, अपरत्र विशेष्यस्य विशेषणतेति । क्वचिदुपमानोपमेययोः परिवृत्त्या । यदेवैकत्रोपमानं तदेवान्यत्रोपमेयम् । यदेवैकत्रोपमेयं तदेवान्यत्रोपमानमिति । क्वचिन्नानार्थैः पदैरिति । अनेकार्थवाचकैरित्यर्थः । क्वचिच्च वक्रोक्तिभङ्गिभिरिति । वक्रोक्तीनां विवर्तनैः । वक्रोक्तिभिर्भङ्गिभिरिति वा । एवं प्रकारेण रामायणभारतं राघवपाण्डवीयकाव्यं विधास्यत इति ॥

नात्र लोभाश्रयणमित्याह—

पदमेकमपि श्लिष्टं वक्तुं भूयान्परिश्रमः ।
कथाद्वयैक्यनिर्वोढुः किं धरापतितोऽधिकम् ॥ ३९ ॥

एकमपि पदं वाक्यं सुप्तिङन्तं वा श्लिष्टं श्लेषालंकारयुक्तं वक्तुमभिधातुं भूयान् महान् परिश्रमो भवति । अतो दुष्करं तदित्यर्थः । धरापतितः पृथ्वीपतेः कामदेवभूपतेः किमधिकम् । अपि तु ततो नाधिकं किमपीति । तत्प्रसादेन किं कर्तुं दुष्करमित्यर्थः । कथाद्वयैक्यनिर्वोढुरिति । कथाद्वयस्य रामायणभारतरूपस्यैक्येन निर्वोढुर्निर्वाहकस्य । तत्समाप्तिकर्तुरित्यर्थः । कथाद्वयैक्यनिर्वाहे महान् परिश्रम इति भावः । 'वितर्कहीनसंप्रश्नकुत्साक्षेपादिकेषु किम्' इति शब्दप्रकाशः । कण्ठाभरणे श्लेषलक्षणम्—'एकरूपेण वाक्येन द्वयोर्भणनमर्थयोः । तन्त्रेण तच्च सर्वज्ञैः श्लेष इत्यभिधीयते ॥ प्रकृतिप्रत्ययस्थौ द्वौ विभक्तिवचनाश्रयौ । पदपादो(?)त्तरौ चेति शब्दश्लेषा भवन्ति षट् ॥' इति । उदाहरणं तु तत्र व्यक्तीभविष्यति ॥

श्रीमद्रामायणं गङ्गा भारतं सागरो महान् ।
तत्संयोजनकार्यज्ञौ[1] कविराजभगीरथौ ॥ ४० ॥

श्रीयुक्तं रामायणं रामचरितं गङ्गेव भागीरथीव, पवित्रत्वहेतुत्वात् । भारतं पाण्डवचरितं महान् सागरः समुद्रः, अनवगाहत्वात् । उभयत्रोभयसाम्यं नैर्मल्यादिगुणेन वा व्यस्तरूपकमिदम् । तयोः संयोजनकार्यज्ञौ संमिश्रणकार्यकुशलौ । कविराजभगीरथाविति । रामायणभारतयोः संमिश्रणकर्ता कविराजः, गङ्गासागरयोः संमेलनकर्ता भगीरथ इति क्रियासाम्यमत्रेति । कविराजो भगीरथ एवेत्यर्थः ॥

सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः ।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा ॥ ४१ ॥

सुबन्धुर्वासवदत्ताग्रन्थकर्ता, बाणभट्टश्च कादम्बरीकारः, कविराजोऽयं ग्रन्थकर्ता इति त्रयः कवयः वक्रोक्तिमार्गे श्लेषाद्युक्तौ निपुणाः कुशलाः । नान्यश्चतुर्थ उपपद्यते । कुशलो नान्य इत्यर्थः । अथवा 'बहुरत्ना वसुंधरा' इत्यतो वा विद्यते कुत्रेत्यर्थः ॥

---

1. 'तत्संयोजनकार्यज्ञः कविराजो भगीरथः' कलि०.

स्वकाव्यप्रकाशमाह—

रम्या[1] रामायणी यैषा भारती सैव भारती[2] ।
अर्धनारीश्वरमयी मूर्तिरेकैत्र[3] ...तताम् ॥ ४२ ॥

या भारती वाणी रामायणरूपा सैवैषा रम्या मनोहारिणी । भारती वाणी भारती भारतरूपार्धनारीश्वरमयी उभयरूपघटितैका मूर्तिः शरीरमिव शोभताम् । राजतामित्यर्थः । अर्धनारीश्वरमयीति तत्तुल्यत्वख्यापनार्थमिति । उभयमेलनेन साम्यमिति ॥

एकत्र चन्द्रातपसुन्दरस्य पार्श्वेऽपरस्मिन्स्फुरदुष्णभासः ।
अयं सुमेरोरनुयाति लीलां कथाद्वयाश्चर्यपदं प्रबन्धः ॥ ४३ ॥

अयं प्रबन्धः कविराजकृतग्रन्थविशेषः सुमेरोः पर्वतस्य लीलां विलासमनुयाति अनुगच्छति । सदृशीं करोतीत्यर्थः । किंभूता । कथाद्वयेन रामायणभारतरूपेणाश्चर्यपदमाश्चर्यहेतुराश्चर्यस्थानमिति । 'पदं वाक्ये च शब्दे च व्यवस्थाव्यपदेशयोः । पादं तच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः ॥' इति मेदिनीकरः । कुत इत्याह—एकत्रैकस्मिन् प्रदेशे पर्वतस्य काव्यस्य वा । चन्द्रातपसुन्दरस्य चन्द्रस्यामृतकिरणस्यातपेन मयूखेन सुन्दरस्य । पक्षे—चन्द्रस्य सोमवंशोद्भूतस्य राज्ञ आतपेन प्रतापेन सुन्दरस्य । अपरस्मिन् पार्श्वे स्फुरदुष्णभासः स्फुरदादित्यस्य । पक्षे—स्फुरत्सूर्यवंशादिपुरुषस्य । ते इत्यन्तस्य? राज्ञ इति वा । स्फुरन्नुष्णभाः सूर्यो यत्रेति ॥

स्वकाव्यस्य तीर्थरूपतामाह—

मनोज्ञरामायणभारताख्यभागीरथीसागरसंनिपाते ।
सन्तः प्रकुर्वन्त्ववगाहलीलामस्मिन्नघच्छेदिनि काव्यतीर्थे ॥ ४४ ॥

अस्मिन् काव्ये तीर्थसदृशे सन्तः सज्जना अवगाहलीलामध्यापनादिमज्जनक्रीडां कुर्वन्तु । किंविशिष्टे । अघस्य कलुषस्य छेदिनि दुरितादिनिवारके । 'अघं तु व्यसने दुःखे दुरिते च नपुंसकम्' इति मेदिनीकरः । मनोज्ञस्य रामायणभारताख्यस्य तन्नामकस्य भागीरथीसागरस्य संनिपातो मिलनं यत्र तस्मिन्निति । पापनाशकत्वेन गङ्गासागरसंगमस्याख्यानमिति । 'तीर्थं यात्राध्वरक्षेत्रापापनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ॥' इति मेदिनीकरः ॥

कवीनां परिश्रमाधिक्यात्प्रजापतिसमत्वं दर्शयति—

विस्तारितागाब्धिपुरीवनान्तां संदर्शितेन्द्वर्कदिनर्तुशोभाम् ।
सृष्टिं कविः सूक्तिमयीं वितन्वन्प्रजापतेः किं न समानमल्लः[4] ॥ ४५ ॥

शोभनातिशयितोक्तिस्तन्मयीं सृष्टिं सर्गं वितन्वन् विस्तारयन्नयं कवी राघवपाण्डवीयकर्ता प्रजापतेः स्रष्टुः समानमल्लस्तुल्यमल्लः किं न । अपि तु तुल्यमल्ल एव । उभयं

---

१. 'रम्यं रामायणं' कलि०. २. 'भारतम्' कलि०. ३. 'एकैव' कलि०. ४. 'मयः' काश्मीरिक०. ५. 'यत्नः' कलि०.

विशिनष्टि—विस्तारितेत्यादि । विस्तारितोऽगः पर्वतः, अब्धिः समुद्रः, पुरी नगरी, वनान्तो वनया[त्रा च य]त्रेति । समानकारा पर्वतादिसृष्टिः । सर्वपदार्थस्य विश्वस्य कार्यत्वादिति । ग्रन्थे तेषां वर्णनात् । संदर्शितो वर्णितः प्रकाशितो वा इन्दोश्चन्द्रस्यार्कस्य सूर्यस्य दिनस्य ऋतूनां च शोभा यत्र । प्रजापतिना समुत्पादनेन चन्द्रादयः प्रकाशिताः, कविना वर्णनेनेति श्लेषः ॥

भ्रान्तेः पुरुषधर्मत्वात्स्वौद्धत्यं परिहरन्प्रार्थयते—

दोषान्धकारव्यपसारणेन गुणाम्बुजोन्मीलननित्यदक्षाः ।
सन्तः प्रबन्धं मम शोधयन्तु लोकं मयूखा इव चण्डरश्मेः ॥ ४६ ॥

सन्तः साधवः मम प्रबन्धं मत्कृतं काव्यं शोधयन्तु शुद्धं कुर्वन्तु । चण्डरश्मेरादित्यस्य मयूखाः किरणा लोकमिवेति । शुद्धं प्रकाशितमित्यर्थः । कुत इत्याह—दोषेति । अन्धकारतुल्यस्य दोषस्यापशब्दस्यापसारणेन दूरीकरणेन । पक्षे—दोषा रात्रयस्तासामन्धकारस्यापसारणेन । 'दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि च' इति मेदिनीकरः । दोषस्य पापस्य, अन्धकारस्य तमसश्चेति वा । आदित्योदये कर्माधिकारात् । स्नानादिना पापनोदनादिति । गुणेति । अम्बुजतुल्यानां पद्मसदृशानां गुणानामुन्मीलने प्रकाशने दक्षाः कुशला इति । हेतुगर्भविशेषणम् । सूर्यकिरणा अपि पद्मं प्रकाशयन्ति । सज्जनाश्च गुणान्प्रकाशयन्ति ॥

सतामेवात्र योग्यत्वमिति व्यतिरेकेणाह—

अनध्वन्याः काव्येष्वलसगतयः शास्त्रगहने-
ष्वदुःखज्ञा वाचां परिणतिषु मूकाः परगुणे ।
विदग्धानां गोष्ठीष्वकृतपरिचर्याश्च खलु ये
भवेयुस्ते किं वा कविभणितिकण्डूतिनिकषाः ॥ ४७ ॥

ते तादृशा जनाः कविभणितिषु काव्येषु कण्डूतिनिकषाः काव्यपरीक्षकाः किं भवन्ति । अपि तु न भव[न्ती]ति । हिरण्यस्यापि परीक्षा कषाभावे न भवतीति भावः । केनेत्याह—अनध्वन्या इत्यादि । अध्वानमलं गच्छन्तीत्यध्वन्याः । 'अनुग्वलंगामी' इत्यधिकृत्य 'अध्वनो यत्खौ' इति यत् । 'ये चाभावकर्मणोः' इति प्रकृतिभावः । ततो नञ्समासे अनध्वन्या इति । काव्यकर्मांज्ञा इत्यर्थः । अलसेति । शास्त्रमिव गहनं शास्त्रगहनं तत्रालसगतयः । अक्रियत्वादनभिज्ञा इत्यर्थः । अदुःखज्ञा इति । वाचां परिणतिषु परिपाकेषु अदुःखज्ञाः । काव्यादिकरणे चित्तादिना यद्दुःखं जायते तदनभिज्ञाः । मूका इति । परगुणे अन्यस्य गुणकीर्तने मूका असमर्थाः स्वातिरिक्तानां गुणोच्चारणे विमुखाः । उदासीना इति यावत् । मूढा इति पाठान्तरम् । तत्र परगुणे श्रेष्ठगुणे मूढा अज्ञाः ॥ विदग्धानां विशिष्टानां कवीनां गोष्ठीषु न कृता परिचर्या उपजीवनं यैस्ते तथा । एतद्व्यतिरिक्ताः काव्यपरीक्षकाः स्युरित्यर्थः ॥

तत्त्वज्ञानां प्रवृत्तिरत्रावश्यं वर्तत एवेत्याह—

असद्भिरारोपितदूषणापि न सूक्तिरार्यैरवधीर्यतां मे ।
पीत्वोज्झितां राहुमुखेन चान्द्रीं न किं सुधां नाकजुषो जुषन्ते ॥४८॥

असद्भिरसज्जनैर्दुर्जनैरारोपितदूषणापि दूषितापि मम सूक्तिः काव्यमार्यैः सद्भिर्नावधीर्यतां नावधीरणीया नोपेक्षणीया । अन्यावधीरणास्तु सद्भिस्तु नावधीर्यते । अत्र निदर्शनमाह—पीत्वेति । राहुणा मुखेन पीत्वा उज्झितां त्यक्तां चान्द्रीं चन्द्रसंबन्धिनीं सुधां नाकजुषो देवाः किं न जुषन्ते किं न सेवन्ते । नोपभुञ्जत इति यावत् । अपि तु जुषन्त एव । एतेनातिशुद्धत्वादमृततुल्यतास्य ग्रन्थस्य दर्शितेति ॥

इदानीं काव्यस्वरूपं दर्शयन्नाह—

रत्नावतंस इव भारतमण्डलस्य
क्रामन्दिशो दशरथः स्फुटवीरलक्ष्मीः ।
राजा सुमन्त्रविहिताभिरतिर्बभूव
पाण्डुर्यशोभिरभिरञ्जितसर्वलोकः ॥ ४९ ॥

सूर्यवंशे दशरथो नाम राजा बभूव । किंविशिष्टः । भारतमण्डलस्य भारतखण्डस्य रत्नावतंसो रत्नघटितसुकर्णालंकारः शिरोलंकारो वा । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे' इति । जम्बूद्वीपादेर्महागिरिभिरवच्छिन्नानि देशभागानि वर्षाण्युच्यन्ते । तत्रायं लोको भारतवर्षमिति । तथा चागमः—'उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यस्य संततिः ॥' इति । पुनः किं कुर्वन् । दिशः क्रामन् प्रभुशक्त्या दिगवस्थितान् भूपान् क्रामन् सोपद्रवान् कुर्वन्निति । स्फुटेति । स्फुटाः प्रकाशिताः वीरलक्ष्म्यो वीरसंपदो यस्य येन वा । जिताशेषरिपुत्वादिति । सुमन्त्रेति । सुमन्त्रोऽस्य सारथिर्मन्त्री वा तत्र विहिता रतिः प्रीतिर्येन स तथा । यशोभिः कीर्तिभिः पाण्डुरवदातः । अभि सर्वतो भावेन रञ्जितोऽनुरक्तीकृतः सर्वलोको येन स तथा । 'पाण्डुः कुन्तीपतौ सिते' इति विश्वः । 'खर्परे विसर्जनीयस्य लोपो वक्तव्यः' इति वा लोपो विसर्जनीयस्य ॥ भारतपक्षे—सोमवंशे पाण्डुर्नाम राजा बभूव । भरतो नाम सोमवंशोद्भवो राजा । 'तस्यापत्यम्' इत्यस्मिन्नर्थेऽण् । भारतस्तस्य मण्डलस्य राजमण्डलस्य निर्वाहकस्य रत्नावतंस इव शोभाजनकः । 'रामानुजे शास्त्रभेदे दौष्यन्ते भरतो नटः' इति विश्वः । 'मण्डलः परिधौ काव्ये देशे द्वादशराज्ञि च । कीरेऽथ निर्वहे बिम्बे त्रिषु पुंसि तु कुक्कुरे ॥' इति मेदिनीकरः । दश दिशो यशोभिर्वंशे क्रामन् । रथेन हेतुभूतेन स्फुटा वीरलक्ष्मीर्यस्य । यद्वा—रथोऽस्यास्तीति मत्वर्थीयो रथवानित्यर्थः । शोभना ये मन्त्रास्तेषु विहिता अभिरतिर्येन स तथा, शोभनो मन्त्रो यस्य तस्मिन्नमात्येऽभिरतिर्यस्येति वा । लोकानुरञ्जनादञ्जितसर्वलोकः । यशोभिर्वा ॥

---

१. 'अवधीर्यते' कलि०.

मातुः श्रियं संदधदिन्दुमत्याः श्लाघ्यः शरत्काल इवोडुपङ्क्तेः ।
असौ प्रजारक्षणदक्षभावादजस्य चक्रे मनसः प्रमोदम् ॥ १० ॥

असौ दशरथोऽजस्याजनाम्नः स्वपितुर्मनसः प्रमोदं हर्षं चक्रेऽकृत । रघोरजः, अजाद्दशरथः—इति पुराणम् । अत्र हेतुमाह—प्रजेति । प्रजानां रक्षणे यो दक्षभावः कुशलत्वं तस्मादिति । इन्दुमती नाम भोजभगिनी सास्य मातेति । तस्या मातुरिन्दुमत्याः श्रियं शोभां संदधत् धारयन् । सुराजप्रसूतगुणातिरेकारोपणादिति भावः । शरत्काल इवेति । यथा इन्दुमत्याश्चन्द्रसंयुक्ताया उडुपङ्क्तेर्नक्षत्रश्रेण्याः श्रियं शरत्कालः संदधाति तद्वदिति । श्लाघ्यः श्लाघाविषयोऽर्थाल्लोकानामिति ॥ पक्षे—असौ पाण्डुरजस्य ब्रह्मणो मनसः प्रमोदं चक्रे । कुत इत्याह—प्रजानामिति तत्सृष्टप्रजानां रक्षणे दक्षभावात्कुशलत्वादिति । मातुर्जनन्या अम्बिकाया हेतोरिन्दुमत्याश्चन्द्रयुक्ताया उडुपङ्क्तेः श्रियं शोभां संदधत् । मातुः श्वैत्येन श्वेतोऽयं जात इत्यागमः । तन्माता काशिराजदुहिताम्बिका नाम, सा च लज्जया भस्मनाङ्गच्छरणं कृत्वा व्यासमभिस्तवती—इति पुराणम् । अजस्य कृष्णस्येति व्याख्यानं तदानीं कृष्णावतारो धृत एव नासीदिति पुराणविरुद्धम् । 'नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्' इत्यमरः ॥

विचित्रवीर्यस्य दिवं गतस्य पितुः स राज्यं प्रतिपद्य बाल्ये ।
पुरीमयोध्यां धृतराष्ट्रभद्रां सहस्तिशोभां सुखमध्युवास ॥ ११ ॥

स दशरथोऽयोध्यां पुरीं सुखमध्युवासाधिवसति स्म । तां किंविशिष्टाम् । सह हस्तिशोभयास्त इति सहस्तिशोभा ताम् । हस्तिशोभायुक्तामित्यर्थः । तथा—धृतं राष्ट्रस्य भद्रं कल्याणं यया सा तथा । किं कृत्वा । पितुर्जनकस्य राज्यं बाल्ये प्रतिपद्य प्राप्य । स्वर्गगतस्येति धर्मविधिना प्राप्य, न तु दुरितादिनेति । किंविशिष्टस्य । विचित्रं नानाप्रकारकं वीर्यं पराक्रमो यस्येति । 'वीर्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि' इति विश्वः । पक्षे—स पाण्डुर्हस्तिशोभां पुरीं हस्तिनापुरमध्युवास । अयोध्यामिति । न विद्यते योध्यो योधनीयो यस्यास्ताम् । धृतराष्ट्रः पाण्डुज्येष्ठभ्राता तेन भद्रां शोभिताम् । 'भद्रः शिवे खञ्जरीटे वृषमेरुकदम्बके । करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः ॥' इति विश्वः । विचित्रवीर्यो नाम शान्तनुपुत्रस्तस्य राज्यं बाल्ये प्रतिपद्य । बाल्ये दिवं गतस्येति । विचित्रवीर्यस्त्वनपत्य एव मृतः—इति पुराणम् ॥

बाणश्रेणिकरालकार्मुकभृता तेन घ्नता विद्विषः
क्ष्माभारक्षयजृम्भितोरगपतिप्रारब्धनानाशिषा ।
पूर्वोर्वीपतिकल्पिताभयचतुर्दिक्पालवर्जां निजा-
माज्ञां स्थापयता त्रिलोकवलये दोर्मण्डलं मण्डितम् ॥ १२ ॥

तेन राज्ञा दशरथेन पाण्डुना च दोर्मण्डलं बाहुप्रकाण्डं मण्डितं भूषितम् । 'दोर्दोषा च

भुजाबाहौ' इत्यमरः । किंविशिष्टेनेत्याह —बाणेति । बाणानां शराणां श्रेण्या पङ्क्त्या कराले दन्तुरं यत्कार्मुकं धनुस्तद्बिभर्ति धारयति बाणश्रेणिकरालकार्मुकभृत् तेन । 'करालं दन्तुरे तुङ्गे भीषणे चाभिधेयवत्' इति विश्वः (मेदिनीकरः) । विद्विषो रिपून् घ्नता मारयता । कार्मुकधरणं शत्रुमारणे हेतुरिति । अत एव शत्रुनाशात् क्ष्माभारक्षयेण पृथ्वीभारापगमेन जातसौख्याज्जृम्भितो य उरगपतिः शेषस्तेन प्रारब्धा नानाविधा आशिषो यस्य स तथा । 'जृम्भितं करणं स्त्रीणामीहा स्फुटितयोरपि' इति मेदिनीकरः । त्रिलोकवलये भुवनत्रयेऽपि निजामाज्ञां स्थापयता । पूर्वैः प्राचीनैरेतदुभयवंश्यैरुर्वीपतिभिर्भूपालैः कल्पितं दत्तमभयं यत्र एवंविधचतुर्दिक्पालान् वर्जयित्वेति क्रियाविशेषणम् । पूर्वोर्वीपतिभिः कल्पितमभयं येषु ते च ते चतुर्दिक्पालाश्चेति विशेषणसमासो वा । पूर्वनरपतिना रचिताचारादरादनेनापि तदाज्ञा कृतेति भावः । 'त्रिलोकवलयैः' इति पाठान्तरम् । तत्र त्रिलोकवलयैर्दोर्मण्डलं मण्डितमिति योजना । भुजमण्डलमपि वलयैरलंक्रियत इति साम्यम् ॥

विक्षिप्तस्य प्रतिनृपकुलं राजशब्दस्य लोके
तेनात्मानं नियतविषयं कुर्वता तेजसश्च ।
पादन्यासः शिरसि रचितः सर्वपृथ्वीधराणां
छत्रच्छायामपगमयता घर्मभासा च तुल्यम् ॥ १२ ॥

तेन राज्ञा दशरथेन पाण्डुना च सर्वेषां पृथ्वीधराणां राज्ञां पर्वतानां वा शिरसि उत्तमाङ्गे शिखरे वा पादानां चरणानां रश्मीनां वा न्यासः आरोपणं रचितश्चरणार्पणमाचरितम् । तेजोर्पणं वा । दिग्विजयादिना पर्वतेष्वपि चरणार्पणम् । तद्वर्तिनामपि राज्ञां पराजयादत्रापि पादन्यासः । घर्मभासा सूर्येण तुल्यं सदृशं तद्वदिति तत्सदृशेनेति । यथा तेन पादन्यासः क्रियते पर्वतादावपि, तथा तेनापीति तात्पर्यम् । यद्वा तेन राज्ञा राजद्वयेन घर्मभासा चेति व्यस्तरूपकम् । तुल्यमेकदैवेति व्याख्यातम् । यद्वा तेनोभयेन राज्ञा घर्मभासा सूर्येण च तुल्यमेकदैव पर्वतानां शिखरे रश्मिन्यस्तः, राज्ञां शिरसि उत्तमाङ्गे पादन्यासोऽप्याचरितः । राज्ञा चरणार्पणं च कृतमिति । 'पादो रश्मिश्च तुर्यांशः' इत्यमरः । छत्रेति । छत्रच्छायामपगमयता । प्रायेण छत्राणां छेदनात् । संग्रामेषु हतत्वात् । किंविशिष्टेनोभयेन । प्रतिनृपकुलं सर्वेषां नृपाणां कुले विक्षिप्तस्य पर्यस्तस्य राजशब्दस्य तेजसश्च नियतविषयमाश्रयं स्वात्मानं कुर्वता । स्वनिष्ठं राजशब्दं तेजश्च कुर्वतेत्यर्थः । 'तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः' इति विश्वः । 'शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च' इति । पूर्वं सकलराजकुले राजशब्दस्तेन सह साधारण आसीत् । तत्संबन्धीनि तेजांस्यपि साधारणान्यासन् । तेनोभयेन सकलराजकुलविषयाद्राजशब्दस्तेजोदरश्च स्वविषयः स्वमात्रनिष्ठः कृत इति भावः । राजशब्दकृतं ग्रहराजत्वं

१. 'यापगमसुगमे' कलि०.

तेजसो दीप्तेश्च नियतविषयमात्मानं स्वं कुर्वतेति धर्मभासा चेत्यत्रापि संबध्यते । राजशब्दश्चन्द्रेऽपि स्यात् । चन्द्रादतितेजस्वित्वादिति ॥

करग्रहात्कोसलकेकयेन्द्रभुवो गुरुश्रीर्विनमत्सुमित्रः ।
पृथावरोधः समरे जितारिर्गोप्ता हिमाद्रीश्वरतां स लेभे ॥ १४ ॥

स दशरथो हिमाद्रीश्वरतां लेभे । हिमाद्रिर्हिमवान् पर्वतस्तद्वन्मेरीश्वरो बभूवेति भावः । गोप्ता रक्षक इति । गुरुश्रीरधिकश्रीरधिकलक्ष्मीकः अधिकशोभावान् । कुत इत्याह—करग्रहादिति । कोसलेन्द्रः कोसलाधिपतिः केकयेन्द्रः केकयाधिपती राजविशेषः तावुभौ भूरुत्पत्तिस्थानं ययोस्तयोः । कौसल्याकैकय्योस्तद्राजदुहित्रोः करग्रहाद्विवाहादित्यर्थः । विनमन्ती प्रणमन्ती सुमित्रा तृतीया पत्नी यस्य स तथा । पृथौ महति समरेऽरोधः शत्रुकर्तृकावरोधरहितः । न विद्यते रोधो यस्य स तथा । 'करो वर्षोपले रश्मौ पाणौ प्रत्यायदण्डयोः' इति विश्वः । जितोऽरिः शत्रुर्येन स तथा । 'भूः स्थानमात्रे कथिता धरण्यामपि योषिति' इति मेदिनीकरः ॥ भारतपक्षे—स पाण्डुर्माद्रीपतित्वं लेभे । माद्री मद्राधिपसुता नकुलसहदेवमाता । अत्र हिशब्दः पादपूरणे । कोसलकेकयेन्द्रयो राज्ञोर्द्वयोः करस्य राजग्राह्यभागस्य ग्रहणात् । गुरुश्रीरधिकसंपत्तिः । विनमन्ति शोभनानि मित्राणि यस्य स तथा । सुमित्रा मित्रसंहतिर्वा । पृथा कुन्ती अवरोधः पत्नी यस्य स तथा । अवरुध्य इत्यवरोधो दाराः । 'अवरोधो राजदारेषु तद्गृहे' इति विश्वः । अन्यत्समानम् ॥

ततः प्रजानां परिपालनेन कृतात्मकृत्यः क्षितिपः कदाचित् ।
प्रियानुयातो मृगयानुरोधात्सयौवनश्रीः प्रययौ वनान्तम् ॥ १५ ॥

क्षितिं पातीति क्षितिपो राजा दशरथः कदाचिद्वनान्तं वनं ययौ गतवान् । कुत इत्याह—मृगयानुरोधात् आखेटकरभसात् । किंविशिष्टः । सह यौवनश्रिया वर्तते यः सयौवनश्रीरिति । प्रजानां परिपालनेन सर्वतो रक्षणेन कृतात्मकृत्यः कृतमात्मनः कृत्यं येन स तथा । 'प्रजापालनं राजधर्मः' इति श्रुतेः । प्रियैरिष्टैः सुहृद्भिर्वार्थात्सैनिकैरनुयातः कृतानुगमः । कदाचिदित्यपरिनिष्ठितकालोपलक्षणम् ॥ पक्षे—स क्षितिपः पाण्डुर्वनान्तं काननं ययाविति । प्रियानुयात इति । प्रियाभ्यां कुन्तीमाद्रीभ्यामनुयातः कृतानुगमनः । स यौवनश्रीर्यत इति, अतः स किल पाण्डुः पत्नीभ्यां सहैव वनं जगामेति। अन्यत्समानम् ॥

शावानुविद्धहरिणीरसितोलुपानां
कोलावलीदलितबालकसेरुकाणाम् ।
दन्तावलोन्मथितपल्लवशल्लकीनां
राज्ञाभवद्वनभुवामुपकण्ठवर्ती ॥ १६ ॥

स दशरथः पाण्डुर्वा वनभुवामुपकण्ठवर्ती समीपस्थो बभूव । वनभूसमीपमागतवानि-

त्यर्थः । 'कण्ठो गले संनिधाने ध्वनौ मदनपादपे' इति मेदिनीकरः । तासां किंविशिष्टानाम् । शावेति । शावेन शिशुना अनुविद्धा स्तन्यार्थं कृतानुगमना या हरिणी तया रसित आस्वादित उलुपस्तृणविशेषो यत्र तासां तथा । तालव्यादिरयं शावशब्दः । कोलेति । कोलानां शूकराणामावलीभिः पङ्क्तिभिर्दलितानि खण्डितानि बालानि कसेरुकाणि यत्र तासां तथा । दन्तावलेन हस्तिना उन्मथितपल्लवा खण्डितपत्रा शल्लकी लताविशेषो यत्र तासां तथा । 'शल्लकी पशुवृक्षयोः' इति विश्वः । अन्यत्सुगमम् ॥

शङ्कुव्याकीर्णरङ्कु द्रुतनिशितशरक्षुण्णदीव्यत्तरक्षु
ज्याघोषक्षुब्धकण्ठीरवरवचकितव्यस्तमातङ्गयूथम् ।
खड्गव्यालूनखड्गं तुमुलकलकलप्रान्तकूजच्छकुन्तं
भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥ ९७ ॥

तेनोभयेन राज्ञा वनभुवि वनस्थाने मृगयाकर्म आखेटव्यापारः प्रतेने प्रकर्षेण विस्तारितः । कृत इत्यर्थः । तद्विशिनष्टि—शङ्कित्यादि । शङ्कुना कुन्तेन व्याकीर्णो विक्षिप्तो रङ्कुर्मृगविशेषो यत्र तत्तथा । 'शङ्कुः संख्यास्त्रयादोभित्कलुषे कीलकेऽपि च' इति विश्वः । विशेषेणाकीर्ण इति । 'कॄ विक्षेपे' इति धात्वनुसारात् । द्रुतेति । द्रुतेन क्षिप्तेन निशितेन तीक्ष्णेन शरेण क्षुण्णः खण्डितः । अत एव दीव्यन्भ्रमंस्तरक्षुर्यत्र । द्रुतः पलायितः । अनन्तरं निशितशरेण क्षुण्ण इति वा । 'तरक्षस्तु मृगादनः' इत्यमरः । ज्याघोषेण ज्याशब्देन क्षुब्धः क्षोभधारको यः कण्ठीरवः सिंहस्तस्य रवेण चकितं भीतं व्यस्तमितस्ततो गतं मातङ्गयूथं यत्र । क्षोभनं क्षुप् क्षोभः । संपदादित्वात् क्विप् । तां दधातीति क्षुब्ध इति । 'क्षुब्ध–' इत्यादिनिपातनसूत्रेण मन्थदण्डातिरिक्ते क्षोभित इति स्यात् । 'सिंहः कण्ठीरवः शैलः पारीन्द्रः केसरी हरिः' इति शब्दार्णवः । खड्गेति । खड्गेन कृपाणेन व्यालूनश्छिन्नः खड्गो गण्डको यत्र । 'गण्डके खड्गखड्गिनौ' इत्यमरः । तुमुलेति । तुमुलेन ध्वनिना कलकलेन सेनाकृतकोलाहलेन प्रान्ते एकदेशे कूजन् शब्दायमानः शकुन्तः पक्षिगणो यत्र । भल्लेति । भल्लेनास्त्रविशेषेण ध्वस्तोऽच्छभल्लो भल्लूको यत्र । 'अच्छभल्लस्तु भल्लूकः' इति नाममाला । 'विभीतकतरौ पुंसि तुमुलं रणसंकुले' इति विश्वः ॥

एवं स तेनानुदिनं वनेषु निषेव्यमाणो मृगयाविहारः ।
समीरणोत्सेक इवाप्सु नावं सप्ताङ्गचिन्तां नृपतेर्जहार ॥ ९८ ॥

मृगयाविहार आखेटकरूपा क्रीडा नृपतेर्दशरथस्य पाण्डोर्वा सप्ताङ्गचिन्तां स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानुसंधानं जहार हृतवान् । अनुदिनं प्रत्यहं तेनोभयेन राज्ञा निषेव्यमाणः । अतो मृगयापरवशः स इति । राज्यचिन्तां विस्मृतवानित्यर्थः । समीरणोत्सेको

---

१. 'कण्ठेरव' इति काश्मीरिक०.

नावमिव। यथा वायोरुत्सेक उद्रेकोऽप्सु जलेषु नावं नौकां हरति देशान्तरं नयतीति। एवं पूर्वोक्तप्रकारेण निषेव्यमाण इत्यनेन संबध्यते॥

स गाढबुद्धिस्तमसोपकण्ठे विवर्तमानं गतभीरभीकम्।
मत्वा मृगं मार्गणलक्ष्यभूतमनग्रजन्मानमृषिं चकार॥ ५९॥

स दशरथोऽनग्रजन्मानं शूद्रम् ऋषिं मुनिं मार्गणस्य बाणस्य लक्ष्यभूतं वेध्यं चकार कृतवान्। मृगोऽयं कश्चिदस्तीति मत्वावगत्य। 'आरण्याः पशवो मृगाः' इति। अग्रे प्रथमत इति। क्षत्रियाद्यपेक्षया जन्म सृष्टिर्यस्य सोऽग्रजन्मा ब्राह्मणः। ततो नञ्समासे अनग्रजन्मानमिति द्विजात्यपेक्षयानग्रत्वादिति। तमसा नदीविशेषस्तस्या उपकण्ठे समीपे विवर्तमानं विशेषेणावस्थितम्। स किंविशिष्टः। गाढा बुद्धिरस्य स तथा। 'गाढबाढदृढानि च' इत्यमरः। गता भीर्भयं यस्य स तथा। तत्किंविशिष्टम्। अभीकं भयशून्यमिति॥ भारतपक्षे—स पाण्डुः अनग्रजन्मानं ब्राह्मणं मृगरूपधरमभीकं मैथुनासक्तमृषिं बाणलक्ष्यभूतं चकारेति। न अग्रजन्मा ज्येष्ठो यस्मात्सोऽनग्रजन्मा वर्णज्येष्ठः। मृग एवायं न मृगधररूप इति मत्वा तमसा मोहेन गाढावगाढा विलोला बुद्धिर्यस्य स तथा। उपकण्ठे अत्यन्तसमीपे स्थितमृषिमिति। गाढेति। 'गाहू विलोडने' इति धात्वनुसारात्। 'अभीकः कामुके क्रूरे निर्भये त्रिषु' इति मेदिनीकरः। केनचिच्छापेन मृगस्य कस्यचित् मुनेर्मैथुनासक्तस्य प्रहारः कृतः पाण्डुना—इति पुराणम्॥

तपस्विनश्छन्नतनोः शरेण विभिन्नमूर्तेर्जनकान्महाधेः।
शापं सुतापायनिबद्धमृत्युं प्रियानुवृत्तौ कुशलोऽप्यवाप॥ ६०॥

स दशरथः शापमवाप प्राप्तवान्। मुनेराक्रोशविषयोऽभूत्। कुत इत्याह—तपस्विनो जनकात् पितुः। शूद्रमुनेरित्यर्थः। तपस्विन इति षष्ठ्येकवचनम्। किंभूतस्य। विभिन्नेति। विशेषेण भिन्ना विदारिता मूर्तिः शरीरं यस्य स तथा। किंभूतस्य। शरेण दशरथप्रेरितेन छन्नतनोर्व्याप्तदेहस्य। केचित्तु—'शरेण विभिन्नमूर्तेः' इति योजयन्ति। तत्र छन्नतनोरिति विभिन्नपदम्। अर्थात् शरादिना छन्नतनोः। शापस्वरूपमाह—सुतेति। सुतस्यापायेन विश्लेषेण निबद्धो नियतो मृत्युर्यस्य। सुतवियोगेन त्वं मृत्युमवाप्स्यसीत्यर्थः। किंभूतात्। महानाधिर्मानसी व्यथा यस्य स तस्मादिति। प्रियस्य परमेष्ठस्यानुवृत्तौ कुशलोऽपि सावधानोऽपि। अतः प्रमादादेव मा भूदिति सूचितम्॥ पक्षे—स पाण्डुस्तपस्विनः शापमवाप। किंभूतात्। छन्नतनोर्मृगरूपेण गुप्तमनुष्यदेहात्। महाधेर्मानस्या व्यथाया जनकात्संपादकात् शरेण विदारिततनोः। कस्मै। सुतापायान्तस्तापाय। शापं किंरूपमित्याह—प्रियायाः कान्ताया अनुवृत्तौ संभोगकाले नियतो मृत्युर्यत्र। 'कुशलोऽप्यवहितोऽपि सन्' इति दुरदृष्ट्या देवशापमवापेत्यर्थः।

विषद्रुमस्य व्यसनाह्वयस्य फलं स लब्ध्वा सहसा निवृत्तः।
कान्तोपभोगेषु पराङ्मुखात्मा निनाय कालं निरपत्यदुःखी॥ ६१॥

स दशरथः कालं समयं निनाय नयति स्म । अतिवाहयामासेत्यर्थः । निरपत्यः सन् दुःखी दुःखवान् । अपत्यशून्यत्वादेव । पुनः किंभूतः । कान्तः कमनीयो य उपभोगो विषयाद्युपभोगस्तत्पराङ्मुखो निःस्पृह आत्मा यस्य स तथा । यद्वा—कान्ताया उपभोगेषु विलासेषु पराङ्मुख आत्मा यस्य स तथा । सुखनिःस्पृह इत्यर्थः । सहसा निवृत्तो हठात्परावृत्तः । अर्थात् आखेटकादिति । किं कृत्वेत्याह—विषद्रुमस्य मृगयारूपस्य विषवृक्षस्य फलं महाधिजनकशापरूपं प्राप्येति ॥ पक्षे—शापभयादेव कान्तोपभोगेषु विमुखः पाण्डुरिति । शेषं समानम् ॥

असंततेः सन्ति कुतः सुखानीत्यसौ विचिन्त्य प्रतिपन्नमन्युः ।
सार्धं स्वदारैर्नियतः सुतार्थे राजा सुरप्रार्थनतत्परोऽभूत् ॥ ६२ ॥

स राजा दशरथः पाण्डुर्वा स्वदारैः स्वपत्नीभिः सह सुतार्थे सुराणां देवानां प्रार्थनपरोऽभूत् । नियतः कृतनियमः पुत्रार्थं देवानुद्दिश्य व्रतं चकारेत्यर्थः । किं कृत्वा । इति विचिन्त्य परामृश्य । किं तदित्याह—असंततेरिति । 'अनपत्यस्य इह लोके परलोके च नास्ति सुखम्' इति । स्मृतिः—'पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥' इति । स किंभूतः । प्रतिपन्नः प्राप्तो मन्युः शोको येन स तथा । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । यद्वा प्रतिपन्नोऽङ्गीकृतो मन्युः क्रोधो येन स तथा । अज्ञानात् शापकर्तृमुनेरित्यर्थः । एतस्मिन्नियतेनोभयेन राज्ञा प्रजार्थं देवताप्रार्थना कृता ॥

एतस्मिन्सति समये विपक्षभीताः क्षीराब्धेस्तटभुवमेत्य शक्रमुख्याः ।
गीर्वाणाः कृतनतिसूक्तयस्त्रिधाम्ने लोकानामुदितमुपप्लवं शशंसुः ॥६३॥

यदैवोभयेन राज्ञा पुत्रार्थं देवताराधना कृता । एतस्मिन् काले शक्रमुख्या गीर्वाणाः इन्द्रादयो देवाः लोकानामुदितं जातमुपप्लवमुद्वेगं शशंसुः कथयामासुः । क्षीराब्धेः क्षीरसमुद्रस्य तटभुवमेत्यागत्य । विपक्षेभ्यो दानवेभ्यो भीता इति । कस्मै शशंसुरित्याह—त्रिधाम्न इति । त्रीणि धामानि गृहाणि स्वर्गमृत्युपातालरूपाणि यस्य तस्मै विष्णव इति कृतनतसूक्तय इति देवानां विशेषणम् । कृता नतयो नमस्काराः सूक्तयः स्तवा यैः कृतनमस्काराः कृतस्तोत्राश्चेत्युभयत्र समानम् ॥

संदिश्य त्रिदशजनं[1] यथानुरूपं तेजोंशैर्भुवि जननाय यत्र[2] तत्र ।
दैत्यारिस्तदनु तमोनुदोऽन्ववाये स्वैरंशैरवतरितुं चतुर्भिरैच्छत् ॥ ६४ ॥

तदनु तदनन्तरं दैत्यारिर्विष्णुस्तमोनुदः सूर्यस्य अन्ववाये वंशे स्वैरंशैश्चतुर्भिर्विभागैः रामादिरूपैरवतरितुमैच्छत् इच्छति स्म । दशरथगृहे विष्णुनावतारः कृत इत्यर्थः । किं कृत्वेत्याह—त्रिदशानां देवानां समूहमिति संदिश्य समुद्दिश्य । किमित्याह—यथानुरूपमिति यथायोग्यं निजैस्तेजोंशैस्तेजोविभागैः । यत्र तत्र भुवि जननाय जननार्थमिति ।

१. 'गणं' कलि०. २. 'तत्र' कलि०.

यथायोग्यरूपेण भवद्भिरपि पृथिव्यामवतारः क्रियतामिति । रामायणे—रुद्रावतारो हनुमान्, सूर्यावतारः सुग्रीवः, अग्नेरवतारो नीलः, इत्यादि ज्ञेयम् । भारतपक्षे—तमोनुदश्चन्द्रस्य वंशे । चतुर्भिरंशैरिति सहार्थे तृतीया । तैः सह दैत्यारिरवतरितुमैच्छदिति । धर्मवाय्विन्द्राश्विरूपैरिति । तथा—धर्मावतारो युधिष्ठिरः, पवनावतारो भीमः, इन्द्रावतारोऽर्जुनः, अश्विनावतारौ नकुलसहदेवौ इति । विष्णोरवतारः कृष्णो वसुदेवसूनुः इति, सोमावतारोऽभिमन्युरित्याह । 'चन्द्राग्न्यर्कास्तमोनुदः' इत्यमरः ॥

ततो मुनिव्याहृतमन्त्रयुक्त्या तदीयपत्नीपरिचर्यया च ।
भक्त्योपसत्त्या च नृपस्य जज्ञे पिण्डोपलब्धिर्विबुधप्रसादात् ॥ ६९ ॥

तदनन्तरं नृपस्य दशरथस्य विबुधप्रसादाद्देवप्रसादात् पिण्डोपलब्धिर्जज्ञे जाता । पुत्रलाभो जात इत्यर्थः । 'देहमात्रे निवासे च देहागारैकदेशयोः । पिण्डः पुमान्बले सान्द्रे क्लीबमाजीवनायसोः ॥' इति विश्वः । देहप्रदेशः पुत्र एवोपलक्षितः । 'अङ्गादङ्गात्संभवति' इति श्रुतेः । कथमित्याह—मुनीत्यादि । मुनिना ऋष्यशृङ्गेण व्याहृता मन्त्रयुक्तिस्तया तत्पत्नीनां कौसल्यादीनां परिचर्यया । अर्थात् देवानाम् । भक्त्या उपसत्त्या उपासनाप्रकारेणेति ऋष्यशृङ्गेण दशरथः पुत्रेष्टिं कारितः । पक्षे—नृपस्य पाण्डोर्मुनिना दुर्वाससा व्याहृता मन्त्रयुक्तिः । कुन्त्यै तेन मन्त्रो दत्तस्तद्युक्त्या । विबुधानां धर्मपवनेन्द्राश्विनानां प्रसादात् । कुन्त्या किल धर्मेण धर्मादयो य आहूताः, ततः क्षेत्रजा युधिष्ठिरादयो जाताः । माद्र्या चाश्विनीकुमारावाहूतौ, इति ताभ्यां तस्यां नकुलसहदेवौ क्षेत्रजौ जाताविति पुराणश्रुतिः । 'मन्त्रो वेदविशेषे स्याद्देवतानां च साधने । गुह्यवादेऽपि च पुमान्' इति मेदिनीकरः । शेषं समानमिति ॥

स्फुरदृष्यशृङ्गविततान्यथान्वहं सवनान्तराण्यधिगतो महीपतिः ।
चतुरोऽपि पञ्चमुखभासुरश्रियस्तनयानवाप हरिदस्रतेजसः ॥ ६६ ॥

अथानन्तर्ये । महीपतिर्दशरथश्चतुरश्चतुःसंख्याकांस्तनयानवाप प्राप्तवान् । रामादीनित्यर्थः । किंभूतान् । पञ्चं विस्तृतं मुखं यस्य स पञ्चमुखः सिंहः तद्वद्भासुरा दीप्ता श्रीर्येषां ते तथा । यद्वा पञ्चमुखो हरः तद्वद्भासुरा श्रीर्येषां ते तथा । पञ्चेन विस्तृतेन मुखेन भासुरा श्रीः शोभा येषां ते तथा । 'पचि विस्तारवचने' इति धात्वनुसारात् । हरिरिन्द्रः । दस्रौ आश्विनीकुमारौ तद्वत्तेजो येषां ते तथा । अन्वहं सवनस्य यज्ञस्यान्तराणि मखादीनि अधिगतः प्राप्तः इति महीपतिविशेषणम् । किंविशिष्टानि । स्फुरता देदीप्यमानेन ऋष्यशृङ्गेण मुनिविशेषेण विततानि विस्तारितानि । ऋत्विजां द्वारेणेत्यर्थात् । 'सोमनिर्दलने पुंसि क्लीबे सवनमध्वरे' इति विश्वः ॥ पक्षे—स महीपतिः पाण्डुः पञ्च पञ्चसंख्याकांस्तनयान् युधिष्ठिरादीनवाप । अस्मिन्पक्षे हरिदस्रतेजसः इति पञ्चम्येकवचनम् । तेन हरिदस्रतेजःसकाशादित्यर्थः । हरिश्च [यमश्च] हरिश्च [वायुश्च] हरि[श्चेन्द्र]श्चेति सरूपाणामेकशेषो हरयः । ततो हरयश्च दस्रौ चेति हरिदस्राः तेषां तेजसोंऽशादिति । तथा च धर्मराजतेजसा युधिष्ठिरं वायुतेजसा भीममिन्द्रतेजसाऽर्जुनम् । अश्विनीकुमारयोस्तेजसा च नकुलसहदेवौ

प्रापेत्यन्वयः । 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु' इति विश्वः । चतुरोऽपीति महीपतिविशेषणम् । चतुरो दक्षः । तनयान्किंविशिष्टान् । मुखेन वक्रेण भासुरा श्रीर्येषां ते तथा । स किंविशिष्टः । वनान्तराणि वनमध्यान्यधिगतः प्राप्तः । स्फुरन्नृष्यो भल्लूको यत्र एवंभूतानि शृङ्गाणि पर्वतशिखराणि विततानि विस्तीर्णानि इति वनान्तराणीत्यस्य विशेषणम् । ऋष्यस्य पर्वतविशेषस्य शृङ्गं तत्र विततानि वा । 'ऋष्यः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधेत्यलिङ्गं नक्षत्रं पुंसि नपुंसकम् ॥' इति मेदिनीकरः । यद्वा—स्फुरदृष्यस्य शृङ्गं प्रभुत्वं यत्र तानि विततानि चेति द्वन्द्वसमासः । 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुचक्रके । विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षयोः ॥' इति विश्वः ॥

कृतार्थता कीदृगहो नृपस्य यदेनमालम्बितपुत्रमूर्तिः ।
देवः स्वयं धर्ममयः सिषेवे सहानुजन्मा गुरुभक्तिनम्रः ॥ ६७ ॥

कृतोऽर्थः प्रयोजनमर्थाज्जन्मादीनां येन स कृतार्थस्तस्य भावः कृतार्थता सा नृपस्य राज्ञो दशरथस्य पाण्डोर्वा कीदृक् । अहो इति वक्तुमशक्येत्यर्थः । अनिर्वचनीया कृतार्थतेति तात्पर्यम् । 'अहो धिगर्थे शोचे च करुणार्थविषादयोः । संबोधने प्रशंसायां विस्मये पादपूरणे ॥' इति मेदिनीकरः । कुत इत्याह—यदिति । यतो हेतोर्धर्ममयो धर्मरूपी देवो विष्णू रामरूपेणालम्बितपुत्रमूर्तिः पुत्रशरीरः पुत्ररूपो वा । स्वयमात्मना यमेनं दशरथं सिषेवे सेवितवान् । स किंविशिष्टः । गुरौ भक्त्या नम्रः । गुर्व्या भक्त्या च नम्रः । सहानुजन्मा सकनिष्ठो भरतादिसहितः । भारतपक्षे—धर्ममयो युधिष्ठिरः । धर्मजन्मेति यावत् । सहानुजन्मेति भीमादिसहित इति । अन्यत्समानम् ॥

स लक्ष्मणोन्नीतसमृद्धिरुद्यच्छत्रुघ्नसंपद्भरतैधितश्रीः ।
ज्यायान्विरेजे क्रमशोऽभि रामः कौमारमासाद्य वयः कुमारः ॥ ६८ ॥

ज्यायान् ज्येष्ठः कुमारो रामः शुशुभे राजते स्म । कौमारं यौवनं वय आसाद्य प्राप्य । 'वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके' इति शाश्वतः । न विद्यते भीर्यस्य तदभि भयशून्यमिति वयोविशेषणम् । यद्वा किंविशिष्टः । क्रमशः क्रमेणानुदिनमभिरामो मनोहरः । अभिराममिति वयोविशेषणम् । पुनः किंभूतः । लक्ष्मणेन अनुजेन भ्रात्रा उन्नीता समृद्धिः राजसंपद्यस्य । उद्यन्ती शत्रुघ्नात्संपद्यस्य । उद्यती शत्रुघ्नस्येति केचित् । भरतेनानुजन्मना एधिता वर्धिता श्रीर्यस्य स तथा । पक्षे—ज्यायान् कुमारो युधिष्ठिरो लक्ष्मणेन राजचिह्नेन चक्रादिनोन्नीता समृद्धिर्यस्य । उद्यती शत्रुहन्त्री संपद्यस्य । भरतेन भरतकुलोद्भवेन एधिता श्रीः । तुल्यमन्यत् । 'कौमारं यौवनं समम्' इत्यमरः । 'लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणः' इति विश्वः ॥

युधिष्ठिरं भीमधनंजयाभ्यां समं दधानं नकुलेन लक्ष्मीम् ।
समादवाप्तं सहदेवनिष्ठं ज्येष्ठं सुतं वीक्ष्य तुतोष तातः ॥ ६९ ॥

तातो दशरथो ज्येष्ठं सुतं रामं वीक्ष्य तुतोष तुष्टो बभूव । किंविशिष्टम् । युधिष्ठिरं सङ्ग्रामे स्थिरम् । अपलायिनमित्यर्थः । भीमेन शिवेन, धनंजयेनाग्निना च समं तुल्यम् । 'भीमोऽम्बुवेतसे शंभौ घोरे चापि वृकोदरे' इति विश्वः । 'धनंजयोऽर्जुने वह्नौ नागभेदे च मारुते' इति मेदिनीकरः । कुले लक्ष्मीं न दधानमिति न । अपि तु दधानमेव । सह मया लक्ष्म्या वर्तते इति समो विष्णुस्तस्मादवासम् । सह देवनिष्ठया भक्त्या वर्तते सहदेवनिष्ठमिति । भारतपक्षे—तातः पाण्डुर्ज्येष्ठं सुतं युधिष्ठिरम् । भीमो भीमसेनः, धनंजयोऽर्जुनस्ताभ्यां समं सह नकुलेन माद्रीसुतेन समम् । सहदेवोऽपि माद्रीसुत एव ॥

संतानलाभादनृणः पितॄणां हर्षादसंभावितपूर्वशापः ।
सार्धं स्वदारैरनुभूतकामः स शक्रतोषैकरतिर्बभूव ॥ ७० ॥

स नृपो दशरथः शक्रतोषैकरतिर्बभूव । इन्द्रैकाराधनतत्परोऽभूदित्यर्थः । किंविशिष्टः । स्वदारैः सममनुभूतकामः अभिलषितपदार्थमनुभूतवान् । संतानलाभात्पुत्रप्राप्तेः पितॄणामनृण ऋणशून्यः । 'प्रजया पितृभ्यः' इति श्रुतेः । अत एव हर्षादसंभावितो विस्मृतः पूर्वशापः शूद्रकमुनिशापो येन स तथा । 'संतानः संततौ गोत्रे स्यादपत्ये सुरद्रुमे' इति विश्वः । [भारत]पक्षे—नृपः पाण्डुः सुरदारैः समं सह अनुभूतकामः संभोगवान् संस्तस्मिन्काले परलोकगमनात् । शक्राराधनतत्परोऽभूदिति योज्यम् । शापविस्मरणे हर्षो हेतुरिति बोध्यम् । परलोक एव शक्रसेवापरो बभूवेत्यर्थः । अन्यत्समानम् ॥

विद्या गुरूणां विनयादवाप्य काले कुमारा धृतराष्ट्रमेत्य ।
ववन्दिरे भूमिपतिं जनानां विलोचनालीमनिमेषयन्तः ॥ ७१ ॥

कुमारा रामादयो भूमिपतिं दशरथं ववन्दिरे नमस्कारं कुर्वन्ति स्म । काले वन्दनोचितसमये आगत्य । समीपमिति शेषः । किंविशिष्टम् । धृतं राष्ट्रं येन धृतराष्ट्रं धृतसुराज्यमिति । 'धृतराष्ट्रः सुराज्ञि स्यान्नगक्षत्रियमीशयोः' इति मेदिनीकरः । गुरूणां विनयाद्विद्याश्चतुर्दश विद्या अवाप्येति । 'गुरूणां निलयात्' इति पाठान्तरम् । तत्र गुरूणामुपाध्यायानां निलयाद्गृहाद्विद्या अवाप्येति व्याख्येयम् । जनानां निरीक्षकाणां विलोचनालीश्चक्षुःपरम्परा अनिमेषयन्तो निमेषशून्ययत्नाः कुर्वन्तः । 'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तराः । धर्मशास्त्रं पुराणं च विद्या एताश्चतुर्दश ॥' भारतपक्षे—कुमारा युधिष्ठिरादयः एत्यागत्य । कुतः । ऋष्यशृङ्गपर्वतात् । काले आगमनसमये धृतराष्ट्रं प्रज्ञाचक्षुषं पितृव्यं ववन्दिरे ऋषिभिरानीय धृतराष्ट्राय समर्पिता इति पुराणम् । तुल्यमन्यत् ॥

गुणैरुपेता गुरुभीष्महृद्यैः क्षत्रानुरूपैर्वचनैर्विनीताः ।
कृपाश्रयास्ते कुशलाः कलासु प्रमाणकोटिप्रवणा विजह्रुः ॥ ७२ ॥

ते कुमारा रामादयो विजह्रुर्विहारं चक्रुः । चिक्रीडुरित्यर्थः । किंविशिष्टाः । गुणैः पुरुषगुणैर्दानादिभिर्वेदादिभिर्वा उपेता युक्ताः । कृताध्ययना इत्यर्थः । कीदृशैः । गुरुभिरनवगाहनीयैः, भीष्मैश्च भयानकैः, हृद्यैश्च मनोहारै रामः द्वन्द्वे सति गुरुभीष्मह-

यैरिति रूपम् । क्षत्रस्य क्षत्रियानुरूपैर्योग्यैर्वचनैर्विनीताः । यद्वा—वचनैरिति लक्षणे तृतीया । विनीताश्चेति विभिन्नमेव । 'वाच्यलिङ्गो विनीतः स्यादपनीतेऽजितेन्द्रिये । वलये निभृते वापि विनयं ग्राहितेऽपि च ॥' इति विश्वः । कृपा करुणास्तदाश्रयास्तद्युक्ताः । सकरुणा इत्यर्थः । कलासु कामकलासु कुशलाः । प्रमाणस्य शास्त्रेयत्तायाः कोटावग्रे प्रवणास्तत्परायणाः । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इत्यमरः । 'कोटिः स्त्री धनुषोऽग्रेऽस्त्रे संख्याभेदप्रकारयोः' इति मेदिनीकरः । 'प्रवणः क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे' इत्यमरः । पक्षे—ते कुमारा युधिष्ठिरादयः क्षत्त्रा विदुरेणानुरूपैर्योग्यवचनैर्वाक्यैर्विनीता विनयं प्रापिताः । शिक्षिता इति यावत् । 'क्षत्ताः शूद्राः क्षत्रियजोऽप्रतीकारे च सारथौ । भुजिष्यात्तनये क्षत्ता नियुक्ते च प्रजासृजि ॥' इति विश्वः । गुरुभीष्महृद्यैरिति वचनैरित्यस्य विशेषणम् । गुरुर्द्रोणाचार्यः, भीष्मो गाङ्गेयः, तयोर्हृद्यैर्हृदयंगमैः । प्रमोदजनकैरिति यावत् । कृपाश्रिता इति । कृपः कृपाचार्यस्तदाश्रिता इति । प्रमाणकोटिः कौरवाणां क्रीडाभूमिस्तत्प्रवणाः । तुल्यमन्यत् । प्रमाणमियत्ता मर्यादा वा कोट्यां धनुरग्रे यस्याः सा । प्रमाणकोटिर्धनुषः शिक्षाभूमिरिति ॥

ते स्निग्धगम्भीरगिरः कुमारास्त्रैलोक्यतापप्रशमैकदक्षाः ।
नवाम्बुवाहा इव धार्तराष्ट्रानुद्वेजयन्ति स्म चिरं विपक्षान् ॥ ७३ ॥

ते रामादयः कुमाराश्चिरं विपक्षान् शत्रून् उद्वेजयन्ति स्म । उद्विग्नान् कुर्वन्ति स्म । 'लट् स्मे' इति भूतेऽपि लट् । नवाम्बुवाहा इवेति । यथा नवा मेघा धार्तराष्ट्रान् हंसान् सितेतरानुद्वेजयन्ति स्म । विपक्षान् विगतपक्षानिति । उभयं विशिनष्टि—स्निग्धेति । स्निग्धा मधुरा गम्भीरा घोषवत्यो गिरो वाचो येषामिति तथा । पक्षे—स्निग्धाः श्रवणसुखदा गम्भीरा बहुदेशव्यापिनो गिरः शब्दा येषामिति । त्रैलोक्येति । त्रैलोक्यस्य लोकत्रयस्य तापानामुद्वेगानां संतापानां वा प्रशमे निराकरणे दक्षाः कुशलाः धनादिदानाद्व्ययप्रशमनाच्च । [पक्षे—जलसेकेन तापप्रशमनात् इति ।] 'लोकस्तु भुवने जने' इति शाश्वतः । 'पक्षो बले पतत्रे च पार्श्वे सखिसहाययोः' इति मेदिनीकरः । विशिष्टः पक्षो येषामिति विपक्षान् । 'धार्तराष्ट्रः सितास्याङ्घ्रिहंसे कौरवसर्पयोः' इति मेदिनीकरः । भारतपक्षे—ते कुमारा युधिष्ठिरादयः धार्तराष्ट्रान् धृतराष्ट्रसुतान् दुर्योधनादीन् विपक्षान् विशिष्टसखिसहायादियुक्तान् चिरमुद्वेजयन्ति स्म । तुल्यमन्यत् ॥

गुरुकृपोपनतायुधविद्यया समधिकं परिबृंहिततेजसः ।
पवनसंगतपावकसंनिभा नृपसुताः परिभीषणतां दधुः ॥ ७४ ॥

नृपसुता रामादयः परेषां शत्रूणां भीषणतां भयंकरत्वं दधुर्दधति स्म । अत्र हेतुगर्भविशेषणमाह—पवनेति । पवनेन वायुना संगतो यो वह्निस्तत्संनिभाः । तत्तुल्यास्तद्वत्सु दुःसहा इत्यर्थः । कुत एवमित्याह—गुरूणामध्यापकानां कृपयोपनता या आयुधविद्या धनुर्वेदस्तया समधिकमत्यर्थं परिबृंहितं वर्धितं तेजो येषां ते तथा । 'बृहि वृद्धौ' इति

धात्वनुसारात् ॥ भारतपक्षे—नृपसुता युधिष्ठिरादयः । गुरुर्द्रोणाचार्यः, कृपः कृपाचार्यः ताभ्यामुपनतायुधविद्या यैस्ते । शेषं समानम् ॥

रसप्रसङ्गैरपराजितानां द्विजिह्वमार्गैर्न वशीकृतानाम् ।
तीव्रप्रतापज्वलनेन तेषां भाव्यं भयं शत्रुगणोऽनुमेने ॥ ७५ ॥

तेषां रामादीनां भाव्यं भावि भयं शत्रुगणोऽनुमेने अनुमन्यते स्म । स्वीचकारेत्यर्थः । 'कर्तृकर्मणोः कृति' इति षष्ठी । तत्कर्तृकं भयमित्यर्थः । तत्र हेतुमाह—तीव्रेति । तीव्रोऽनभिभवनीयो यः प्रतापः स एव ज्वलनो वह्निस्तेन भाव्यं भयम् । अतिशौर्यशालित्वादित्यर्थः । तेषां प्रतापज्वलनेन हेतुना शत्रुगणो भाव्यं भयमनुमेने इति वा । तेषां किंविशिष्टानाम् । रसस्य शृङ्गारादेः प्रसङ्गैर्योगैरपराजितानाम् । अवशिनामित्यर्थः । द्विजिह्वेति । द्विजिह्वस्य सूचकस्य खलस्य मार्गैर्वचनादिभिर्न वशीकृतानाम् । दुर्जनवाग्भिरनाकृष्टानामित्यर्थः ॥ पक्षे—युधिष्ठिरादीनां शत्रुगणो दुर्योधनादिर्भाव्यं भयमनुमेने । तेषां भयं तत्कर्तृकमिति वा । तीव्रप्रतापज्वलनेनेति । तीव्रः प्रतापोऽभितापो यस्य तादृशो ज्वलनो वह्निस्तेन । लाक्षागृहवर्तिवह्निनेत्यर्थः । विशेषणमाह—रसेति । रसस्य विषस्य प्रसङ्गैर्दानैरपराजितानाम् । न मृतानामिति यावत् । द्विजिह्वेति । द्विजिह्वमार्गैरपि कृतदंशादिना मार्गैरपि न वशीकृतानाम् । न व्यापादितानामित्यर्थः । द्विजिह्वयुक्तैर्मार्गैर्वा । 'शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वादयो रसः ॥' इति विश्वः । 'द्विजिह्वस्तु खले सर्पे' इति मेदिनीकरः । केचित्तु । तीव्रप्रतापज्वलनेन लाक्षागृहवर्तिवह्निना तेषां युधिष्ठिरादीनां भावि भयमनुमेने परस्परं स्वीचक्रे । लाक्षागृहेणानलेनामीषां मारणं क्रियतामिति परामर्शं चकारेत्यर्थः । अत एव 'रसप्रसङ्गैः—' इत्यादि हेतुगर्भं विशेषणद्वयमित्याहुः ॥

एवं काले याति भग्नारिरक्षो दीव्यच्चेतो बाधितुं गाधिजन्मा ।
भीमद्वेषी भूमिपालं ययाचे दायादस्य प्रेषणं धर्मयोनेः ॥ ७६ ॥

एवं पूर्वोक्तप्रकारेण काले गच्छति सति गाधिजन्मा विश्वामित्रः भूमिपालं राजानं दशरथं दायादस्य सुतस्य प्रेषणं प्रस्थापनं ययाचे याचति स्म । 'दुह्याचि—' इति द्विकर्मकत्वम् । दायं विभाज्यं धनमादत्त इति दायादः सुतः । 'दायादौ सुतबान्धवौ' इत्यमरः । किंविशिष्टस्य । धर्मयोनेरिति । धर्मोत्पत्तिकारकस्येत्यर्थः । 'स्त्रीपुंसयोश्च योनिः स्यादाकारे स्मरमन्दिरे' इति । धर्मयोनेरिति हेतुपञ्चम्यन्तं वा । तथा च गीतायाम्—'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥' गाधिजन्मा किंभूतः । भीमस्य भयंकरस्य द्वेषी । किं कर्तुं ययाचे—रक्षः राक्षसं यज्ञविघ्नोत्पादकं बाधितुं घातितुमिति । किंविशिष्टं रक्षः । जातावेकवचनम् । भग्नोऽरिः शत्रुर्येन तत् भग्नारि । अन्यच्च किंविशिष्टम् । दीव्यच्चेतः सोत्साहं चेतो हृदयं यस्य । भारतपक्षे—भीमद्वेषी दुर्योधनो भूमिपालं धृतराष्ट्रं धर्मयोनेर्युधिष्ठिरस्य दायादस्य ज्ञातेः प्रेषणं प्रस्था-

पनं वनाय प्रेषणं ययाचे । स किंविशिष्टः । भग्ना विदारितारेः शत्रो रक्षा रक्षणं येन स तथा दीव्यच्चेत इति । अन्यच्च किंविशिष्टः । दीव्यत् सोत्साहं परुषं वा तत् चेतो दीव्यच्चेतो बाधितुं शीलं यस्य स दीव्यच्चेतोबाधी । ताच्छील्ये णिनिः । तादृशो यस्तुङ्गो महान् आधिर्मनःपीडा तस्य जन्म यस्मिन् । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः ॥

तद्वाक्यान्ते दत्तकर्णानुमोदः पुत्रप्रीत्या जातकृच्छ्रः कुमारम् ।
धर्मात्मानं प्रेषयामास विश्वामित्रप्रीत्यै सानुजं भूमिपालः ॥ ७७ ॥

भूमिपालो दशरथः कुमारं रामं विश्वामित्रस्य मुनेः प्रीतये सानुजं सलक्ष्मणं तत्तपोवनं प्रस्थापयामास । किंविशिष्टम् । धर्मात्मानं धर्मश्रवणम् । स किंविशिष्टः । तस्य मुनेर्वाक्यान्ते वाक्यावसाने दत्तः कर्णे श्रवणविषयेऽनुमोदः वाग्वादिनानुमोदनं येन स तथा । यद्वा—दत्तः कर्णोऽर्थात् विश्वामित्रस्येति । अनुमोदो हर्ष इति वा । राजवचनात्तस्य कर्णानुमोद इति भावः । पुत्रप्रीत्या तद्विषयस्नेहेन । जातकृच्छ्रो जायमनविश्लेषेण जातकष्ट इत्यर्थः । 'स्यात्कृच्छ्रं कष्टमाभीलम्' इत्यमरः ॥ पक्षे—भूमिपालो धृतराष्ट्रः धर्मात्मानं धर्मपुत्रं कुमारं युधिष्ठिरं सानुजं वनं प्रेषयामास। 'आत्मा वै जायते पुत्रः' इति श्रुतेः । किमर्थम् । विश्वेषाममित्रो दुर्योधनः तस्य प्रीतये प्रेमार्थम् । दायादस्य प्रेषणं क्रियतामिति दुर्योधनवाक्यान्ते दत्तः कर्णेऽनुमोदः स्वीकारो यस्य स तथा । पुत्रप्रीत्या युधिष्ठिरे पुत्रप्रीत्या जातकृच्छ्रो जातकष्ट इति । यद्वा पुत्रप्रीत्या पुत्रस्य दुर्योधनस्य प्रीत्या प्रेमाचरणेन युधिष्ठिरत्यागेन जातकृच्छ्र इति । 'वाजपेयस्य यूपः' इतिवत्परम्परासंबन्धे षष्ठी । पुत्रप्रीत्या धर्मात्मानं प्रस्थापयामासेति योज्यं वा । 'अजातकृच्छ्रः' इत्यकारप्रश्लेषाद्वा । तत्र पुत्राणां दुर्योधनादीनां प्रेम्णाजातकष्टो हृष्टहृदयो न तु सकष्ट एवेति भावः ॥

मात्रा समं सावरजः स राज्ञा प्रस्थापितो धाम तपोधनानाम् ।
स्थानान्तरं विद्विषतां रणेषु समर्थकोदण्डधरः प्रतस्थे ॥ ७८ ॥

स रामः स्थानान्तरमयोध्यापेक्षया स्थानान्तरं प्रतस्थे प्रस्थितः । विश्वामित्रतपोवनं प्रति जगामेत्यर्थः । स किंविशिष्टः । मात्रा समं रामजनन्या कौसल्यया सह राज्ञा दशरथेन तपोधनानां तपस्विनां धाम गृहं प्रस्थापितः । कौसल्यासहितेन दशरथेन वनं प्रस्थापित इत्यर्थः । 'सार्धं साधुसमानेषु समं स्यादभिधेयवत्' इति विश्वः । तथा—सावरजः सकनिष्ठः । लक्ष्मणसहित इत्यर्थः । विद्विषतामिति । द्विषतां शत्रूणां रणेषु समर्थकोदण्डधरः समर्थः सन् धनुर्धर इत्यर्थः । पक्षे—स दण्डधरो यमावतारो युधिष्ठिरः स्थानान्तरं देशान्तरं प्रतस्थे । मात्रा कुन्त्या समं सह । सावरजः सकनिष्ठः भीमादिना सहितः । राज्ञा धृतराष्ट्रेण । अन्यत्समानम् ॥

परकल्पितकामदेहदाहं विषयं प्राप्य स वारणावतंसः ।
अविशङ्कमुवास तत्र भास्वद्द्युतिलाक्षाभवने प्रदोषरुद्धः ॥ ७९ ॥

स रामस्तत्र स्थानान्तरे अविशङ्कं शङ्काशून्यं यथा भवति तथा उवासोषितवान् । किंविशिष्टः । प्रदोषेण रात्रिमुखेन रुद्धः संध्याकालस्य जातत्वादिति । तत्र स्थानान्तरे किंविशिष्टे । भास्वत आदित्यस्य दीप्त्या लाक्षाभं लाक्षासदृशं लोहितं वनं यत्र । यद्वा मदनाश्रमावस्थित्या सदैव तदवस्थित्यै । सदापल्लवत्वाल्लोहितत्वेन तेन लाक्षाभं वनं यस्येति । रणावतंस इति । रणेऽवतंस इव शोभाकरः । वाशब्दश्चार्थे । भिन्नक्रमे विषयं वा विषयं च प्राप्य । किंभूतम् । परमत्यर्थं कल्पितो जनितः । अर्थात् शिवेन । कामस्य कन्दर्पस्य देहदाहो यत्र । तथाविधे प्रीतिभयजनके स्थाने निःशङ्कमुवासेति । शौर्यातिशयप्रकटनमित्यर्थः । कामदेवदाहकेनाग्निना लाक्षाभवनत्वमिति । पक्षे । स युधिष्ठिरः वारणावतं नगरविशेषस्तेन सह वर्तते यो देशस्तं सवारणावतं विषयं प्राप्याविशङ्कं निर्भयं यथा स्यात्तथोवास । भास्वती दीप्तिर्द्युतिर्यत्र । एवंभूते लाक्षाभवने लाक्षानिर्मिते गृहे । ज्वलिते लाक्षागृह इत्यर्थः । प्रदोषैः प्रकृष्टभुजैः प्रदुष्टैर्वाविक्षकैः पुरोचनादिभिर्दुर्योधनसेवकैरेव रुद्धः । परेण शत्रुणा कल्पित आकाङ्क्षितः कामेन इच्छया देहस्य दाहो यत्रेति । 'दोषः स्याद्दूषणोपाये दोषा रात्रौ भुजेऽपि च' इति विश्वः । परेण शत्रुणा कल्पितः समर्पितः काममत्यर्थं देहदाहो यत्रेति वा । यथा शिवेन कन्दर्पदेहदाहः कल्पितस्तथायमपीति ॥

उपनतजनक्लृप्तश्लाघ्यमार्गे च तस्मि-
न्विदुरवचनमारादाप्तभावेन शृण्वन् ।
अनयदपि कियन्तं कार्यमालोक्य कालं
प्रकटितगुरुभक्तिः सानुजो राजसूनुः ॥ ८० ॥

सानुजः सलक्ष्मणो राजसूनू रामस्तत्रानङ्गतपोवने कियन्तं कालमनयदतिवाहितवान् । कार्यं गुरोराज्ञापालनरूपमालोक्य विमृष्य तदनुरोधेनेत्यर्थः । देवताकार्यं राक्षसवधरूपं वा । किंविशिष्टे । उपनतेनानुगतेन जनेन क्लृप्तो निर्मितः श्लाघनीयो मार्गो वर्त्म यत्र । तस्मिन्निति । विदुरेति । विदुरस्य ज्ञातुर्नागरस्य विश्वामित्रस्य वचनमाप्तभावेन शृण्वन्नाकलयन् । 'आराद्दूरसमीपयोः' इत्यमरः । 'ज्ञाता तु विदुरो बिन्दुः' इति च । पक्षे— राजसूनुर्युधिष्ठिरः सावरजः सभीमः भाविकार्यवैरादिरूपमालोक्य कियन्तमपि कालं तत्रालोक्य तत्र लाक्षागृहे अनयत् । उपनतेन विनीतेन भीमस्निग्धेन जनेन क्लृप्तो भूमेरधस्तान्मार्गो निर्गममार्गो यत्र । आप्तस्य बन्धोराश्वस्तस्य । विदुरस्य कौरवमन्त्रिणो वचनं शृण्वन् । अतएव प्रकटिता गुरुभक्तिर्येन स तथा । निर्गमप्रकारोऽपि विदुरेण तस्योपदिष्टः इति श्रुतेः । 'विदुरो नागरे धीरे कौरवाणां च मन्त्रिणि' इति मेदिनीकरः ॥

स्वयमेधितचित्रभानुहेतिस्फुरितां तां वसतिं विहाय भूपः ।
स वनान्तरमुद्यतारिभीमः सुगुरोर्भूतधुरो धरः प्रपेदे ॥ ८१ ॥

स रामो वनान्तरं प्रपेदे प्रपन्नः । ततोऽन्यत्र जगामेत्यर्थः । तां वसतिं विहाय त्यक्त्वेति । किंविशिष्टां ताम् । स्फुरितां दीप्ताम् । शोभायुक्तामित्यर्थः । स किंविशिष्टः । एधिताः समुत्थिताश्चित्रा नानाविधा भानवो दीप्तयो यासां तादृशा हेतयोऽस्त्राणि यस्य स तथा । एधितचित्रभानुहेतिः । 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति विसर्जनीयलोपः । तथा—उद्यता अर्थात्संग्रामायोत्थिता येऽरयः शत्रवस्तेषां भीमो भयंकरः । सुगुर्व्या भूतधुरोऽवताररूपाया धारको वोढेति ॥ पक्षे—स युधिष्ठिरः स्वयमात्मनैवैधितो वर्धितश्चित्रभानुर्वह्निस्तस्य हेतिर्ज्वाला तया स्फुरितां दह्यमानां तामिति लाक्षागृहरूपां वसतिं विदुरोपदेशाद्विहाय वनान्तरं प्रपेदे इति । शेषं समानम् ॥

विलङ्घ्य गङ्गां व्रजतः सुदूरमम्लानदेहस्य बलानुभावात् ।
तस्याग्रतः सुन्दरतोज्ज्वलाङ्गी निशाचरी प्रादुरभून्मदान्धा ॥ ८२ ॥

तस्य रामस्याग्रतो निशाचरी ताटकाभिधाना राक्षसी प्रादुरभूत् प्रकाशं गतेति । 'प्रकाशे प्रादुराविः स्यात्' इत्यमरः । किंविशिष्टा । मदान्धेति । मदेन मत्ततया गर्वेण वा अन्धा । विवेकशून्या दर्पान्धेत्यर्थः । तथा—सुन्दे दानवविशेषे स्वामिनि रतानुरक्तेति । उज्ज्वलाङ्गीति । ज्वलतीति ज्वलो ज्वाला । उद्गता ऊर्ध्वं गता वा ज्वाला यत्रेदृशमङ्गं यस्याः सा तथोक्ता मुखेनोल्कात्यागं कुर्वतीत्यर्थः । किंविशिष्टस्य बला । या विश्वामित्रदत्ताया विद्याया अनुभावादम्लानदेहस्याम्लानशरीरस्य । गङ्गां विलङ्घ्य तीर्त्वा । सुदूरमतिदूरं देशान्तरं व्रजतः ॥ भारतपक्षे—तस्य युधिष्ठिरस्य । बलानुभावात् बलस्य शक्तेरनुभावादम्लानदेहस्य । हिडिम्बा नाम निशाचरी मदान्धा कामोन्मत्ता कामुकी । तथा—सुन्दरस्य भावः सुन्दरता तयोज्ज्वलाङ्गी रम्याङ्गी । तुल्यमन्यत् । 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति मेदिनीकरः । 'अन्धं तु तिमिरे क्लीबं चक्षुर्हीनेऽभिधेयवत्' इति च ॥

स्ववेगचलितोच्छलत्खगमृगाहिडिम्बावली
निरन्तरतलोदरीकृतकदक्षिणा सा क्षणात् ।
निरीक्ष्य नृपनन्दनं मुखरकौशिके कानने
दशान्तरमुपागमत्किमपि कामचारोद्धुरम् ॥ ८३ ॥

सा ताटका निशाचरी किमप्यनिर्वचनीयं दशान्तरमवस्थान्तरमसौम्यरूपत्वमुपागमदुपगता । क्षणान्निमेषार्धात् तत्र कानने वने नृपनन्दनं रामं निरीक्ष्य दृष्ट्वा । किंभूते वने । मुखरः सशब्दो महास्वनवान् कौशिको विश्वामित्रो यस्मिन्निति । दशान्तरं किंभूतम् । कामचारेण स्वेच्छया करणेनोद्धुरं स्वेच्छया जनितम् । सा किंभूता । स्ववेगेन चलिताश्चञ्चला अत एवोच्छलन्तो ये खगाः पक्षिणः, मृगा आरण्याः पशवः, अहयः सर्पास्तेषां या डिम्बावली कालखण्डावली तया निरन्तरमत्यर्थं व्याप्तमुदरं यस्याः सा तथा । यद्वा स्ववेगचलिताच्च उच्छलत्खगमृगाहरणे यया सा तादृशी च डिम्बावली

निरन्तरतलोदरी चेति द्वन्द्वसमासे रूपम् । स्ववेगचलितोच्छलत्खगमृगाहयो यत्र एवंभूतया डिम्बावल्या निरन्तरमुदरं यस्या इति वा । 'डिम्बो भयध्वनावण्डे पुष्फुषप्लीहविप्लवे' इति मेदिनीकरः । तथा—कृतके कपटे दाक्षिणा दक्षा । यद्वा—कृतकः कृत्रिमो दक्षिणः सरलो वामादिर्वा यस्याः सा तथा । दक्षिणः संवपनावरच्छन्दानुवृत्तिषु । 'त्रिषु वापीभवेऽपि स्त्री याज्यदानप्रतिष्ठयोः' इति विश्वः । 'कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः । कोषशोलूकपोश्च स्याद्विश्वामित्रमुनावपि ॥' इति मेदिनीकरः । पक्षे—सा हिडिम्बा राक्षसी नृपनन्दनं निरीक्ष्य किमप्यनिर्वचनीयं दशान्तरं मन्मथसंचारेणोद्भवमवस्थान्तरमुपगता । तद्दर्शनेन मन्मथाविकारवती बभूवेत्यर्थः । मुखरोऽत्यर्थं सशब्दः कौशिक उलूको यत्र तादृशे वने । कथंभूता । स्ववेगेन चलिता अतएवोच्छलन्तः खगाश्च यस्याः सकाशात् तत्र सा तथा । वलीभिस्त्रिवलीभिर्निरन्तरमनवकाशं तलं यत्र एवमुदरं यस्याः सा तथेति । 'दशावस्था दीपवर्तिवस्त्रान्ते भूम्नि योषिति' इति मेदिनीकरः । 'तलं स्वरूपेऽनूर्ध्वे स्त्री क्लीबं ज्याघातवारणे' इति मेदिनीकरः ॥

विषमेषुप्रहारार्तां तां कृत्वापततो द्रुतम् ।
स हि डिम्बस्य शकलैरपुष्णात्पिशिताशिनः ॥ ८४ ॥

स रामः पततः पक्षिणः । 'पतत्पतत्रिपतग—' इत्यमरः । पिशिताशिनो मांसादान् डिम्बस्य कालखण्डस्य शकलैः कालखण्डैरर्थात् ताटकाया अपुष्णात् पुपोष । किं कृत्वा । शीघ्रं तां ताटकां विषमस्य अतिनिशितस्य बाणस्य प्रहारेणार्तां पीडितां कृत्वा संपाद्य ।'कृती छेदने' । 'शुक्रे शुक्रेशनाशं दिशति' इत्यादिवत्तकारस्याद्वित्वेऽप्यत्र श्लेषे न दोषः । तस्या उरःस्थलं बाणेन निशितेन संपाद्येत्यर्थः। 'हिर्हेतावववधारणे' इति विश्वः। पक्षे । स भीमः आपतत आगच्छतः । हिडिम्बस्य राक्षसविशेषस्य शकलैर्देहखण्डैः पिशिताशिनो गृध्रादीन् पक्षिणोऽपुष्णात् । तां डिम्बां विषमेषुः पञ्चबाणः कामः तस्य प्रहारेणार्तां कृत्वा विधाय स्वकीयदर्शनेन वा स्मरबाणखिन्नां कृत्वेत्यर्थः ।

प्रतीपदर्शिनी सैषा विचचारास्य यत्पथि ।
ततो गुरुगिरा तस्या जीवितेशो बभूव सः ॥ ८५ ॥

यतो हेतोरस्य रामस्य पथि मार्गे सैषा ताटका प्रतीपदर्शिनी विपरीताचरणा निकामद्वेषिणी विचचार बभ्राम । ततो हेतोर्गुरुगिरा विश्वामित्रवचनेन तस्यास्ताटकाया जीवितेशो यमः स रामो बभूव । पक्षे—अस्य भीमस्य सैषा हिडिम्बा पथि मार्गे प्रतीपदर्शिनी वनिता विचचार संजाता ततो हेतोर्गुरुगिरा गुरोर्ज्येष्ठभ्रातुर्युधिष्ठिरस्य वचनेन तस्या हिडिम्बाया जीवितेशः स्वामी बभूव। 'प्रतीपदर्शिनी वामा वनिता महिला तथा' इत्यमरः । 'जीवितेशो यमे पुंसि त्रिषु स्याज्जीवितेश्वरे' इति विश्वः॥

वचनमात्मगुरोरनुतिष्ठता नृपसुतेन समेत्य निशाचरी ।
अनुपतत्पिशिताशिघटोत्कचा समययुक्तमपायमवाप सा ॥ ८६ ॥

सा निशाचरी समययुक्तं तत्कालोचितमपायं मरणमवाप गतवती। किं कृत्वा । नृपसुतेन रामेण समेत्य संगतीभूय । किंविशिष्टेन । आत्मगुरोर्विश्वामित्रस्य वचनं कुर्वता । सा किंविशिष्टा । अनु पश्चात्पतन्ती पतमाना पिशिताशिनां गृध्रादीनां घटा समूहो यत्र तादृशी । एवमुक्त्वा उद्गतकेशेत्यर्थः । भिन्नं वा पदद्वयमिति ॥ पक्षे—सा निशाचरी हिडिम्बा समययुक्तं व्यवस्थासमयसहितमपायं विश्लेषमवाप । स्मरणसमये समागमिष्यामीत्येवंरूपा व्यवस्था समयः । आत्मगुरोर्युधिष्ठिरस्य वचनमनुतिष्ठता नृपसुतेन भीमेन समेत्य स्वामिभावेन समागममेत्य । अनु पश्चाद्भीमसमागमादनुपतन्बहिर्भवन् । उदरादित्यर्थः । पिशिताशी मांसभक्षको राक्षसो घटोत्कचनामा पुत्रो यस्या इति ॥

महामुनेः प्राप्तवतस्तपोवनं नरेन्द्रसूनोरथ धर्मजन्मनः ।
सद्भावनम्रस्य पराशरोद्भवप्रसादलाभेन बभूव निर्वृतिः ॥ ८७ ॥

नरेन्द्रसूनो रामस्य परा श्रेष्ठा निर्वृतिः स्वास्थ्यं बभूव इति । कुत इत्याह—शराद्बाणादुद्भव उत्पत्तिर्यस्य एवंरूपस्य प्रसादस्य लाभात् । अर्थात् मुनिभिः कृतस्य । शरेण ताटका यद्व्यापादनात् तपोधनानां भयहानिर्जातेति । संतोषात्प्रसादो जात इति । धर्मजन्मनः धर्मोत्पत्तिस्थानस्य महामुनेः कौशिकस्य तपोवनं प्राप्तवतः ॥ पक्षे—नरेन्द्रसूनो राजपुत्रस्य धर्मजन्मनो युधिष्ठिरस्य पराशरोद्भवप्रसादलाभेन पराशरोद्भवो व्यासस्तस्य यः प्रसाद इन्द्राराधनाय तपस्यां कुरु इत्येवंरूपस्तल्लाभेन । महामुनेः शालिहोत्रस्य तपोवनं प्राप्तवत इति । 'निर्वृतिः सुस्थितावस्तगमने च सुखे स्त्रियाम्' इति । अन्यत्समानम् ॥

तेनैवैकेन गुरुणा स निर्वृत्तप्रयोजनः ।
एकचक्राहितगतिर्भास्वानिव तदा बभौ ॥ ८८ ॥

स रामस्तदा बभौ शुशुभे । किंभूतः । तेनैवैकेनाद्वितीयेन गुरुणा विश्वामित्रेण निर्वृत्तं संपन्नं प्रयोजनं यस्य स तथा। एकचक्रे श्रेष्ठराज्ये अहिता गतिर्येन स तथा । क इव । भास्वानिवेति । भास्वानपि एकचक्रेणैकरथाङ्गेनाहितगतिः ॥ पक्षे—स युधिष्ठिरः गुरुणा व्यासेनेति। एकचक्रे नगरविशेषे एकचक्र इति नाम्ना प्रसिद्धे बकदैत्यस्य पुरे आहिता गतिर्येनेति । 'चक्रः कोके पुमान्क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे देशान्तरे कुम्भकारोपकरणास्त्रयोः ॥' इति मेदिनीकरः ॥

तस्मिन्प्रदेशे नृपसूनुसङ्गात्सनाथभावं सहसा प्रपन्ने ।
क्रतुक्रियासक्तधियां मुनीनां रक्षोनिमित्तं भयमुद्दिदीपे ॥ ८९ ॥

तस्मिन्प्रदेशे कौशिकतपोवने नृपसूनोस्तस्य रामस्य सङ्गात्सनाथभावं संरक्षकत्वं प्रपन्ने सति मुनीनां तपोवनवासिनां रक्षोनिमित्तं राक्षसजनितं भयं भीतिरुद्दिदीपे । उद्दीप्तं वृत्तमित्यर्थः । तेषां किंविशिष्टानाम् । क्रतुक्रियासु यज्ञक्रियासु सक्ता बुद्धिर्येषां ते तथा । सहसा हठादतर्कितमित्यर्थः ॥ पक्षे—तस्मिन्प्रदेशे शालिहोत्रतपोवने रक्षो बक

नामा दैत्यस्तत्र तन्निमित्तं तदुत्पन्नम् । नृपसूनवो युधिष्ठिरादयः ॥ अन्यत्समानम् । 'निमित्तं हेतुलक्ष्मणोः' इति मेदिनीकरः ॥

रक्षोहितद्विजायस्तदृष्टिमात्राभिनोदितः ।
मरुदानन्दनो यत्नमातस्थौ नृपनन्दनः ॥ ९० ॥

नृपनन्दनो रामो यत्नमातस्थौ। रक्षोवधाय सावधानो बभूवेत्यर्थः । कथंभूतः । मरुतां देवानामानन्दनः आनन्दजनकः। आनन्दयतीत्यानन्दनः । तथा किंविशिष्टः। रक्षसा प्रहिता रक्षोहिता द्विजास्तैरायस्तास्तदभिमुखं क्षिप्ता या दृष्टयस्तन्मात्रेणाभिनोदितः प्रेरितः । दृष्टिसंज्ञया रक्षसां वधाय तैर्नियुक्त इति । रक्षांस्यहितानि येषां ते रक्षोहिता इति वा । 'आयस्तस्तेजिते क्षिप्ते क्लिशिते कुपितेऽपि वा' इति मेदिनीकरः ॥ पक्षे—मरुद्वायुस्तस्यानन्दनो मरुदानन्दनो नृपसुतो भीमो यत्नमातस्थौ । किंविशिष्टः । मात्रा जनन्या कुन्त्या अभिनोदितः प्रेरितः 'त्वं बकदैत्यं जहि' इति । कथम् । रक्षोहितद्विजायस्तदृष्टि रक्षोहितद्विजैरायस्ता दृष्टिर्यत्रेति क्रियाविशेषणम् ॥

मारीचेष्टमनिष्टकारिणमसौ सिद्धाश्रमस्थायिनां
विप्राणामभयार्थमध्वरविधेर्गोप्ता गुरोराज्ञया ।
सद्यः सानुचरं निशाचरपतिं भीमः सुबाहुं रणे
दोर्वीर्येण जघान वीरपदवीमारुह्य घोराम्बकम् ॥ ९१ ॥

असौ रामः सुबाहुं निशाचरपतिं राक्षसश्रेष्ठं जघान हतवान् । किंविशिष्टः । भीमो भयानकः । गुरोः कौशिकस्य आज्ञया अध्वरविधेर्यज्ञक्रियाया गोप्ता रक्षकः । किंविशिष्टं तम् । मारीचस्य भ्रातू राक्षसस्य इष्टं प्रियम् । तथा सानुचरं ससैन्यम् । रणे संग्रामे अनिष्टकारिणम् । अर्थान्मुनीनामिति । दोर्वीर्येण बाहुबलेन वीरपदवीं वीरमार्गमारुह्येति । घोराम्बकम् । अम्बैवाम्बका माता ताटका निशाचरी । घोराम्बका यस्य तादृशम् । घोरे अम्बके नेत्रे यस्येति वा । किमर्थमित्याह—सिद्धाश्रमे तस्मिंस्तपोवने स्थायिनामवस्थितानां विप्राणामभयार्थमिति ॥ पक्षे—असौ भीमो निशाचरपतिं बकं बकनामानं जघानेति । किंभूतम् । सुबाहुं शोभनभुजम् । घोरां कठिनां वीरपदवीमारुह्येति । गुरोर्युधिष्ठिरस्याज्ञयेति । कथंभूतं बकम् । मारी जनक्षयस्तत्र चेष्टा यस्य तमिति । 'मारीचः स्याज्जनक्षये' इति मेदिनीकरः ॥

भूचरद्विजगणाशनं द्विषं खेचरद्विजगणाशनं ततः ।
तं विधाय कुलमग्रजन्मनां राक्षसक्षयकरो ररक्ष सः ॥ ९२ ॥

स रामोऽग्रजन्मनां ब्राह्मणानां कुलं समूहं ररक्ष । राक्षसानां क्षयं करोतीति राक्षसक्षयकर इति । द्विषं सुबाहुं खेचरद्विजगणाशनं खे चरन्तीति खेचरा आकाशचारिणो द्विजाः पक्षिणो गृध्रादयः तेषामशनं भोजनीयं कृत्वेति । तं कथंभूतम् । भुवि चर-

न्तीति भूचरा ये द्विजा विप्रास्तानाशितुं भक्षयितुं शीलं यस्यैवंभूतं तमिति ॥ पक्षे—स भीमः । द्विषं बकम् । 'कुलं जनपदे गेहे सजातीयगणेऽपि च' इति विश्वः । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । भूचरद्विजगणोऽशनं भोजनं यस्येति भूचरद्विजगणाशनस्तादृशं वा ॥

द्विजराजगवीभिः स वर्धितश्रीर्नृपात्मजः ।
जगदानन्दयन्साक्षात्कामदेव इवाबभौ ॥ ९२ ॥

स नृपात्मजो रामः कामदेवः कन्दर्प इव बभौ शुशुभे । कथंभूतः । द्विजराजो ब्राह्मणश्रेष्ठः कौशिकस्तस्य वाणीभिः वर्धिता श्रीर्लक्ष्मीर्यस्य स तथा । जगत्त्रिभुवनमानन्दयन् । उद्धृतकण्टकत्वात् । कन्दर्पेऽपि द्विजराजस्य गोभिः किरणैः वर्धितश्रीर्विहितोद्रेको जगत्त्रैलोक्यमानन्दयन्नपि भवति । यद्वा एतत्काव्यकारयिता नृपः कामदेवनामा तद्वद्बभासे । सोऽपि ब्राह्मणाशीर्वादैः वर्धितश्रीरिति । द्विजराजगवीभिरित्यत्र 'गोरतद्धितलुकि' इतिवत्समासान्तः ॥ गवीशब्दोऽपीति केचित् । पक्षे—नृपात्मजो भीमसेनः द्विजराजगवीभिः शालिहोत्रतपोवनवासिब्राह्मणाशीर्वादैः वर्धितश्रीरिति । किं कुर्वन् । जगदानन्दयन् । शत्रोर्बकदैत्यस्य विनाशादिति । गोशब्दः पशुभूम्यंशुवागर्थः इति । शेषं समानम् । एतच्च काव्यं काव्यकारयितुर्नृपस्य कामस्य नामाङ्कमिति सर्गान्ते 'कामदेव इवाबभौ' इति कामदेवाङ्कं काव्यं ज्ञेयम् ॥

इति हरधरणीप्रसूतकादम्बकुलतिलकचक्रवर्तिवीरकामदेवप्रोत्साहितकविराजपण्डितविरचिते राघवपाण्डवीये राजाधिराजश्रीमदमरसिंहकारिते श्रीशशिधरकृते चैतद्व्याख्याने प्रथमः सर्गः ।

## द्वितीयः सर्गः ।

नृपेण कन्यां जनकेन दित्सितामयोनिजां लम्भयितुं स्वयंवरे ।
द्विजप्रवर्येण स धर्मनन्दनः सहानुजस्तां भुवमप्यनीयत ॥ १ ॥

द्विजप्रवर्येण ब्राह्मणश्रेष्ठेन कौशिकेन स धर्मस्य नन्दनः धर्मं नन्दयति वा धर्मप्रधानत्वात् । तामपि भुवं जनकराजधानीं मिथिलामनीयत नीतः । किंभूतः । सहानुजः सलक्ष्मणः । किमर्थमित्याह—कन्यामिति । अयोनेर्जाता अयोनिजा तां स्वयमुत्पन्नां कन्यां लम्भयितुं प्रापयितुम् । किंभूताम् । जनकेन जनकनाम्ना नृपेण स्वयंवरे दित्सितां परस्मै दातुमिष्टाम् । सीतया सह विवाहनिमित्तं रामस्तत्र नीत इत्यर्थः ॥ पक्षे—द्विजप्रवर्येण ब्राह्मणश्रेष्ठेन शालिहोत्रतपोवनवासिना सोऽपि धर्मनन्दनो युधिष्ठिरः । अपिर्भिन्नक्रमे । तां भुवं द्रुपदनगरीमनीयत । नृपेण द्रुपदेन जनकेन पित्रा अयोनिजां यज्ञकुण्डे संभूतां कन्यां द्रौपदीं लम्भयितुम् । सहानुजो भीमादिभ्रातृसहितः ॥

मार्गेष्वथो दीर्घतमःसुतस्य कलत्रकृच्छ्रप्रतिमोक्षणेन ।
अङ्गारवर्णस्य जितात्मनोऽसौ चकार तोषं नरदेवजन्मा ॥ २ ॥

नरदेवो राजा तस्माज्जन्म यस्य स नरदेवजन्मा प्रस्तावाद्रामो दीर्घतमःसुतस्य गौतमस्य ऋषेः प्रीतिं चकार कृतवान्। कुत इत्याह—मार्गेष्विति। वर्त्मनीत्यर्थः। कलत्रस्य तत्पत्न्या अहल्यायाः कृच्छ्रस्य कष्टस्य शिलामयरूपस्य प्रतिमोक्षणेन त्यागेन। किंविशिष्टस्य। जितात्मनो यतचित्तस्य। अङ्गारवर्णस्य अतितेजस्वित्वाज्ज्वलिताङ्गारसदृशस्य। अथो आनन्तर्ये। 'जितेन्द्रियोऽसौ' इति पाठान्तरम्। तत्र—असौ राम इत्यस्य विशेषणम्। पुरा किल गौतमपत्नी अहल्या शक्रेण संगता। ततस्तेन गौतमेन 'पाषाणमयी भव' इति शप्ता। 'रामावतारस्य विष्णोश्चरणरेणुना स्ववपुः प्राप्स्यसि' इति शापान्तमुक्तवान्—इति पुराणोक्तिः॥ पक्षे—नरदेवजन्मार्जुनस्तस्याङ्गारवर्णस्य गन्धर्वविशेषस्य तोषं चकार। मार्गेषु वर्त्मसु। किंविशिष्टेषु। दीर्घं बृहत्तमोऽन्धकारो येषु तेष्विति। तत्कलत्रस्य यत्कृच्छ्रमापन्मोक्षणं तेन निमित्तेनेत्यर्थः। वर्त्मनि महान्धकारे अङ्गारवर्णो नाम गन्धर्वः कुन्त्या सह संभोगं कुर्वाणोऽर्जुनेन दृष्टः। ततोऽर्जुनेनोल्कया हन्तुं व्यापादितुमारब्धः तत्पत्न्याश्च कष्टाचरणेन प्रतिमुक्तः—इति पुराणम्॥

सार्धं द्विजैः संवृतधाम्नि जिष्णावुपेयुषि ख्यातककुत्स्थवंशे।
नयज्ञसेनस्य नयोपपन्ना राज्ञः पुरी भूपतिभिः पुपूरे॥ ३॥

राज्ञो जनकस्य पुरी भूपतिभी राजभिः पुपूरे पूर्णा। ख्यातककुत्स्थवंशे ककुत्स्थकुलोत्पन्ने ख्याते रामे उपेयुषि उपागते सति द्विजैः सार्धं ब्राह्मणैः सहेति। किंभूते तस्मिन्। जिष्णौ जयशीले। संवृतधाम्नि संवृतं प्रकाशितं धाम तेजो यस्य स तथा। तस्य जनकस्य किंभूतस्य। नयज्ञसेनस्य नयं जानातीति नयज्ञा तादृशी सेना यस्य स तथा। नयोपपन्नेति पुरीविशेषणम्। नयेनोपपन्ना॥ पक्षे—यज्ञसेनस्य द्रुपदस्य राज्ञः पुरी भूपतिभिर्न पुपूरे किम्। अपि तु पुपूरे। शिरश्चालने नकारः। द्विजैर्ब्राह्मणैः सार्धं जिष्णौ अर्जुने उपागते। ककुदि राजचिह्ने तिष्ठतीति ककुत्स्थः। ककुत्थो यो वंशोऽन्वयः तत्र भवस्तादृशस्य अतएव ब्राह्मणरूपेण तन्मध्येऽवस्थानात्संवृतधाम्नि गुप्तस्वीयतेजसि॥

आलोलचामरमरालचितान्तरालै-
श्छत्रोत्करैः स्तबकिता पृथिवीश्वराणाम्।
नानादिगन्तरजुषां कमलाकराणा-
मेकालयत्वमिव सा नगरी जगाम॥ ४॥

सा नगरी जनकनगरी द्रुपदनगरी वा पृथिवीश्वराणां पद्माकराणां सरसामेकालयत्वमिव एकस्थानस्थितत्वमिव जगाम गच्छति स्म। कमला लक्ष्मीः करे हस्ते येषां ते कमलाकराः सलक्ष्मीका इति विशेषणं वा। एकस्यालयस्य वसतेर्भावः। एकालयसाधारणं विशिनष्टि—छत्रोत्करैरातपत्रसमूहैः स्तबकिता। अर्थात्पृथिवीश्वराणामेव। ईषल्लोलाश्चामरा एव मराला हंसास्तैश्चितमन्तरालं येषां ते। यद्वा—कमलालयानामेकालयत्वं जगाम। सरसामुत्कृष्टस्थानं बभूव सा नगरी पृथिवीश्वराणां छत्रोत्करैः स्तबकिता। कमलाकराणा-

मपि कमलमध्ये राजहंसा अवतिष्ठन्त इति । नानादिशामन्तरजुषां तन्मध्यस्थितानां तत्रागतानां सरसामपि विशेषणम् । नानादिगन्तावकाशवर्तिनामित्यर्थः । उभयत्रापि समानम् ॥

सद्योमृष्टाभरणकिरणैः पूरयन्तो दिगन्ता-
न्वीर्योत्कर्षादहमहमिकां भूभृतो दर्शयन्तः ।
वैन्ध्यं वैन्ध्यास्तरव इव ते पुष्पिताः सानुभागं
क्षत्रायत्ते विहितमतयः शोभयन्ति स्म रङ्गम् ॥ ५ ॥

ते भूभृतो राजानो रङ्गं स्वयंवरस्थानं शोभयन्ति स्म । अशोभयन्नित्यर्थः । उभयत्र तुल्याः । किंभूताः सद्यस्तदानीं मृष्टानां मार्जितानामाभरणानां किरणैर्दिगन्तान्पूरयन्तो व्यश्नुवानाः । वीर्यस्य सामर्थ्यस्योत्कर्षादहमहमिकामहंकारं मामेव वरिष्यतीत्येवंरूपं दर्शयन्तः मयैवेयं प्राप्येति, अहमेवैषां मध्ये समर्थो रूपादिसंपन्न इति एतच्छुल्कनिवहो मयैव साध्य इति च । क्षतात्त्रायत इति क्षत्रः तस्यायत्तं साहसकर्मेत्यर्थः । तत्र विहिता मतिर्यैस्ते यं मनसा स्पृहयति तं वृणोतु मयैव बलादियं हर्तव्येति कृतोद्योगा इत्यर्थः । के कमिव शोभयन्ति । वैन्ध्यास्तरवो विन्ध्योत्पन्ना द्रुमा वैन्ध्यं विन्ध्यसंबन्धिनं सानुभागं शिखरप्रदेशमिव । विन्ध्ये भवा वैन्ध्याः । विन्ध्यस्यायं वैन्ध्यस्तमिति । पुष्पिताः कुसुमिताः समृद्धा वा ॥

अथानुरूपेण जनेन गुप्ता मनोज्ञवेषा मनुजेन्द्रकन्या ।
उपाययौ लोचनवर्त्म राज्ञामाज्ञेव मूर्ता मकरध्वजस्य ॥ ६ ॥

अथानन्तरं सा मनुजेन्द्रकन्या मनुजेन्द्रस्य जनकस्य द्रुपदस्य वा कन्या सीता द्रौपदी वा राज्ञां लोचनवर्त्म नेत्रपथमुपाययावुपागता । तैः सा दृष्टेत्यर्थः । किंभूता । अनुरूपेण योग्येन जनेन गुप्ता रक्षिता मनोज्ञवेषा मनोहरालंकारा । मकरध्वजस्य कामस्य मूर्ता कृतशरीरपरिग्रहा आज्ञेव । सर्वचित्ताकर्षणात् ॥

सा तत्र यानादवतीर्य तन्वी सौदामिनीवाम्बुदराजिमध्यात् ।
समीपमाप स्वपणीकृतस्य चापस्य पुष्पायुधचापयष्टिः ॥ ७ ॥

सा तन्वी सीता द्रौपदी च तत्र रङ्गे यानादवतीर्य चापस्य धनुषः समीपमागता । किंभूतस्य । स्वस्य स्वकीयविवाहविधिप्रतिपादनस्य पणीकृतस्य शुल्कीकृतस्य स्वेनात्मना पणीकृतस्य वा । केव । अम्बुदराजिमध्यान्मेघपरम्पराया अन्तरतः सौदामनीव विद्युदिव । यथा विद्युन्मेघादवतीर्य शक्रधनुषः समीपमागच्छतीति । सा का । पुष्पायुधस्य कामदेवस्य चापयष्टिर्धनुर्दण्ड इव तया जगज्जयित्वात् ॥

शक्तिर्मूर्तिमयी स्मरस्य जगतो नारीमयं मण्डनं
कान्तानामुपमानकल्पनकलाकान्तेः समुत्तेजनम् ।

लक्ष्मीः संसृतिसागरस्य सरसी लावण्यपुण्याम्भसां

सा राजव्रजचक्षुषां क्षणमभूदानन्दपण्यस्थली ॥ ८ ॥

सा सीता द्रौपदी वा राजव्रजानां राजलोकानां चक्षुषां नेत्राणां क्षणं मुहूर्तमानन्दपण्यस्थली अभूत् वृत्ता आनन्द एव पण्यं क्रय्यविक्रेयवस्तु तस्य स्थली तत्स्थानं बभूव । आनन्द एव पण्यं यस्यां सा तादृशी स्थली इति वा । किंभूता । स्मरस्य कामस्य मूर्तिमयी कृतशरीरपरिग्रहा शक्तिरस्त्रविशेषः सामर्थ्यं वा । 'शक्तिरस्त्रान्तरे गौर्यामुत्साहादौ बले स्त्रियाम्' इति विश्वः । जगतः संसारस्य नारीमयं स्त्रीरूपं मण्डनमलंकरणम् । कान्तानां स्त्रीणामुपमानकल्पनायाः सादृश्यस्य या कला तस्याः कान्तेः समुत्तेजनं प्रकाशकम् । 'कला वै वृद्धिशिल्पादौ कलनाकालमानयोः' इति यादवप्रकाशः । संसृतिः संसार एव सागरस्तस्य लक्ष्मीरिव कमलेव । लावण्यपुण्याम्भसां सरसीवेति लावण्यमेव पुण्याम्भांसीति ।

सौन्दर्यश्रीपताका निखिलयुवमनःशृङ्खला लोकचक्षुः-

पक्ष्मस्पन्दव्युदासः सुरमुनिहृदयाकर्षणः[1] कामपाशः ।

तारुण्योद्यानवल्ली पतिसुकृतकला कामकोदण्डमौर्वी

रेजे तद्दोर्लताग्रे वरवरणकृते कल्पिता पुष्पमाला ॥ ९ ॥

तस्याः सीताया द्रौपद्या वा भुजलताया अग्रस्थिता पुष्पमाला वरणमाला रेजे शुशुभे । वरस्य जामातुर्वरणार्थं स्वीकारार्थं कल्पितेति । तां विशिनष्टि—सौन्दर्यलक्ष्म्याः पताका वैजयन्ती । 'पताका वैजयन्त्यां च सौभाग्ये नाटकाङ्गयोः' इति विश्वः । निखिलयुवजनमनसां शृङ्खला इव बन्धनरज्जुरिव । तथा—लोकचक्षुषां पक्ष्मस्पन्दस्य निमेषस्य व्युदासो निरासस्तत्र हेतुरिवेति । सुरमुनीनां देवमुनीनां हृदयाकर्षणः कामपाशः कन्दर्पास्त्रविशेषः । तारुण्यमेवोद्यानं तस्य वल्लीव लतेव । पत्युः सुकृतस्य पुण्यस्य कलेव । कामकोदण्डस्य कामधनुषो मौर्वी ज्येव ।

सा दुग्धसिन्धोरुदितेव लक्ष्मीर्लावण्यमस्या नियतं सुधैव ।

यदेतदापीय दृशा प्रपेदे मनुष्यलोकेऽप्यनिमेषभावः[2] ॥ १० ॥

सा सीता द्रौपदी वा दुग्धसिन्धोरुदितोत्थिता लक्ष्मीरिव । अस्या लावण्यं नियतं निश्चितं सुधैव अमृतमेव । कुत एवमित्याह—यतो हेतोरेतल्लावण्यमेतस्याः सीतायाः द्रौपद्या वा लावण्यं निपीय दृशा कर्त्र्या मनुष्यलोकेऽपि अनिमेषभावो निमेषशून्यत्वं प्रपेदे प्रापि । देवानामप्यनिमेषता सुधापानादिति भावः ॥

---

१. 'कर्षणे' कलि. २. 'मनुष्यलोकोऽप्यनिमेषभावम्' कलि.

राज्ञां मनोदर्पणमण्डलेषु प्रत्येकमेका युगपत्स्फुरन्ती ।
रराज बाला कुमुदाकरेषु लेखा हिमांशोः प्रतिबिम्बितेव ॥ ११ ॥

बाला सीता द्रौपदी वा रराज शुशुभे । केव । कुमुदाकरेषु सरःसु प्रतिबिम्बिता हिमांशोश्चन्द्रस्य लेखा कलेव । किंविशिष्टा । राज्ञां नृपाणां मनोदर्पणमण्डलेषु आदर्शसदृशेषु निर्मलेषु मनःसु प्रत्येकं युगपत् एकैव स्फुरन्ती चन्द्रलेखेवोदकेष्विति साम्यम् ॥

पुष्पैर्विचित्रैर्ग्रथितो विरेजे तस्या घनः कुञ्चितकेशपाशः ।
तद्वक्त्रपद्मोत्तमगन्धलोभात्सान्द्रीभवद्भृङ्गपरम्परेव ॥ १२ ॥

तस्याः सीताया द्रौपद्या वा विचित्रैर्नानाविधैः कुसुमैर्निबद्धो घनः सान्द्रः कुञ्चितोऽरालः केशपाशः रराज । तस्याः सीतायाः द्रौपद्या वा वक्त्राम्बुजस्य मुखपद्मस्य उत्तमगन्धलोभात् उत्कृष्टसौरभलोभात् सान्द्रीभवन्ती निबिडा भृङ्गपरम्परा भ्रमरपङ्क्तिरिव ॥

वक्त्रस्य तस्याः प्रसमीक्ष्य शोभां तारापतिर्मण्डलमाप भानोः ।
तथापि नो साम्यमुपैति दीनस्तप्तुं तपः प्राप पुरारिमौलिम् ॥ १३ ॥

तस्याः सीतायाः द्रौपद्या वा मुखस्याननस्य कान्तिं प्रसमीक्ष्य दृष्ट्वा तारापतिश्चन्द्रो भानोरादित्यस्य मण्डलं प्राप । एतयोर्मुखस्य साम्यप्राप्त्यर्थं तपस्तप्तुमिवेत्यर्थः । तथापि तन्मुखाभ्यां सादृश्यं न प्राप अत एव दीनः क्षीणः सन् पुरारेः शिवस्य मौलिं शिरः प्राप । किमर्थम् । तपस्तप्तुम् । तपसा तत्प्राप्तं भविष्यतीति ॥

एतस्या नेत्रशोभां तुलयति न यदा खञ्जनः प्राप्तकीर्ति-
र्नूनं वातापिहन्तुः श्रयति पदमतो योगयुक्तस्तपस्वी ।
तद्वन्नीलोत्पलेन प्रतिदिवसमतो मग्नमप्सु प्रविष्टाः
कान्तारं तद्वदेण्यः प्रथितमिह यतो नास्त्यलभ्यं तपोभिः ॥ १४ ॥

प्राप्ता कीर्तिर्येन । अर्थात्सौन्दर्येण । स प्राप्तकीर्तिः खञ्जनः पक्षिविशेषो वातापिर्नाम दैत्यविशेषस्तस्य हन्तुर्नाशकस्यागस्त्यस्य पदं तपोवनं श्रयति गच्छति । तपस्वी योगयुक्तो ज्ञानवान् तपश्चरणायेति भावः । तद्वदिति यथा नेत्रशोभामलब्ध्वा खञ्जनो दक्षिणाशां प्रति गतस्तथा नीलोत्पलेन तपश्चरणाय प्रतिदिनमप्सु मग्नं तन्नेत्रशोभाप्राप्त्यर्थमित्यर्थः । यथा खञ्जननीलोत्पले तद्वदेण्योऽपि हरिण्यस्तन्नेत्रशोभाप्राप्त्यर्थं तपश्चरणाय वनं प्राप्ता इति । कदेत्याह—न यदा इति सर्वत्रैव योज्यम् । यत एतस्याः सीतायाः द्रौपद्या वा नेत्रशोभां न तुलयति न सदृशीकरोति । नूनमुत्प्रेक्षायाम् । कुत इवेत्याह—यत इह जगति प्रसिद्धमेव प्रथितमेव तपोभिरलभ्यमप्राप्यं नास्त्येव । सर्वमेव तपसा लभ्यते इत्यर्थः । 'कान्तारोऽस्त्री महारण्यम्' इति विश्वः ॥

तद्दन्तशोभामनुकर्तुमेषा नाभूद्यतो दाडिमबीजपङ्क्तिः ।
शक्ता ततोऽस्या हृदयं विदद्रे तत्तापतप्तं ध्रुवमीर्ष्ययेव ॥ १५ ॥

तस्याः सीतायाः द्रौपद्या वा दन्तशोभामनुकर्तुं सदृशीकर्तुम् एषा दाडिमबीजपङ्क्तिर्यतो हेतोः शक्ता समर्था नाभवत् । ध्रुवमुत्प्रेक्षते । ईर्ष्ययेव अमर्षेण तत्तापेन तप्तम् अस्या अर्थात् दाडिमपङ्क्तेर्हृदयं विदीर्णमिति ॥

तदीयसौन्दर्यसरोमृणालं भुजद्वयं रक्तकराम्बुजाभ्याम् ।
विकासनार्थं रविरश्मितुल्या नखांशवोऽग्रे प्रसरन्ति शोणाः ॥ १६ ॥

रक्ताभ्यां कराम्बुजाभ्यामुपलक्षितं भुजद्वयं तस्याः सीतायाः द्रौपद्या वा इदं तदीयं सौन्दर्यमेव सरः तन्मृणालमेवेति । तद्विकासनार्थमि(मे)व तयोरग्रे नखांशवः शोणा लोहिता प्रसरन्ति । रविकिरणतुल्या इति तत्सदृशा इत्यर्थः । सूर्यकिरणैरप्यम्बुजं प्रकाश्य(विकास्य)मेव ॥

नन्वेतेभ्यः स्फुटमनुनिशं बद्धकोशाञ्जलिभ्यः
सानुक्रोशं निजरुचिलवो दीयतामम्बुजेभ्यः ।
इत्येतस्याः प्रतिपदमिव व्याहरद्भ्यामुपान्ते[2]
पादद्वन्द्वं ललितचतुरं नूपुराभ्यामुपात्तम् ॥ १७ ॥

एतस्याः सीतायाः द्रौपद्या वा पादद्वन्द्वं चरणयुगलं नूपुराभ्यां पादकाभ्यामुपान्ते समीपेऽपात्तं गृहीतम् । तत्संनिधानमागतमिति यावत् । प्रतिपदं प्रतिचरणक्षेपं व्याहरद्भ्यां ब्रुवद्भ्यामिव । किं तदित्याह—ननु इति संबोधने, एतेभ्यः पद्मेभ्यः सानुक्रोशं सदयं यथा स्यादेवं निजरुचेर्निजकान्तेर्लव एकदेशो दीयतामिति । किंभूतेभ्यः । अनुनिशं प्रतिरात्रि बद्धः कोश एवाञ्जलिर्यैरेवंभूतेभ्यः । किंभूतं चरणयुगलम् । ललितेन चतुरं मनोज्ञं ललितचतुरं स्फुटमुत्प्रेक्षायाम् ।

गमनमलसयानैः कुम्भलक्ष्मीं कुचाभ्या-
मविकलकरशोभामूरुकाण्डद्वयेन ।
यदियमहरदेषां हेतुना तेन नूनं
निजवपुषि करीन्द्राः पांसुपूरं क्षिपन्ति ॥ १८ ॥

तेन हेतुना तेन कारणेन करीन्द्रा हस्तिश्रेष्ठा निजे स्वे वपुषि पांसुपूरं धूलिनिवहं क्षिपन्ति । तेन केन इत्याह—यदिति । नूनमुत्प्रेक्षायाम् । यत् यस्माद्धेतोः इयं सीता द्रौपदी वा एषां करीन्द्राणां गमनं गतम् अलसयानैर्मन्दयानैर्जहार । एषां कुम्भयोः गण्डस्थलयोर्लक्ष्मीं शोभां कुचाभ्यां स्तनाभ्यामहरत् । अविकलां संपूर्णां करशोभां स्थूलहस्तकान्तिमुरुकाण्डद्वयेनाहरत् । अन्योऽपि सर्वस्वहरणेन दुःखितः शरीरे धूलिं निक्षिपतीत्युत्प्रेक्षा । 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥' इति ॥

---

१. 'जाड्यम्' कलि. २. 'भ्यां पदान्ते' कलि.

एवं नरेन्द्रेषु वितर्कयत्सु ततो विलोक्यावयवं तदीयम् ।
उत्क्षिप्य पाणी निपुणेन वाणी मध्येसभं केनचिदित्यभाणि ॥१९॥

केनचिन्निपुणेन कुशलेनाधिकृतेन पाणी हस्तावुत्क्षिप्योत्तोल्य मध्येसभं सभामध्ये इति अग्रे वक्ष्यमाणा वाणी वचनमभाणि उक्ता । तदीयं सीतासंबन्धिनं द्रौपदीसंबन्धिनं पूर्वोक्तं शरीरावयवं विलोक्य दृष्ट्वा नरेन्द्रेषु एवं प्रकारेण वितर्कयत्सु सत्सु इत्युभयत्र समानम्॥

किं तदित्याह—

दुरानमं धनुरिदमीश्वरादृते निजौजसा कलितगुणं विधाय यः ।
प्रदर्शयेत्परिषदि लब्धलक्ष्यतां जयश्रिया सह स लभेत कन्यकाम् ॥२०॥

इमां कन्यां सीतां द्रौपदीं वा स लभेत प्राप्नुयात् । जयश्रिया सह जयलक्ष्म्या सह । स क इत्याह—य इति। परिषदि सभायां इदं धनुः कलितगुणं दत्तज्याकं प्रदर्शयेत् प्रकाशयेत् लब्धलक्ष्यतां सीतायामेव लब्धो लक्ष्यो हृदयस्थो वरो यया तस्या भावस्तत्ता तां लब्धलक्ष्यतां विधाय । पक्षान्तरे—धनुः कलितगुणं विधाय लब्धलक्ष्यतां राधाचक्रवेधं प्रकाशयेदिति । केन कलितगुणमित्याह—निजेनौजसा बलेन । किंविशिष्टं तत् । ईश्वरादृते महादेवं विहाय अन्येन दुरानमं दुःखेनानमयितुं शक्यमिति ॥

इति वचसि तदानीमुक्तमात्रे नरेन्द्राः
पृथुतरभुजदर्पास्तूर्णमुत्थाय पीठात् ।
द्रुतपदमभिपेतुस्तद्धनुर्भीमरूपं
फणिपतिमिव भोगिग्राहिणोऽग्र्यं ग्रहीतुम् ॥ २१ ॥

इति पूर्वोक्तप्रकारेण वचसि उक्तमात्रे सति तदानीमव्यवहितकाल एव नरेन्द्राः स्वयंवरस्था राजानस्तूर्णं शीघ्रं पीठात् सिंहासनादुत्थाय द्रुतपदं यथा स्यादेवं तत्पणीभूतं धनुर्ग्रहीतुमभिपेतुः । धनुषः समीपं जग्मुरित्यर्थः । कीदृशं धनुः । अग्र्यं श्रेष्ठम् । भीमरूपं भयानकमिति । किंविशिष्टाः । पृथुतरो महान् भुजदर्पो येषां ते । अतिबलिन इत्यर्थः । भोगिग्राहिणः सर्पग्राहिणो जाङ्गुलिका गरुत्मानो वा फणिपतिं सर्पश्रेष्ठमिव । तेऽप्यौषधादिना बलिष्ठास्तमपि भीमरूपं भयानकमिति ॥

कन्यां निधानकलसीमिव कार्मुकं च
भीमं भुजङ्गमिव तत्प्रतिबन्धरूपम् ।
दृष्ट्वा विलोलमतयः कतिचित्क्षितीशा
नादातुमुज्झितुमपि क्षमतामवापुः ॥ २२ ॥

कतिचित् क्षितीशा राजानस्तद्धनुरादातुं ग्रहीतुम् उज्झितुं त्यक्तुं वा न क्षमतामवापुर्न समर्था बभूवुः । किंविशिष्टाः । विलोला दोलायिता मतिर्येषां ते तथा । धनुर्नमनेनास्या

लाभः, तन्नमनं चाशक्यम् अतो यदि तन्न स्यात्तर्हि कथमेतल्लाभ इत्युभयरूपत्वम् । किं कृत्वेत्याह—कन्यामिति । सीतां द्रौपदीं वा निधानकलसीमिव सुखदां दृष्ट्वा धनुर्नमनेन तल्लाभ इति उज्झितुं न क्षमाः । कार्मुकं च भीमं भुजङ्गमिव कालसर्पाकारं तल्लाभप्रतिबन्धकं दृष्ट्वा विलोक्य आदातुं ग्रहीतुमपि न क्षमाः । केचित्तु—कन्यां निधानकलशीमिव न आदातुं न वा त्यक्तुं क्षमतामवापुरिति योजयन्ति । तत्प्रतिबन्धभूतं भीमं भुजङ्गमिव धनुर्विलोक्येति । निधिकलशीसाम्यादादानेच्छा, तत्प्रतिबन्धकभुजङ्गदर्शनात् त्यागेच्छेति भुजङ्गस्यातिबलत्वादन्यत्र गमनेन तत्प्रतिबन्धापगमात्तल्लाभः स्यात् इति परामृश्य स्वस्थानस्थिततत्वमूहुरिति भावः ॥

साभिमानमनसो नराधिपाः केचिदाचरितबाहुसाहसाः ।

केऽपि चापनतिबाहुविक्लवाः कुर्वते स्म निजमानमानतम् ॥ २३ ॥

केचिद्राजानो निजं मानं चित्तसमुन्नतिमानतं नम्रं कुर्वते स्म । मानहानिमवापुरित्यर्थः । किंविशिष्टाः । आचरितं बाहुसाहसं यैस्ते कृतबाहुश्रमाः । साभिमानं मनो येषां ते । साहसकारा इत्यर्थः । तथा—केचिद्राजानः चापस्य नतौ नमने बाहुविक्लवो येषां ते । चापनमनासमर्था इत्यर्थः । केवलं निजं मानमेवानतं कुर्वते स्म । न तु चापमित्यर्थः । 'मानश्चित्तसमुन्नतौ' इत्यमरः ॥

दूरात्केचन केचिदीक्षणपथादन्ये करस्पर्शना-

देके धारणतः सगर्वमितरे मुष्टौ करास्फालनात् ।

आनम्रीकरणात्परे कतिपये जीवाटनीघट्टना-

त्कोदण्डे नयशालिनीव नृपतौ वन्ध्यश्रमास्तेऽभवन् ॥ २४ ॥

ते राजानस्तस्मिन् कोदण्डे धनुषि वन्ध्यश्रमा निष्फलश्रमा अभवन् बभूवुः । किंविशिष्टे तस्मिन् । नयशालिनि नृपताविव । यथा नीतियुक्ते राजनि अपरे नृपतयोऽनयवन्तो वन्ध्यश्रमा भवन्ति तद्वदिति । कथमित्याह—दूरादिति । केचिद्दूरात् धनुरदृष्ट्वैवेत्यर्थः । वन्ध्यश्रमा अभवन्निति सर्वत्र संबध्यते । केचिदीक्षणपथात् धनुर्दृष्ट्वा निवृत्ता इत्यर्थः । अनध्यवसायादिति । अन्ये करस्पर्शनादिति गत्वा दृष्ट्वा हस्तस्पर्शनं कृत्वा तद्धारणानध्यवसायादिति । एके धारणत इति । सगर्वं यथा स्यादेवं मुष्टौ धृत्वेति । तदग्रिमव्यापारानध्यवसायान्निवृत्ता इति । परे आनम्रीकरणमीषन्नम्रीकरणं तस्मादित्यर्थः । कतिपये जीवाटन्याः धनुष्कोट्योस्तयोर्घट्टनाच्चालनार्थं शरसंधाने असामर्थ्यादिति भावः । उभयत्र समानम् ॥

मद्राङ्गचेदिमगधेशपुरःसरेषु

क्षत्राय राजसु जलं मनसा ददत्सु ।

जिष्णुर्द्विजेन्द्रनिकटाद्धरिवंशकेतु-
गर्भादिवाग्निररणेरुदगात्कुमारः ॥ २५ ॥

कुमारो रामो द्विजेन्द्रनिकटात् विश्वामित्रसमीपात् उदगात् उत्थितः। प्रस्तावात्तद्धनुर्ग्रहणायेति। जिष्णुर्जयनशीलः। हरिवंशस्य सूर्यवंशस्य केतुर्ध्वजवच्छोभमानः। अरणेरग्निमन्थनकाष्ठस्य गर्भान्मध्यादग्निरिवोदगात्। मद्र-अङ्ग-चेदि-मगधाः देशविशेषाः तेषामीश्वरास्तद्देशाधिपतयस्ते पुरःसरा अग्रगण्या येषां तत्प्रभृतिषु राजसु क्षत्राय मृतकल्पाय क्षत्रियाय जलं जलाञ्जलिं ददत्सु सत्सु। क्षत्राय क्षत्रधर्मायेति वा। मनसैवेति। क्षत्रं धिगिति मनसि कृत्वेत्यर्थः॥ पक्षे—जिष्णुः कुमारोऽर्जुनो ब्राह्मणसमीपादुदगात्। हरिवंशकेतुरिति। हरिवंशस्य सोमवंशस्य केतुः। यद्वा हरिर्हनूमान् वंशे वेणौ यस्य तादृशः केतुर्यस्येति वा। यद्वा हरीणां वानराणां वंशो वर्गः समूहस्तस्य केतुः हनूमानिव सेनापतित्वात्। हरेरिन्द्रस्य यो वंशस्तस्य केतुर्ध्वजो वा। तत्पुत्रत्वादर्जुनस्येति। 'हरिश्चन्द्रार्कवाताश्वशुकभेकयमाहिषु। कपौ सिंहे च शक्रे च' इति मेदिनीकरः। 'वंशो वर्गे कुले वेणौ पृष्ठस्यावयवेऽपि च' इति विश्वः॥

वीरश्रीमानतुङ्गाचलतुलनतुलादण्डमुर्वीपतीनां
गीर्वाणद्वेषिगर्वाम्बुधिमथनमहारम्भमन्थाचलेन्द्रम्।
श्लाघानिःसाणकोणं जगदुदयमहावृष्टिमाहेन्द्रचापं
चापं दोर्विक्रमाग्नेः समिधमिव निजस्याददे राजसूनुः॥ २६ ॥

राजसूनुर्नरपतितनयो रामः धनुराददे जग्राह। कीदृशम्। वीरस्य शूरस्य श्रीर्लक्ष्मीर्मानश्चित्तसमुन्नतिश्च तौ तुङ्गावचलाविव पर्वताविव तयोस्तुलने तुलादण्डमिव। स्वर्णकारतुलामिवेत्यर्थः। 'तुला सादृश्यमानयोः' इत्यमरः। गीर्वाणेति। गीर्वाणा देवास्तद्द्वेषिणां दैत्यानां यो गर्वाम्बुधिर्गर्वसमुद्रस्तस्य मथनस्य विलोडनस्य महारम्भे मन्थाचलो मन्थनपर्वतस्तम्। तद्गर्वमथनाय। श्लाघेति। श्लाघा प्रशंसा तदर्थं यो निःसाणो वाद्यविशेषस्तस्य कोणं वादनदण्डमिव। 'श्लाघा स्त्रियां प्रशंसायां परिचर्याभिलाषयोः' इति मेदिनीकरः। 'कोणो वीणादिवादनम्' इत्यमरः। जगदिति। जगतामुदयार्थं या महती वृष्टिस्तत्र महेन्द्रचापमिव इन्द्रधनुरिव। दोर्विक्रमाग्नेर्भुजपराक्रमानलस्य समिधमिव होमद्रव्यमिव। समिधं दीपकमिति केचित्॥ पक्षे—राजसूनुरर्जुनः। अन्यत्समानम्॥

दृष्टः सोऽभिसरन्धनुः परिषदा बाल्यादवज्ञोत्तरं
गृह्णन्नध्यवसायनिश्चलतया सश्लाघदत्तोत्तरम्।
उत्क्षिप्यानमयन्भुजाग्रतरसा सान्द्रीभवद्विस्मयं
ज्यालेखामटनीमुखेन घटयन्केनापि नालोकितः॥ २७ ॥

स रामः, अर्जुनो वा धनुर्ग्रहीतुमभिसरन् धनुषोऽभिमुखं गच्छन् बालोऽयमस्य शक्त्या

निर्वाहो न भविष्यतीत्यवज्ञोत्तरं सावज्ञं यथा स्यात्तथा परिषदा सभया दृष्टोऽवलोकितः। दृष्ट इति सर्वत्र संबध्यते। तथा धनुर्गृह्णन्नध्यवसायेन निश्चलया धिया बुद्ध्या सश्लाघं सगौरवं दत्तमुत्तरं प्रतिवचनमस्यां क्रियायां सश्लाघदत्तोत्तरं यथा स्यादेवं दृष्टः। अनेन प्रतिज्ञानिर्वाहः स्यादिति भावः। भुजेति। भुजाग्रतरसा हस्तबलेनोत्क्षिप्योत्तु(त्तो)ल्य धनुर्नमयन् सान्द्रीभवद्विस्मयं यथा स्यादेवं दृष्टः। सान्द्रीभवन् निबिडीभवन् विस्मयो यत्र अहो अस्य वयः, अहो अस्य ब्राह्मणस्य बलमित्यादिना विस्मयः। ज्यालेखामिति। ततः अटनीमुखेन ज्यालेखां गुणं घटयन् केनापि न दृष्टो न चावलोकितः। लज्जयेति भावः। एतच्छीघ्रकारितया वेत्यर्थः॥

तस्मिन्गुणाकर्षणकर्म[1]धीरे राजात्मजे शंकरकार्मुकस्य।
बभूव भङ्गः पृथिवीश्वराणां कर्णव्यथादायिकटुस्वनस्य॥ २८॥

तस्मिन् नृपात्मजे रामे गुणस्य धनुर्ग्रह(गु)णस्याकर्षणकर्मणि धीरे धैर्यशालिनि सति शंकरकार्मुकस्य। यद्वा—करकार्मुकस्य, भङ्गो विदारणं बभूव। तद्द्विधाभावो वृत्त इत्यर्थः। कथंभूतस्य। पृथिवीश्वराणां राज्ञां कर्णयोर्व्यथादायी कटुस्वनो यस्येति। एवंभूतस्य॥ पक्षे—अशमकल्याणं यथा स्यात् राज्ञां भङ्गो बभूवेति योज्यम्। राजात्मजे अर्जुने करकार्मुकस्य हस्तधनुषो गुणाकर्षणकर्मणि धीरे प्रगल्भे सति अर्जुनस्य कीर्तिलाभान्ते स्वसाकल्याणकारित्वमिति। 'भेदरोगतरङ्गेषु भङ्गो जयविपर्यये' इति मेदिनीकरः॥

सा[2]कं भूपैर्मानभङ्गं प्रपन्ने चापे तस्मिन्निर्वृता लक्ष्यसिद्ध्या।
व्रीडानम्रा सादरं राजपुत्री कीर्त्या रामं प्राप हृद्या कुमारम्॥ २९॥

राजपुत्री सीता कुमारं रामं प्राप। हृद्या हृदयानन्दजननी। कीर्त्या कीर्तनीया। व्रीडया नम्रा व्रीडानम्रा। सलज्जेत्यर्थः। लक्ष्यस्योद्देश्यस्य समीचीनवरस्य सिद्ध्या प्राप्त्या निर्वृता स्वस्था। कीर्त्येत्यत्र लक्षणे वा तृतीया। तस्मिंश्चापे भूपैः साकं मानभङ्गं प्रपन्ने सति। धनुषो नमनेन प्रमाणभङ्गः, राज्ञां च नमनाशक्त्या मानहानिरभूदित्यर्थः। 'मानः प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे' इति विश्वः॥ पक्षे—राजपुत्री द्रौपदी। कुमारमर्जुनम्। कीर्त्या यशसा राममभिरामम्। यद्वा—कीर्तेराराम उपवनभूतस्तम्। तस्मिंश्चापे लक्ष्यसिद्ध्या राधाचक्रवेधरूपस्य लक्ष्यस्य शरव्यस्य सिद्ध्या निर्वहणेन निर्वृता स्वस्थिता। अन्यत्समानम्॥

भृङ्गव्रातैरङ्गसौ[3]गन्ध्यलुब्धैः कृष्णा तन्वी दृश्यमाना लतेव।
सा तं भेजे राजवंशप्रदीपं पूर्वाम्भोधिं स्वःस्रवन्तीव सीता॥ ३०॥

भृङ्गव्रातैर्भ्रमरसमूहैर्लक्षिता सा सीता तं रामं राजकुलस्य नृपवंशस्य प्रदीपं प्रकाशकत्वात् भेजे सिषेवे। किंविशिष्टैः। अङ्गसौगन्ध्यलुब्धैः। स्वशरीरसौरभलुब्धैरित्यर्थः।

१. 'कारे' कलि०. २. 'शाकं' कलि०. ३.–४. 'सौरभ्य' कश्मीर०.

कीदृशी सीता । कृष्णा श्यामला । तन्वी कृशा । लतेव दृश्यमाना भवति । भृङ्गत्रातैर्वा दृश्यमाना । पूर्वाम्भोधिं पूर्वसमुद्रं गच्छन्ती स्वःस्रवन्ती गङ्गेव ॥ पक्षे—कृष्णा द्रौपदी तमर्जुनं स्वःस्रवन्ती सीतेव सीतानाम्नी गङ्गेव । 'सीता गङ्गाभेदः' इति विष्णुपुराणे । 'विष्णुपादसमुद्भूता प्लावयन्तीन्दुमण्डलम् । समन्ताद्ब्रह्मणः पुण्या गङ्गा पतति वै दिवः ॥ सा तत्र पतिता दिक्षु चतुर्धा प्रतिपद्यते । सीता चालकनन्दा तु व्रजाभेति च वैक्रमात् ॥' इति । अङ्गलग्नैर्भ्रमरसमूहैर्लतेव दृश्यमाना । राजा चन्द्रस्तस्य वंशो राजवंशस्तत्र प्रदीपं सोमवंशप्रकाशकम् । शेषं समानम् ॥

राज्ञां लज्जाकलङ्कः खलु मुखशशिनि स्थापितः कार्मुकेण
क्षेपिष्ठं तस्य कोटौ निपुणमुपहिता राजपुत्रेण मौर्वी ।
न्यस्ता तद्बाहुमूले निजवरणसखी मङ्क्षु माला कुमार्या
मालायां साधुवादैः सह सकलजनैरर्पिता नेत्रमाला ॥ २१ ॥

कार्मुकेण धनुषा राज्ञां मुखशशिनि वक्त्रचन्द्रे लज्जारूपः कलङ्कः स्थापितः । तस्य धनुषः कोटावग्रे क्षेपिष्ठमतिशीघ्रं यथा स्यादेवं निपुणं च यथा स्यादेवं राजपुत्रेण रामेणार्जुनेन वा मौर्वी ज्या उपहिता निहिता । तद्बाहुमूले राजपुत्रबाहुमूले स्कन्धे तद्वरणसखी तदुभयवरणसुहृद्वरणमाला कुमार्या सीतया द्रौपद्या वा मङ्क्षु शीघ्रं न्यस्ता आरोपिता । तस्यां च मालायां साधुवादैः सह सकलजनैर्नेत्रमाला अर्पितेति मालादीपकम् ॥

भग्नोत्साहे गतवति ततः सर्वतो राजलोके
राज्ञा तेन स्वमथ भवनं प्रापितानां सहर्षम् ।
निर्दिष्टानां मुनिगुरुगिरा सा नरेन्द्रात्मजानां
सर्वेषामप्यजनि युगपत्तत्र वैवाहिकश्रीः ॥ २२ ॥

तत्र जनकेन सर्वेषां चतुर्णां नरेन्द्रात्मजानां दशरथपुत्राणां युगपदेव तुल्यकालमेव वैवाहिकश्रीर्विवाहसंपत् विवाहोपयुक्तसंविधानमजनि जाता । विवाहो जात इति । किंभूतानाम् । सह हर्षेण वर्तते यत्तत्सहर्षं यथा स्यादेवं तेन राज्ञा जनकेन निजं भवनं प्रापितानाम् । कस्मिन्सतीत्याह—भग्न उत्साहो यस्य तस्मिन् राजलोके सर्वतो गतवति सति । स्वकीयगृहं गतवतीत्यर्थः । तथा किंभूतानाम् । मुनिर्यो गुरुर्विश्वामित्रस्तेन गिरा निर्दिष्टानाम् अनुज्ञातानाम् ॥ पक्षे—नरेन्द्रात्मजानां तेषां युधिष्ठिरादीनां तत्र तस्यां द्रौपद्यां वैवाहिकश्रीर्युगपत्सहैव समजनि । सैव परिणीतेत्यर्थः । मुनिर्व्यासः, गुरुः कुन्ती, तयोर्गिरा वचनेन निर्दिष्टानामनुज्ञातानाम् । तेन राज्ञा द्रुपदेन निजभवनं नीतानामिति । शेषं समानम् ॥

ते तत्र सर्वे समकालमेव संप्राप्य दारान्सदृशान्विरेजुः ।
त्रैलोक्यसंशोधनजागरूकान्गङ्गाविभङ्गानिव सिन्धुनाथाः ॥ २३ ॥

ते सर्वे रामादयस्तत्र जनकनगरे समकालं तुल्यकालमेव योग्यान्दारान् सीतादीनवरोधान् प्राप्य विरेजुर्बभुः। त्रैलोक्यस्य संशोधने संपादने जागरूकान् सावधानान्। विशुद्धानिति यावत्। गङ्गाविभङ्गान् गङ्गातरङ्गान् प्राप्य यथा समुद्राः शोभन्ते। नगरे तुल्यकालमेव योग्यान्दारान् द्रौपदीं प्राप्य विरेजुः। शेषं समानम्॥

संबन्धान्मुदितात्मनां निजपदं प्राप्तुं मनः कुर्वतां
दिक्कुञ्जेषु निरन्तरं विकिरतां क्षात्रं प्रदीप्तं महः।
तेषां विक्रमवात[1]वल्गितनिजक्रोधानलप्रे[2]षितः
साक्षात्काल इवोदितो भृगुपतिर्दुर्योधनोऽभ्यागमत्॥ ३४॥

तेषां रामादीनामभिमुखं भृगुपतिः परशुरामः आगमत्। किंभूतः। दुर्योधनो दुःखेन योद्धुं शक्यः। पुनः किंभूतः। विक्रमो धनुर्भङ्गादिरूपः स एव वातस्तेन वल्गित उद्दीपितो यो निज आत्मीयः क्रोधानलः तेन प्रेषितः प्रेरितः। तद्युक्त इति यावत्। साक्षाच्छरीरपरिग्रहः प्रत्यक्षकालोपम इवेति। किंभूतानां तेषाम्। संबन्धाद्विवाहादिना कन्यालाभान्मुदितात्मनां हृष्टानाम्। निजपदं निजगेहं गन्तुं मनः कुर्वताम्। तथा क्षात्रं क्षत्रियसंबन्धि निजं महस्तेजो दिक्कुञ्जेषु दिगन्तरेषु निरन्तरं विकिरतां क्षिपताम्॥ पक्षे—दुर्योधनोऽभिमुखमागमत्। तेषां युधिष्ठिरादीनाम्। क इव। साक्षाद्भृगुपतिरिव प्रयाणेऽभिमुखः स्थितः। अभिमुखः शुक्रः प्रयाणेऽनिष्टफलदः। अत एव कालोपम इवेति। तेषां युधिष्ठिरादीनां विक्रम एव वातस्तेन वल्गितः निजक्रोधानलप्रेषित इत्यादि। सर्वं समानम्॥

स दुरानममानमय्य चापं रणकण्डूतिमखण्डयत्ततोऽस्य।
परलोकजिगीषयैव साकं नृपतेः कौशिकनन्दनः कुमारः॥ ३५॥

नृपतेर्दशरथस्य कुमारः पुत्रो रामः कौशिकनन्दनो विश्वामित्रहर्षजनकस्तस्य परशुरामस्य रणकण्डूतिं रणविकर्षमखण्डयत् खण्डशश्चकार। अर्थादन्येन दुरानमं चापं धनुरानमय्यानतं कृत्वा। परलोकजिगीषयैव साकमिति। परलोकस्य स्वर्गस्य या जिगीषा गमनशक्तिः। तस्यामीप्सापि खण्डितेत्यर्थः। तस्य स्वर्गमार्गस्य तेन गती रुद्धेति भावः॥ पक्षे—कौशिक इन्द्रः। अस्य नृपतेर्दुर्योधनस्य रणकण्डूतिमखण्डयत्। कया साकम्। परलोकस्य शत्रुलोकस्य या जिगीषा जयेच्छा तस्य चेतसि वर्तते तया सार्धमिति। शेषं समानम्॥

अथ पुनरुपयाते त[3]त्र संबन्ध्य संधिं
प्रकृतिगुरुसुहृद्भिः प्रो[4]ज्झितैः काङ्क्ष्यमाणाः।

१. 'वेल्लित' कलि०. २. 'प्रेङ्खितः' कलि०. ३. 'तेन' कलि०. ४. 'प्रोषितैः' कश्मीर०.

बधिरितभुवनान्ता भूरिभेरीविरावै-
रुदधिमिव पयोदाः स्वां पुरीं तेऽभिजग्मुः ॥ ३६ ॥

अथानन्तरं ते रामादयः स्वां पुरीमयोध्यामभिजग्मुर्गताः । पयोदा मेघाः समुद्रमिव । भूरिभेरीणां विरावैः शब्दैः बधिरितभुवनान्ता व्याप्तभुवनान्तरालाः । मेघा अपि शब्दै रोदसी पूरयन्ति । तस्मिन् परशुरामे संधिं संधानं संबन्ध्य विधायापयाते अपगते सति । स्वस्थानं गते सतीत्यर्थः । प्रकृतिः शिष्टो जनः, गुरुर्मान्यः, सुहृन्मित्रम्, एभिः प्रेज्झि[1]तैर्विश्लेषयुक्तैर्दर्शनार्थमाकाङ्क्ष्यमाणा इति । 'काङ्क्षमाणैः' इति पाठे 'सह युक्ते तृतीया' इति । तेन तैः सह गता इति योज्यम् ॥ पक्षे—तस्मिन्दुर्योधने गते सति युधिष्ठिरादयः संधिं संबन्ध्य विधाय । गुरुर्द्रोणाचार्यः । स्वां पुरीमिन्द्रप्रस्थम् । शेषं समानम् । आकाङ्क्षमाणा इति 'ताच्छीलवयोवचनशक्तिषु चानश्' ॥

सुहृद्भिराप्तैरभिनन्दितानां गुणोदयप्रीणितसज्जनानाम् ।
प्रतापवित्रासितशात्रवाणां तेषामभूत्तत्र सुखं निवासः ॥ ३७ ॥

तेषां रामादीनां युधिष्ठिरादीनां वा तत्र पुर्यामयोध्यायामिन्द्रप्रस्थे वा सुखं यथा स्यादेवं निवासो बभूव । किंविशिष्टानाम् । सुहृद्भिर्मित्रैराप्तैरभिनन्दितानां कृतप्रशंसानाम् । अनुमोदितानामित्यर्थः । गुणोदयेन प्रीणिताः सज्जना यैस्तेषाम् । प्रतापेन वित्रासिताः शत्रवो यैस्तथा । 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः ॥

गुणैर्गुरौ ज्यायसि भक्तिनम्राः पृथग्धुरीणा अपि दर्शितैक्याः ।
दिशां विभागानुपपद्यमाना भान्ति स्म चत्वार इवार्णवास्ते ॥ ३८ ॥

ते चत्वारो रामादयो भान्ति स्म संशोभन्ते स्म । चतुर्षु दिक्षु अवस्थिताश्चत्वारोऽर्णवा इवेति समुद्रतुल्याः । दिशां विभागानुपपद्यमाना राज्ञां दिग्विभागानामुपलम्भं ज्ञानं कार्यमाणाः । गुरौ वशिष्ठे ज्यायसि ज्येष्ठे भक्तिनम्राः । गुणैर्ज्यायसि श्रेष्ठे वेति योज्यम् । पृथक्प्रत्येकं धुरीणा राजकार्यधुरंधरा अपि गुणैर्दर्शितैक्याः । एकीभूय राजकार्यसाधका इत्यर्थः । समुद्रा अपि दिशां विभागज्ञापका अपि नम्रा निम्ना अपि पृथक्स्थिता अपि दर्शितैक्याः समुद्रत्वेन रूपेण ॥ पक्षे—ते चत्वारो भीमादयो भान्ति स्म । ज्यायसि ज्येष्ठे भ्रातरि युधिष्ठिरे । गुणैरधिगतशास्त्रादिगुणैर्हेतुभूतैर्गुणैर्भक्तिनम्राः । अष्टौ गुणाः पुरुषं भूषयन्ति । ते गुणा उद्योगपर्वणि उक्ताः । शेषं तुल्यम् ॥

तैश्चतुर्भिर्बभौ राजा कुमारैः पार्श्ववर्तिभिः ।
सुमेरुरिव विष्कम्भैः स हरिप्रस्थभूषितैः ॥ ३९ ॥

तैश्चतुर्भी रामादिभिः पार्श्ववर्तिभिः समीपस्थैः कुमारैः राजा दशरथो बभौ शुशुभे । किंभूतैः । प्रकर्षेण तिष्ठत्यत्र प्रस्थो वंशः, हरिरादित्यः प्रस्थो यत्र स हरिप्रस्थः सूर्य-

1. 'प्रोषितैः' कश्मीर०.

वंशस्तेन विभूषितैरिति । यद्वा हरिः सूर्यः प्रस्थो मानं प्रमाणं यस्य स हरिप्रस्थः सूर्यवंशस्तत्र भूरुत्पत्तिर्येषां तैः सहोषितैरिति । हरिप्रस्थस्य सूर्यवंशस्य भुवि उषितैर्वा । क इव । सुमेरुरिव । यथा विष्कम्भैर्विस्तारैर्मन्दरादिभिः पर्वतैः सुमेरुः शोभते । सह हरिणा सिंहेन वर्तते स हरिर्यः प्रस्थः सानुस्तेन भूषितैः । 'विष्कम्भो योगभेदे स्याद्विस्तरप्रतिबन्धयोः' इति मेदिनीकरः । 'सानौ माने स्त्रियां प्रस्थः' इति विश्वः ॥ पक्षे—एतैश्चतुर्भिर्भीमादिकुमारैः राजा युधिष्ठिरः । हरिप्रस्थभूषितैरिति । इन्द्रप्रस्थभुवि उषितैः । इन्द्रप्रस्थस्य भूषामलंकारमितैर्गतैर्वा इन्द्रप्रस्थेन भूषितैर्युक्तैरिति तात्पर्यम् । इन्द्रप्रस्थे नगरे भूषितैर्भूषां गतैरिति वा ॥

मुनीन्द्रदिष्टे समये निविष्टैराराधितानां भृशमाप्तदारैः ।
दिने दिने पार्थिवनन्दनानां परस्परं प्रेमभरो मुमूर्छ ॥ ४० ॥

पार्थिवनन्दनानां रामादीनां दिने दिने प्रतिदिनं परस्परमन्योन्यं प्रेमभरो मुमूर्छ ववृधे । आप्तैर्दारैः पत्नीभिः । आत्मदारैर्वा भृशमत्यर्थमाराधितानाम् । मुनीन्द्रेण वसिष्ठेन दिष्टे उपदिष्टे समये निविष्टैः स्थितैः । पतिशुश्रूषणापरैरित्यर्थः ॥ पक्षे—पार्थिवनन्दनानां युधिष्ठिरादीनाम् । मुनीन्द्रो नारदः । समयः क्रियाकालः । व्यवस्थेति यावत् । यथानुरूपं व्यवस्था उपभोगव्यवस्था पञ्चानामपि द्रौपदीविषये मुनिनैव प्रणीतेति । अन्यत्समानम् ॥

इष्टावलोकं जननी गुरूणां तेजोऽतिभास्वद्भरतं दधानम् ।
राजा स शत्रुघ्नमनीलसप्तिं प्रास्थापयत्तीर्थनिषेवणाय ॥ ४१ ॥

राजा दशरथः शत्रुघ्नसहितं भरतं नाम स्वपुत्रं कैकेयं तीर्थनिषेवणाय उपाध्यायनिषेवणाय विद्याभ्यासार्थं मातामहनिषेवणाय च प्रास्थापयत् प्रेषयामास । 'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ॥' इति मेदिनीकरः । अतिक्रान्तो भास्वानादित्यो येन तत् एवं तेजो दधानं धारयन्तम् । जननी गुरूणां पित्रामिष्टावलोकमिष्टमाकाङ्क्षितमवलोकनं यस्य तम् । अनीलः सप्तिरश्वो यस्य तम् ॥ पक्षे—स राजा युधिष्ठिरः शत्रुघ्नं शत्रुहन्तारमनीलसप्तिं श्वेताश्वमर्जुनं तीर्थनिषेवणाय तपस्यार्थं प्रास्थापयत् । भरतं भरतकुलोत्पन्नम् ॥ अन्यत्समानम् ॥

सरांसि शैलान्सरितश्च तीर्त्वा गच्छन्नहीनात्मजयैधितश्रीः ।
वीरः किरीटी स्वभुजोपगूढचित्राङ्गदः सातिशयं विरेजे ॥ ४२ ॥

स वीरो भरतः सातिशयमत्यर्थं विरेजे अशोभत । किंविशिष्टः । किरीटवान् बद्धमौलिः । तथा—स्वभुजेनोपगूढमालिङ्गितं चित्रं नानारूपमङ्गदं बाहुकटकं येन सः । सरःप्रभृतीनि तीर्त्वा संतीर्य गच्छन् । तथा—अहीनेनाधिकेनात्मजयेनैधिता श्रीर्यस्य तमिति । यद्वा न हीन आत्मा यस्य सोऽहीनात्मा साभिमानः पुमान् तस्य जयेनैधिता

१. 'मात्म' कलि०.

श्रीर्यस्य सः ॥ पक्षे—किरीटी अर्जुनः स्वभुजेनोपगूढा चित्राङ्गदा नाम पाण्ड्यपुत्री येन स तथा । अहीनां सर्पाणामीश्वरस्तस्यात्मजया उलूपीनाम्न्या एधिता श्रीर्यस्य स तथा । समानमन्यत् ॥

प्राप्य प्रभासंपदमिष्टयोगि मातामहस्थानमुपेत्य राष्ट्रम् ।
संतोषितः क्षोणिभृताच्युतेन लेभे सुभद्राधिगमोत्सवं सः ॥ ४३ ॥

स भरतः सुभद्राधिगमोत्सवं सुष्ठु भद्राणां कल्याणानामधिगमो यत्र तं महोत्सवं लेभे प्राप । क्षोणिभृता राज्ञा अच्युतेन स्थिरेण संतोषितः । मातामहस्थानं राष्ट्रं केकयराष्ट्रमुपेत्य प्रभासंपदं [प्रभायाः दीप्तेः संपदं] प्राप्य इष्टयोगि अभीष्टयुक्तम् ॥ पक्षे—सोऽर्जुनः मातामहस्थानमागत्य यादवदेशं गत्वा सुभद्राया अधिगमेन परिणयरूपेणोत्सवस्तं लेभे । अच्युतेन कृष्णेन संतोषितः । क्षोणिभृता राज्ञा भूमिभर्त्रा । प्रभासं पदं प्रभाया दीप्तेः संपदं [प्रभासनामकं स्थानं] प्राप्य ॥ शेषं तुल्यम् ॥

प्रसूत्या पारिजातस्य पूरः क्षीराम्बुधेरिव ।
रेजेऽसौभद्रसंतानलब्ध्याशीतरुचोऽन्वयः ॥ ४४ ॥

असावशीतरुचः सूर्यस्यान्वयो वंशजातो भरतो रेजे । भद्रसंतानं कल्याणपरम्परा तस्या लाभेनेत्यर्थः । पारिजातस्य प्रसूत्या पुष्पेण क्षीरसमुद्रस्य पूर इवेति ॥ पक्षे—असावर्जुनो भद्रया संतानलब्ध्या अभिमन्युनामपुत्रलाभेन । यद्वा सुभद्राया अपत्यं सौभद्रस्तादृशो यः संतानः तस्य लाभेन । शीतरुचश्चन्द्रस्यान्वयो वंश उत्पन्नः । अन्यत्समानम् ॥

कमनीयतया पुष्णन्नन्दथुं सर्वदेहिनाम् ।
स राजनन्दनो रेजे कामदेव इवापरः ॥ ४५ ॥

स राजनन्दनो भरतोऽपरो द्वितीयः कामदेवः कन्दर्प इव । सर्वेषां देहिनां कमनीयतया नन्दथुमानन्दं पुष्णन्वर्धयन् ॥ पक्षे—राजनन्दनोऽर्जुनः अपरः श्रेष्ठ इति । अन्यत्समानम् । यद्वा कामदेव इवेति । काव्यकारयिता कामदेवनामा राजेवेति । सोऽपि रामणीयकेन सकलदेहिनामानन्दवर्धक इति ॥

इति श्रीराघवपाण्डवीये काव्ये सीताद्रौपदीस्वयंवरो नाम द्वितीयः सर्गः ।

---

तृतीयः सर्गः ।

स राजाभिमतो लोके विजयोर्जितविक्रमः ।
हरिसारथिनाभ्येत्य याचितोऽभूद्दिवोवनम् ॥ १ ॥

स राजा दशरथो हरिरिन्द्रस्तत्सारथिना मातलिनाभ्येत्यागत्य दिवः स्वर्गस्यावनं रक्षणं याचितोऽभूत् बभूव । स किंभूतः । विजयेन शत्रुजयेनोर्जितो महान् विक्रमो यस्य सः । तथा—लोके अभिमतः स्वीकृतः ॥ पक्षे—हरिर्वायुः सारथिर्यस्येति तेना-

ग्निना अभ्येत्य विजयोऽर्जुनो दिवः स्वर्गस्य वनं खाण्डवनामकं याचितोऽभूद्रक्षणायेत्यर्थः। अर्जितो विक्रमो येन । लोके राज्ञो युधिष्ठिरस्याभिमतः । 'विजयः स्याज्जये पार्थे' इति विश्वः । 'इन्द्रचन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे च विष्णौ च हरिर्ना कपिले त्रिषु ॥' इति विश्वः ॥

क्रामन्दिवं कीर्तिभिरर्जुनोऽथ तन्नीतवल्गद्धरिणा रथेन ।
नरः स साक्षादिव गाण्डिवेन चकार भीतिं धनुषा परेषाम् ॥ २ ॥

स नरो दशरथो धनुषा परेषां शत्रूणां भीतिं चकार कृतवान् । रथेन दिवं स्वर्गं क्रामन् व्यश्नुवानः । कीर्तिभिरर्जुनो धवलः । तन्नीतत्वेन मातलिनीतत्वेन राजनीतत्वेन वा वल्गन् गच्छन् हरिरश्वो यस्य स तथा । किंभूतेन धनुषा । साक्षाद्गाण्डिवेनेव। गाण्डिवसदृशेनेत्यर्थः । यद्वा—नर इवार्जुनो इव । अर्जुनो यथा गाण्डीवधनुषा शत्रुषु भीतिं चकार तथेति । अत्र पक्षे दृष्टान्तसिद्धिदर्शनमिति ॥ पक्षे—सोऽर्जुनः गाण्डीवेन धनुषा परेषां भयं चकार । कीर्तिभिर्लक्षितः । रथेन दिवं क्रामन् । कथंभूतेन रथेन । तेनाग्निना नीतो वल्गन् हरिर्हनूमान् यत्र तेन । सोऽर्जुनः क इव । साक्षान्नर इव नारायणाग्रज इव । नैमिषारण्यवासिनर इवेत्यर्थः । 'अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्यात्पुंलिङ्गे धवलेऽपि च ॥' इति मेदिनीकरः ॥

स देवदत्तोद्धतवीर्यसंपदक्षीणबाणोज्ज्वलतूणधारी ।
द्विषद्द्विजिह्वोग्रवनं स्वबाहुप्रतापरूपज्वलने जुहाव ॥ ३ ॥

स दशरथः स्वस्य बाहोः प्रतापरूपो ज्वलनो वह्निस्तत्र द्विषन्त एव द्विजिह्वाः सर्पास्तेषामुग्रं वनं समूहं जुहाव जुहोति स्म । किंभूतः । देवेनेन्द्रादिना दत्तः अत एवोद्धता वीर्यसंपद्यस्य स तथा । अक्षीणेन समर्थेन बाणेनोज्ज्वलो यस्तूण इषुधिः तद्धारी धारकः । अक्षीणः सन् बाणोज्ज्वलतूणधारी वा ॥ पक्षे—सोऽर्जुनो द्विषन् शत्रुर्यो द्विजिह्वः सर्पस्तेनोग्रं वनं खाण्डवनामकं ज्वलने हुतवान् । स्वबाहुप्रतापतुल्ये । देवदत्तेन देवदत्तनामशङ्खविशेषेणोद्धता प्रकाशिता वीर्यसंपद्यस्य । तस्मादेवाक्षयबाणतूणप्राप्तेः । तद्धारीति । शेषं तुल्यम् ॥

निजविक्रमनिर्धूतपर्जन्यशरसंततिः ।
स पन्नगांस्तार्क्ष्य इव द्रावयामास दानवान् ॥ ४ ॥

स दशरथो दानवान् सुरद्विषो द्रावयामास विचिक्षिपे । विद्रावयामासेत्यर्थः । तार्क्ष्यो गरुडः पन्नगान् सर्पान् यथा । निजेन विक्रमेण निर्धूतो निक्षिप्तः पर्जन्य इव मेघवृष्टिरिव शरसंततिर्दानवप्रेरिता शरसंततिर्येन स तथा ॥ पक्षे—सोऽर्जुनो निजविक्रमेण निर्धूतो निक्षिप्तः पर्जन्यो यया एवं शरसंततिर्यस्य स तथेति ॥

दिवः स कृत्वामयशान्तिमेवं प्रणीतगुप्तिर्हरिणा कृतश्रीः ।
पुनः प्रपेदे निजमेव राष्ट्रं रामाननालोकनलम्पटात्मा ॥ ५ ॥

स दशरथो निजमात्मीयमेव राष्ट्रं देशं प्रपेदे प्राप्तवान् । किंभूतः । रामस्य रामचन्द्रस्याननस्य मुखस्यालोकने लम्पटः साभिलाष आत्मा यस्य स तथा । एवं पूर्वोक्तक्रमेण दिवः स्वर्गस्यामयशान्तिं कृत्वा प्रणीता कृता गुप्ती रक्षा येन स तथा । हरिणा इन्द्रेण कृता प्रणीता श्रीर्यस्य स तथा ॥ पक्षे—सोऽर्जुनो दिवः स्वर्गान्निजमेव राष्ट्रं प्रपेदे प्राप । रामाया द्रौपद्या आननालोकने लम्पटात्मा सस्पृहः । खाण्डवदाहे मयनामकस्य दैत्यस्य शान्तिं कृत्वा हरिणा श्रीकृष्णेन प्रणीतगुप्तिः । कृता उत्पादिता श्रीर्येन ॥

स्वर्गमार्गस्य मित्रं या सा भर्तृवरयोगतः ।
तुतोष दयिता भक्तिविनमत्तनुमध्यमा ॥ ६ ॥

मध्यमा दयिता राज्ञः पत्नी कैकेयी तुतोष तुष्टा बभूव । कुत इत्याह—भर्त्रा दत्तौ यौ वरौ तद्योगतः तत्प्राप्तेरिति । कथम् । भक्तिविनमत्तनु भक्त्या स्वामिभक्त्या विनमत्तनु यथा स्यादेवम् । सा केत्याह—स्वर्गमार्गस्य या मित्रम्, स्वर्गगमने सारथ्याचरणात्। दशरथेन तस्यै वरद्वयं दत्तम् । रामस्य वनवासः, भरतस्य च राज्याभिषेक इति प्रसिद्धम् ॥ पक्षे—तस्यार्जुनस्य दयिता द्रौपदी तुतोष । सा का । या स्वर्गमार्गस्य हिमालयगमनरूपस्य तत्र मित्रम् । भक्त्या विनमत्तनु श्लक्ष्णं मध्यमं देहभागो यस्याः सा तथा । भर्तृवरस्य भर्तृश्रेष्ठस्य योगादिति ॥

महार्हमुक्तामयसंविधानप्रकामरम्या मणिदारुचित्रा ।
सभा कुमाराधिगता नृपेण भेजे सुधर्मेव सुराधिपेन ॥ ७ ॥

नृपेण दशरथेन सभा भेजे सेविता । कुमारेण रामेणाधिगताधिष्ठिता । केव । कुमाराधिगता कार्तिकेयेनाधिष्ठिता सुधर्मेव देवसभेव यथा सुराधिपेनेन्द्रेण । महार्हेण बहुमूल्येन मुक्तामयेन तत्स्वरूपेण संविधानकेन प्रकाममत्यर्थं रम्या मनोहरा । तथा मणिभिर्दारुभिश्च नानारूपैश्चित्रा नानारूपेति ॥ पक्षे—सभा नृपेण युधिष्ठिरेण । कुमारेणार्जुनेन मयदैत्यादधिगता प्राप्ता । तथा महार्हा मुक्ता यत्र एवं मयस्य दैत्यशिल्पिनो यत्संविधानकं शिल्परचनाविधानं तेनातिशयरम्या । 'मयः शिल्पिनि दैत्यानाम्' इति विश्वः ॥

इष्टावाप्तिकृतोपायः स देवर्षिकृतादरः ।
भीमोद्यमपरः काले जरासंधारितामगात् ॥ ८ ॥

स दशरथस्तस्मिन्काले जरासंधारितामगात् जराया वार्धकस्य सम्यक्प्रकारेण धारकत्वं संधारितामगात् जगाम। वृद्धो बभूवेत्यर्थः । किंभूतः । इष्टस्याकाङ्क्षितस्य कार्यस्यावाप्तौ कृतोपायः कृतसाधनः । देवैः ऋषिभिश्च कृतादरः । भीमो भयानको य उद्यमस्त-

त्परः शत्रूणां भयंकर इति ॥ पक्षे—सोऽर्जुनः जरासंधस्य मगधराजस्यारितां शत्रुतामगात् । तस्य हन्ता बभूवेत्यर्थः । भीमस्य निजभ्रातुर्य उद्यमस्तत्परो भीमोद्यमेन जरासंधो हत इति । भीमो भयानको य उद्यमस्तत्परः । भीमो भीमसेन इत्यर्थः । स जरासंधारितामगादिति वा । काले राजसूयसमये । देवर्षेर्नारदस्य कृत आदरो येन । इष्टस्य यागस्यावाप्तये कृत उपायो जरासंधवधरूपो येन । अन्यत्समानम् ॥

वृद्धभावं गतस्यापि तस्य पृथ्वीपतेः परैः ।
दुष्प्रदर्शमभूत्तेजो नैदाघस्येव भास्वतः ॥ ९ ॥

वृद्धभावं वृद्धत्वं गतस्यापि तस्य राज्ञो दशरथस्य तेजो दुष्प्रदर्शं दुष्प्रदर्शनीयमर्थात्परैरभूत् । नैदाघस्य निदाघसमयवर्तिनः सूर्यस्येति वा ॥ पक्षे—तस्य युधिष्ठिरस्य वृद्धभावः क्षान्तिरित्यर्थः । तं गतस्य । अन्यत्समानम् ॥

यथाश्वमेधेन पुरा मरुत्तस्तथा परं यष्टुमियेष भूपः ।
स राजसूयेन यथा च पूर्वं राजा हरिश्चन्द्र उदारकीर्तिः ॥ १० ॥

अथानन्तरं स दशरथो भूपः परं श्रेष्ठं यथा स्यादेवमश्वमेधेनेति तन्नामकेन यज्ञेन यष्टुमियेष ऐच्छत् । पुरा पूर्वं यथा मरुत्तो राजविशेषोऽश्वमेधेनेष्टवान् । यथा वा उदारा कीर्तिर्यस्य स राजा हरिश्चन्द्रो राजसूयेनेष्टवान् ॥ पक्षे—स राजा युधिष्ठिरो राजसूयेन यष्टुमियेष । यथा मरुत्तोऽश्वमेधेनेति । शेषं समानम् ॥

स चतुरङ्गयुतं व्यसृजद्द्विषामनुजवर्गमदृश्यमुदायुधम् ।
क्षितिपरिक्रमणाय ततोऽमुना क इव नाम परो न पराजितः ॥ ११ ॥

स दशरथोऽनुजवर्गं राजपुत्रसमूहं क्षितेः पृथिव्याः पराक्रमणाय व्यसृजत्प्रहितवान् । किंभूतम् । तुरङ्गयुतमश्वसहितम् । तथा द्विषां शत्रूणामदृश्यमदर्शनीयम् । उदायुधम् । ततोऽमुना दशरथेन क इव शत्रुर्न पराजितः ।अपि तु सर्व एवेति । यद्वा—ततस्तत्र भूमौ अमुना अनुजवर्गेण कः परो न जित इति योज्यम् । ‘आद्यादिभ्यस्तसिः’ इति सप्तम्यर्थे तसिः । ततस्तत्रेत्यर्थः ॥ पक्षे—स युधिष्ठिरोऽनुजवर्गं कनिष्ठसमूहं भीमादिकं द्विषां भूमिपरिक्रमणाय । तज्जयायेति यावत् । चतुरङ्गयुतं हस्त्यश्वरथपादातरूपसेनाङ्गचतुष्टयसहितमदर्शनीयम् । अर्थात्परैः । उद्यतमायुधं येन तं ततोऽनुजसमूहादमुना युधिष्ठिरेण क इव परो न जितः । अपि तु सर्व एवेत्यर्थः ॥

आप्राच्याज्जह्नुकन्याजलभरजनिताडम्बरादम्बुराशे-
रा च प्रत्यग्रचैत्रानिलचलितलतास्पन्दिनश्चन्दनाद्रेः ।
आपाश्चात्याच्च लक्ष्मीपतिरचितनिजावासमुद्रात्समुद्रा-
दा च स्वःस्वोन्द्रेभ्यस्तमुदजुषत भूरुत्तरेभ्यः कुरुभ्यः ॥ १२ ॥

---

1. ‘धर्ष्यं’ कलि०.

प्राचि भवः प्राच्यः आप्राच्यादम्बुराशेः समुद्रात् भूर्भूमिस्तं राजानं दशरथं युधिष्ठिरं वा उदजुषत उत्कृष्टं यथा स्यादेवमसेवत, अप्रीणयत वा। किंभूतात्। जह्नुकन्या गङ्गा तस्या जलभरेण जनिताडम्बरात् पूरितादिति। आचन्दनाद्रेर्मलयपर्वतात् भूरजुषत तमिति। कथंभूतात्। प्रत्यग्रोऽभिनवो यश्चैत्रानिलो वसन्तपवनस्तेन चलितानां लतानां स्पन्दश्चलनं यस्य। आ च पाश्चात्यात्समुद्रात्तं भूरजुषत। कीदृशात्। लक्ष्मीपतिना रचिता निजावासस्य मुद्रा परिस्थितिर्यत्र। परिपाटीति यावत्। आ च उत्तरेभ्यः कुरुभ्यः भूस्तमजुषत। स्वःस्वोदरेभ्यः स्वर्गतुल्येभ्यः मेरोरुत्तरसमुद्रलग्नमुत्तरकुरुनामकं वर्षं दक्षिणसमुद्रलग्नं भारतं वर्षं सकलभूद्वीपाधिपो बभूवेत्यर्थः॥

कुमारशक्त्या करदीकृतायां क्षितावपश्यन्स्वभुजेन साध्यम्।
अजातशत्रुर्नियमेन राजा यज्ञैर्दिवं जेतुमुवाह दीक्षाम्॥ १३॥

राजा दशरथो दीक्षामुवाह ऊढवान्। यज्ञैर्दिवं जेतुं क्षितौ पृथिव्यां स्वभुजेन स्वकीयेन बाहुना साध्यं कर्तव्यमपश्यन्नवीक्षमाणः। अत्र हेतुः—कुमारस्य शक्त्यैव करदीकृतायां राजग्राह्यभुवीति। अतः स्वर्गं जेतुं यज्ञं चकारेति वाक्यार्थः। न जात उत्पन्नः शत्रुर्यस्य स तथा। नियमेन वाङ्नियमादिना दीक्षामुवाहेति योज्यम्। 'दीक्षायां यमनात्' इति श्रुतेः॥ पक्षे—अजातशत्रुर्युधिष्ठिरः। कुमारो भीमादिः। अन्यत्तुल्यम्। अत्र करदीकृतेति अभूततद्भावे 'कृभ्वस्तियोगे संपद्यकर्तरि च्विः'। 'अस्य च्वौ' इत्यकारस्येकारस्य 'च्वौ च' इति दीर्घत्वम्॥

विधिमनुचरन्प्राग्वंशस्थस्तथा स महीपति-
र्व्यतनुत हविर्धारावृष्टिं त्रिविष्टपतुष्टये।
सलिलममलं काले काले यथा विसृजन्नपि
ध्रुवमनृणतां प्राप्तो नाद्याप्यमुष्य पुरंदरः॥ १४॥

महीपतिर्दशरथो युधिष्ठिरो वा हविर्धाराया घृतधाराया वृष्टिं वर्षणं व्यतनुत विस्तारयामास। विधिं याजमानिकं कर्माचरमाणः। प्राग्वंशस्थः प्राग्घविर्गेहाधिष्ठितः। 'प्राग्वंशः प्राग्घविर्गेहात्' इत्यमरः। किमर्थम्। त्रिविष्टपानां देवानां तुष्टये प्रीतये। त्रिविष्टपमेषामवस्थानत्वेनास्ति लक्षणया त्रिविष्टपपदस्य देवतायां तात्पर्यम्। ध्रुवमुत्प्रेक्षते—यथा येन प्रकारेणाद्यापि पुरंदर इन्द्रस्तयोर्दशरथयुधिष्ठिरयोरनृणतामानृण्यं न प्राप्तो न गतः काले काले समुचितसमये अमलं सलिलमधिकमत्यन्तं विसृजन्नपि॥

स तर्पयामास दिवं हविर्भिर्द्विजेन्द्रमुख्यानपि दक्षिणाभिः।
वसुप्रदानैर्वसुधामशेषां यशोभिरच्छैर्भुवनानि सप्त॥ १५॥

स दशरथो युधिष्ठिरो वा दिवं लक्षणया दिविस्थं देवगणं हविर्भिर्घृतादिभिः, द्विजे-

१. 'त्रिविष्टपि' इति पाठस्तूचितः.

न्द्रमुख्यानृत्विजो ब्राह्मणान्दक्षिणाभिः, अशेषां वसुधां तत्रस्थं लोकं वसुप्रदानैर्धनप्रदानैः, सप्तभुवनानि भूरादीनि अच्छैर्निर्मलैर्यशोभिश्च तर्पयामास तृप्तानि चकार । एतेषामाकाङ्क्षितानुरूपमाचरितवानिति भावः ॥

निःस्पृहः स्वशरीरेऽपि तथानर्च स ऋत्विजः ।
यथा ते धनसंपत्त्या कुबेरमवमेनिरे ॥ १६ ॥

स दशरथो युधिष्ठिरो वा तथा ऋत्विजो याचकानानर्चार्चितवान् । दक्षिणाभिरिति शेषः । यथा ते ऋत्विजो धनसंपत्त्या वसुसमृद्ध्या कुबेरमवमेनिरे धनवत्तया तस्यावज्ञां चक्रुः । दक्षिणाया आनतिकारित्वाद्यावता धनेन यस्यानतिस्तावत्तस्मै दत्तवानिति संप्रदायार्थः । स्वकीयेऽपि शरीरे निःस्पृह इत्युभयनृपविशेषणम् । इष्टतममपि वस्तु ऋत्विक्प्रार्थितं दत्तवानिति भावः ॥

आराधितस्तेन मखे पुरस्तान्मनुष्यमूर्त्या विहितावतारः ।
जगत्त्रयस्याशिशुपालकत्वं समादधे स्वेन बलेन विष्णुः ॥ १७ ॥

तेन दशरथेन मखे यज्ञे पुरस्तात्प्रथमतो मनुष्यमूर्त्या रामरूपेण कृतावतारो विष्णुर्भगवानाराधितः पूजितः । स कः । यो विष्णुः स्वेन बलेन सामर्थ्येन जगत्त्रयस्य आ समन्ततः शिशुर्बालः पालको यस्य तदा शिशुपालकं तस्य भावस्तत्त्वम् । एवं यो दोषस्तं समादधे समाहितवान् । वयसा स शिशुः क्रियया अशिशुरेवेति भावः । यद्वा अशिशुपालत्वं जगतः समादधे सम्यगारोपितवान् ॥ पक्षे—तेन युधिष्ठिरेण पुरस्तात्प्रथमतो विष्णुः पूजितः । विष्णवेऽर्घ्यं दत्तमित्यर्थः । यादववंशे कृष्णरूपेण विहितावतारो जगत्त्रयस्य अशिशुपालकत्वं शिशुपालेन राजविशेषेण शून्यत्वं सम्यगादधे चकार । तन्मारणात्तच्छून्यत्वम् ॥

मखावसाने मघवत्समानो यथोचितं योजितमानपूजान् ।
विशांपतिर्भूमिपतीन्विसृज्य शान्तोपसर्गां धरणीं शशास ॥ १८ ॥

विशांपतिः स दशरथः, युधिष्ठिरो वा धरणीं पृथ्वीं शशास ररक्ष । कीदृशीम् । शान्त उपशान्त उपसर्गो रोगादिर्यस्यां सा तथा । 'उपसर्गः पुमान्रोगभेदोपप्लवयोः' इति विश्वः । तयोः प्रभावादेवोपसर्गशान्तिः । किं कृत्वा । मखस्य यज्ञस्यावसानेऽन्ते समाहूतान्निमन्त्रितान्नृपान्विसृज्य संप्रेष्य । यथोचितं यथायोग्यं योजितो मानः पूजा च येषां ते तथा । स किंभूतः । मघवता इन्द्रेण समानस्तुल्यः ॥

तस्य भूलोकचन्द्रस्य समृद्धिरतिवासवा ।
ज्योत्स्नेव चक्रवाकाणामासीद्दुःखाय दुर्हृदाम् ॥ १९ ॥

भूलोकस्य आह्लादकत्वाच्चन्द्र इव भूलोकचन्द्रो राजा दशरथो युधिष्ठिरो वा तस्योभयस्य राज्ञः समृद्धिः संपत् दुर्हृदां दुष्टहृदयानां शत्रूणां दुःखायासीद्बभूव । तथा तेन

प्रकारेणातिवासवा अतिक्रान्तो वासवो यया सा तथेति । यद्वा यत्तदोर्नित्यसंबन्धात्तथा तस्य समृद्धिरासीत् यथा दुर्हृदां दुःखायाभूदिति योजना । केषां केव । चक्रवाकानां ज्योत्स्नेव चन्द्रिकेव दुःखाय भवति तेषां विरह[जनक]त्वात् । अत एव भूलोकचन्द्रत्वेनोपन्यासो युक्तः ॥

अतर्क्यैकृतपातस्य पयसीव पराभवे ।
तद्विपक्षजनस्याभूद्धृदि चिन्तामयो ज्वरः ॥ २० ॥

तस्य दशरथस्य विपक्षो यो जनः शत्रुस्तस्य हृदि चिन्तामयो ज्वर आसीद्बभूव । कुत्र स्थातव्यं किमाचरितव्यमिति चिन्ता । कथंभूतस्य । पराभवे अर्थात्तेनैव कृते कृतपातस्य पतत इत्यर्थः । अत्र निदर्शनं यथा अतर्क्ये तर्कशून्ये पयसि जले कृतपातस्य पुंसः पराभवे अभिभवे सति अनेकविधा चिन्ता भवति । तथेत्यर्थः । पक्षे—तस्य युधिष्ठिरस्य विपक्षजनः शत्रुगणो दुर्योधनादिस्तस्य हृदीति । किंभूतस्य । अतर्किते अज्ञाते पयसीव पयःसदृशे स्थले कृतपातस्य । ततः पराभवे धर्षणायासतीव रोषो वृत्त इति । राजसूयसभायां मयेन दैत्यशिल्पिना निर्मितायां जले स्थलभ्रमवत्यां स्थले च जलभ्रमवत्यां स्थले जलबुद्ध्या गच्छन् पतितो दुर्योधनो भीमादिभिरुपहसितः चिन्तामवापेति कथानकम् ॥

[1]अभिरामं प्रवृत्तापि कुलज्येष्ठमपोह्य तम् ।
पृथुलाभरतं लक्ष्मीर्दुर्योधनमियेष सा ॥ २१ ॥

सा लक्ष्मीस्तं भरतमियेषेष्टवती । किंभूता । पृथुला महती । कथंभूतम् । दुर्योधनं दुःखेन शत्रुभिर्योधनं यस्य तम् । राममभि रामभद्रं लक्ष्यीकृत्य प्रवृत्तापि गन्तुं साभिलाषापि उपाधिवशादित्यर्थात् । तं कुलज्येष्ठमपोह्य परित्यज्य । 'अभिरभागे' इति कर्मप्रवचनीयत्वाद्द्वितीया । अभिराममिति ॥ पक्षे—तं कुलज्येष्ठं युधिष्ठिरमभिरामं मनोरमं गन्तुं प्रवृत्तापि तमपोह्य उपाधिवशात् दुर्योधनमियेष । प्रचुरलाभे राज्यलाभे रतं लुब्धम् । भरतं भरतकुलोत्पन्नं वा । अन्यत्समानम् ॥

वर्तमानो वयस्यन्ते प्रज्ञादृगथ भूपतिः ।
ज्येष्ठे निजसुते लक्ष्मीमाधातुं मतिमादधे ॥ २२ ॥

भूमिपतिः स दशरथोऽन्ते वयसि वार्धके वर्तमानः ज्येष्ठे निजसुते रामे लक्ष्मीं राजलक्ष्मीमाधातुमाहितां कर्तुं मतिं बुद्धिमादधे चकार । रामाय राज्यं देयमिति मतिरासीदित्यर्थः । प्रज्ञैव दृक् चक्षुर्यस्य स तथा । अस्मिन्वयसि इदमेव कार्यमिति भावः । यद्वा

---

१. कलिकातामुद्रितपुस्तके यद्यप्यस्य श्लोकस्य 'वर्तमानो वयस्यन्ते' इति श्लोकव्याख्यानतः पश्चाद्व्याख्यानमुपलभ्यते, तथापि लिखितप्राचीनपुस्तकद्वयानुरोधेन प्रागेवोपन्यासोऽनुमतः

प्रज्ञा विवेचनशीलेत्यर्थः ॥ पक्षे—प्रज्ञादृगन्धो धृतराष्ट्रो ज्येष्ठे निजसुते दुर्योधने लक्ष्मीमाधातुं मतिं चकार ॥

सुधीरसौबलोद्योगाद्राजा देवनतः श्रियम्।
धर्मपुत्रे स्थिरां व्याजैर्विना कर्तुं मनो दधे ॥ २४ ॥

सुष्ठु धीर्बुद्धिर्यस्य स सुबुद्धिरसौ राजा दशरथः धर्मपुत्रे ज्येष्ठे धर्मात्मके रामे श्रियं लक्ष्मीं स्थिरां कर्तुं मन आदधे आहितवान्। व्याजैः कपटैर्विना निर्व्याजं यथा स्यात्। देवेभ्यो नतो नम्रः। बलानां सैन्यानामुद्योगादिति पञ्चमी ॥ पक्षे—राजा धृतराष्ट्रो धर्मपुत्रे युधिष्ठिरे स्थिरां श्रियं नयशालित्वान्निष्क्रम्यां लक्ष्मीं व्याजैः कपटैर्विना कर्तुमपाकर्तुं दूरीकर्तुं मनश्चादधे। सौबलस्य शकुनेरुद्योगात् देवनतः द्यूतपाशकात्। शकुनिः कूटदेवताभिज्ञस्तेनोद्योगः कृत इत्यर्थः। 'पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते' इत्यमरः॥

भरतज्यायसो दीप्ता दायादजननीतया।
द्यूतकेल्या नलस्येव लक्ष्मीर्मन्थरया हृता ॥ २५ ॥

भरतस्य ज्यायान् ज्येष्ठो रामः तस्य राजलक्ष्मीर्मन्थरया कैकेय्याः परिचारिकया हृता। पूर्वदत्तवरस्मरणादित्यर्थः। कीदृशी। दीप्ता प्रकाशयुक्ता। तया कीदृश्या। दायादस्य भरतस्य रामशत्रो(भ्रातु)र्जनन्या कैकेय्या इतया प्रेरितया तत्सकाशाद्वा इतया प्राप्तयेति। 'दायादौ सुतबान्धवौ' इति विश्वः। यथा पूर्वं नलस्य निषधाधिपतेः श्रीर्द्यूतकेल्या हृतेति ॥ पक्षे—भरतकुले ज्येष्ठस्य युधिष्ठिरस्य लक्ष्मीः द्यूतकेल्या शकुनिकृतया हृतेति। मन्थो मन्थनमुपतापः तं राति ददाति सा मन्थरा तया मन्थरया अल्पयैव माथितया वा द्यूते युधिष्ठिरेण पणीकृता लक्ष्मीः शकुनिना जितेत्यर्थः। 'मन्थरः कोषफलयोर्बाधमन्थानयोः पुमान्। कुसुम्भ्यां न द्वयोर्मन्दे पृथावज्ञेऽभिधेयवत् ॥' इति विश्वः। मन्थरया मन्दवेगयेति श्रीविशेषणं वा। कथंभूतया। दायादजनेन दुर्योधनेन नीतया कारितयेति। तुल्यमन्यत् ॥

दुःशासनावलेपेन भरतानिष्टकारिणा।
तस्य लक्ष्मीर्विपक्षेण कृष्टा कान्ता कचेष्विव ॥ २६ ॥

तस्य रामस्य विपक्षेण शत्रुणा कैकेयीरूपेण लक्ष्मीः कृष्टा आकृष्टा। कचेषु केशेषु कान्तेव। किंभूतेन। दुष्टान् शास्तीति दुःशासनो रामस्यावलेपेनानादरेण राज्यत्यागादिना हेतुना भरतानिष्टकारिणा आपाततो भरतस्य राज्यलाभादिष्टतमं न। ततोऽनिष्टतममेव। रामवियोगेन भाविभ्रातृ(भर्तृ)विनाशः। भ्रातृवियोगेन भरतस्यानिष्टमिति भावः ॥ पक्षे—तस्य युधिष्ठिरस्य विपक्षेण दुर्योधनेन दुःशासनस्तद्भ्राता तस्यावलेपेनानादरेण हेतुना कान्ताकचेष्विति वा। सहोपमा। कान्तया सह लक्ष्मीः कृष्टेत्यर्थः। भरतानिष्टकारिणा। भरतकुलविनाशकेनेत्यर्थः। 'भरतानिष्टकारिणी' इति पाठे उभयत्र लक्ष्मीविशेषणं

कान्तायाश्चेति । भरतकुलविनाशेऽसौ च मूलमिति । यद्वा विपक्षेण दुर्योधनेन दुःशासनावलेपेन लक्ष्मीरिव तस्य कान्ता कचेष्वाकृष्टेति योज्यम् । लक्ष्मीहरणस्य पूर्वमुक्तत्वात् । 'अवलेपस्तु गर्वः स्याल्लेपने भूषणेऽपि च' इति मेदिनीकरः ॥

नैव सभ्या न गुरवो न मित्रज्ञातिबान्धवाः ।
तं निवारयितुं शेकुः क्रियमाणं महानयम् ॥ २७ ॥

सभायां साधवः सभ्याः सभासदः गुरवश्च वशिष्ठादयो द्रोणादयो वा तं महानयं महान्तमनयं रामयुधिष्ठिरयोर्वनगमनरूपं द्रौपदीकेशाम्बरकर्षणं निवारयितुं निषेद्धुं न शेकुर्न शक्ता बभूवुरित्यर्थः । मित्राणि च ज्ञातयश्च बान्धवाश्चेत्यन्वयः ॥

गुरुभिः कल्पितं सोऽथ वत्सरादा चतुर्दशात् ।
आरण्यकव्रतं धीरः सानुजः प्रत्यपद्यत ॥ २८ ॥

स राम आरण्यकस्यारण्यवासिनो मुनेर्व्रतं जटाबन्धनादिधारणं प्रत्यपद्यत स्वीचकार। सानुजः सलक्ष्मणः । गुरुभिर्दशरथादिभिः कल्पितं समर्पितं व्यवस्थापितम् आ चतुर्दशाद्वत्सरात् । चतुर्दशवत्सराणि व्याप्येति । अवधीकृत्येत्यर्थः ॥ पक्षे—अथानन्तरं स युधिष्ठिरः । सानुजो भीमादिसहितः । विना तेनेति मर्यादा ॥

स राज्यमैन्द्रेण पदेन तुल्यं गुरुप्रियार्थं तृणवद्विहाय ।
अरण्यवासाय कृतप्रतिज्ञः प्रतस्थिवान्सावरजः सदारः ॥ २९ ॥

स रामोऽरण्यवासाय प्रतस्थिवान् प्रस्थितः । ऐन्द्रेण पदेन स्वर्गेण समानं राज्यं तृणवद्विहाय परित्यज्य । गुरोर्दशरथस्य प्रियार्थं तदाज्ञाचरणतत्सत्यरक्षणाभ्यां तस्य प्रीतिः । कृतप्रतिज्ञः धृतप्रतिज्ञः । सावरजः सलक्ष्मणः । सदारः सीतासहितः ॥ पक्षे—युधिष्ठिरः । गुरोः धृतराष्ट्रस्य प्रियार्थम् । सावरजो भीमादिसहितः । सदारो द्रौपदीसहितः । शेषं तुल्यम् ॥

अपोढरत्नाभरणं रथेन निर्यान्तमेतं नगरान्निरीक्ष्य ।
विमोक्तुमश्रूणि चिरं जनानामासीन्न पर्याप्तमिवाक्षियुग्मम् ॥३०॥

एनं रामं युधिष्ठिरं वा अपोढानि अपगतानि रत्नाभरणानि रत्नालंकारमुकुटादीनि यस्मात्तमलंकारशून्यं रथेन निर्यान्तं गच्छन्तं नगरादयोध्याया इन्द्रप्रस्थाद्वा निरीक्ष्य दृष्ट्वा जनानां तन्नगरवासिनामक्षियुग्मं चिरमश्रूणि परिमोक्तुं पर्याप्तं संमाप्तं (?) नासीदिव नाभूदिव । अश्रुत्यागसमाप्तिक्षमं न बभूवेत्यर्थः । 'पर्याप्तं तु यथेष्टे स्याद्व्याप्ते शक्ते निवारणे' इति विश्वः ॥

राजेन्द्रवेषापगमेऽपि नैनं सौभाग्यलक्ष्मीः श्लथयांबभूव ।
सुरासुरैः स्वीकृतरत्नराशिस्तथापि रत्नाकर एव सिन्धुः ॥ ३१ ॥

एनं रामं युधिष्ठिरं वा सौभाग्यलक्ष्मीः सुभगत्वसंपत् न श्लथयांबभव न तत्याज ।

राजेन्द्रस्य राजश्रेष्ठस्य यो वेषोऽलंकारजनितशोभा तस्या अपगमेऽपि त्यागेऽपि मुकुटादे- स्त्यागेऽपि । तथैव सुभगः सुन्दर आसीदित्यर्थः । सिन्धुरेव यथा सुरासुरैर्देवदानवैश्च स्वीकृतरत्नराशिर्गृहीतरत्नसमूहोऽपि समुद्रो रत्नाकर एव प्रतीयते ॥

स्थितेऽप्युदग्रे पुरि राजवंश्ये ज्यायांसमेनं न जहौ जनौघः ।
द्वारोपकण्ठस्थितशंकरोऽपि बाणः किमासीद्भुवनस्य पूज्यः ॥ ३२ ॥

जनौघो जनसमूहः सचिवादिः एनं रामं न जहौ न तत्याज । ज्यायांसं ज्येष्ठम् । पुरि नगरे उद्भटे राजकुले दशरथवंशेऽपि । द्वारस्योपकण्ठे समीपे स्थितशंकरोऽपि द्वारपालतां गतशंकरोऽपि बाणासुरः किं भुवनस्य पूज्य आसीत् अपि तु न बभूव । प्रतिवस्तूपमेयम् ॥ पक्षे—एनं ज्येष्ठं युधिष्ठिरम् । तुल्यमन्यत् ॥

राष्ट्रादन्तःकलहकलुषान्मथ्यमानादिवाब्धे-
स्तन्वी बाला किसलयमृदुर्निर्गताप्युज्ज्वलाङ्गी ।
भर्तृप्रेम्णा वनभुवमभि प्रस्थिता राजकन्या
शंभोर्जूटं नवशशिकला संश्रयन्तीव रेजे ॥ ३३ ॥

राजकन्या सीता द्रौपदी वा रेजे शुशुभे । भर्तुः रामस्य युधिष्ठिरस्य वा प्रेम्णा, वन- भुवमरण्यभूमिं प्रस्थिता गच्छन्तीत्युभयविशेषणम् । कुतो राष्ट्रान्नगरान्निर्गता । कीदृ- शात् । अन्तरभ्यन्तरे कलहेन स्ववर्गकृतेन कलुषात् । कीदृशी । तन्वी कृशा, बाला नवयौवना, किसलयवन्नवदलवन्मृदुः कोमला, उज्ज्वलमङ्गं यस्यां तथेति दीप्तेत्यर्थः । दीप्यमाना । केव । यथा मथ्यमानात्समुद्रात् धृता नवशशिकला चन्द्रप्रथमकलेव । शंभोः शिवस्य जूटं जटाकलापं संश्रयन्ती शोभते । सापि तन्वी कृशा उज्ज्वलाङ्गी दीप्ता प्रथमकलात्वादेव बाला ॥

निरस्तरत्नाभरणापि गेहाद्विनिर्गता सा निजयैव भासा ।
विद्योतयामास नरेन्द्रमार्गे तडिल्लता मेघविनिर्गतेव ॥ ३४ ॥

सा सीता द्रौपदी वा नरेन्द्रमार्गे राजमार्गे विद्योतयामास प्राकाशयदिति । निजया भासा तेजसा । निरस्तं त्यक्तं रत्नाभरणं यया सा । गेहाद्विनिर्गता बहिर्गता । केव । मेघाद्वारिवाहाद्विनिर्गता तडिद्विद्युल्लतेव ॥

बाष्पाम्बुजम्बालितराजमार्गैः सगद्गदव्याहृतसाधुवादैः ।
व्यलोकि सा पौरजनैरसूर्यंपश्यापि मध्येनगरं व्रजन्ती ॥ ३५ ॥

सा सीता द्रौपदी वा पौरजनैः पौरवर्गैर्व्यलोकि दृष्टा । न सूर्यं पश्यतीत्यसूर्यंपश्या । एवंभूतापि मध्येनगरं नगरमध्ये व्रजन्ती गच्छती । किंभूतैर्जनैः । बाष्पाम्बुभिर्जम्बा- लितः कर्दमितो राजपथो यैस्ते । तथा सगद्गदं यथा स्यात्तथा व्याहृत उक्तः साधुवादो यैस्ते । 'जम्बालः शैवले पङ्के' इति विश्वः ॥

कृतानुयातान्सह मित्रबन्धुभिर्निवर्त्य भूयो नगराय नैगमान् ।
स धर्मजन्मा निजकीर्तिनिर्मलां सुरापगां प्राप सुमित्रसंगतः ॥३६॥

स धर्मजन्मा धर्मस्य जन्म यस्मात्स रामः सुरापगां गङ्गां प्राप । किंभूतेन । सुमित्रेण सारथिना संगतो मिलितः । निजा स्वकीया कीर्तिस्तद्वन्निर्मलाम् । नैगमान्नगरवासिनो जनान् नगराय । तुमर्थात्कर्मणि चतुर्थी । नगरं गन्तुं निवर्त्य परावर्त्य । कृतानुयातान् पश्चादागतान् अनुगच्छतो मित्रबन्धुभिः सह ॥ पक्षे—धर्मजन्मा युधिष्ठिरः शोभनेन मित्रेण संगतः नयप्रपन्नत्वात् । 'निगमः स्यादुपनिषद्वणिजो नगरेऽपि च' इति विश्वः ॥

तां यज्ञभूमिप्रभवां पुरन्ध्रीधुरं दधानां व्यसनाभिभूताम् ।
आश्वासयन्तीव सहंसवाणी पस्पर्श गङ्गा लहरीसमीरैः ॥ ३७ ॥

तां सीतां द्रौपदीं वा गङ्गा भागीरथी लहरी तरङ्गस्तत्संगतैः समीरैः पस्पर्श स्पृशति स्म । सह हंसवाण्या वर्तत इति सहंसवाणीति गङ्गाविशेषणम् । आश्वासयन्ती समाश्वासं दधतीव । यापि दुःखितानाश्वासयति सा हस्तवाण्यादिनेति । किंभूताम् । यज्ञभूमिरुत्पत्तिस्थानं यस्यास्तां भूमेरुत्पन्ना सीता । अग्निकुण्डाद्द्रौपदी । पुरंध्रीणां धुरं दधानां सौन्दर्येणाग्रे कीर्तनीयाम् । व्यसनेन दुःखेनाभिभूतामाक्रान्तामिति ॥

गुहानुबन्धाद्गहनं वनं स प्रविश्य चीरी जटिलो जटालैः ।
समीयिवान्सावरजो मुनीन्द्रैः सतां हि सङ्गो व्यसनार्णवे नौः ॥ ३८ ॥

स रामो मुनीन्द्रैर्मुनिश्रेष्ठैः समीयिवान् संगतो बभूव । गुहस्य निषादाधिपस्यानुबन्धादुपदेशाद्गहनं वनं प्रविश्य । चीरी वल्कलधारी जटिलो जटावान् । सावरजः सलक्ष्मणः । हि हेतौ व्यसनार्णवे व्यसनं कष्टं तदेवार्णवः समुद्रः तत्र सतां साधूनां सङ्गः समाजः स तारकत्वान्नौकेव ॥ पक्षे—स युधिष्ठिरः गुहायाः कन्दराया अनुबन्धात् कन्दरामार्गेण । गहनं विपिनम् । 'गहनं विपिने दुर्गे गह्वरे सलिलेऽपि च' इति विश्वः । 'षाण्मातुरे निषादे च गुहो गुहा च कन्दरे' इति विश्वः ॥

वसञ्शून्य इवारण्ये नगरे तद्गुरुर्जनः ।
तद्वियोगपरिक्लेशाच्छ्रेयो मृदुममन्यत ॥ ३९ ॥

तस्य रामस्य गुरुजनो दशरथः मृत्युं मरणं श्रेयः कल्याणममन्यत स्वीचकार । कुतः । तस्य रामस्य विश्लेषेण यः परिक्लेशः कष्टं तस्मात् । तदपेक्षया मृत्युः श्रेयानिति । अन्येन पूर्णेऽपि नगरे तेन शून्ये तद्वियोगजनितदुःखवत्तया अरण्य इवेति ॥ पक्षे—तेषां युधिष्ठिरादीनां गुरुः कुन्ती तेषां पार्थादीनां वियोगक्लेशान्मरणादपि तत्क्लेशमधिकमुद्वेगजनकममन्यत । शेषं समानम् ॥

तदाशुभरतेनाथ पश्चात्कृतनृपश्रिया ।
कुलश्रेष्ठे वने तिष्ठन्भेजे क्षत्रोचितक्रमम् ॥ ४० ॥

यदा दशरथो विपन्नः तदाशु शीघ्रं कुलश्रेष्ठो रामो भरतेन भेजे संगतो बभूव । रामानुसंधानपरो वनमाजगाम । पश्चात्कृता असंमुखीकृता अस्वीकृता नृपश्रीर्येन सः । वने तिष्ठन्नवस्थित इति कुलश्रेष्ठविशेषणम् । क्षत्रोचितक्रमं यथा स्यात् । क्षत्रियाणामुचितः क्रमः यद्राज्यार्हे ज्येष्ठे सति कनिष्ठस्य राज्य(ज्या)परिग्रह इति । अथानन्तरम् ॥ पक्षे—कुलज्येष्ठो युधिष्ठिरः क्षत्रा विदुरेण संगतः । उचितक्रमं यथा स्यात् । कथंभूतेन । शुभे कर्मणि रतेन । क्षत्राणां क्षत्रियाणां क्रमः क्रियाविशेषणम् ॥

उद्दामधीरतरलोभरतेन भीम-
सेनेन दूरमनुयातवता वनान्तम् ।
रक्तप्रजामपि निजां नगरीमुपैतुं
स प्रार्थितोऽपि न मनः शिथिलं चकार ॥ ४१ ॥

स रामो मनः शिथिलं न चकार । अर्थाद्वनवासे एव स्थिरं मनश्चकारेत्यर्थः । किंभूतः । रक्ता अनुरक्ताः प्रजा यत्र एवंभूतां निजां नगरीमयोध्यामुपैतुं भरतेन सम्यक्प्रार्थितोऽपि । उद्दामा उद्भटा धीर्यस्य सा उद्दामधीः । अतरलोऽचञ्चलः । किंभूतेन भरतेन । दूरं यथा तथा वनान्तं वनपर्यन्तमनुयातवता कृतानुगमनेन । तथा भीमा सेना यस्य स तादृशेन ॥ पक्षे—स युधिष्ठिरः । पुरीं स्वनगरीमिन्द्रप्रस्थं गन्तुम् । भीमसेनेन भ्रात्रा प्रार्थितोऽपि । कथंभूतेन । धीरतरलोभरतेन धीरतरः स्थिरतरो यो लोभस्तत्र रतेन । शेषं तुल्यम् । 'संप्रार्थितोऽपि स मनः शिथिलं चकार' इति पाठे भ्रात्रा प्रार्थितो निजां नगरीमुपैतुं गन्तुं मनः शिथिलं चकार सावहेलं चकारेति योजना ॥

तं राजाज्ञां दधानोऽपि विपुलांसं जयस्थिरम् ।
वनान्निवर्तयामास कथंचिद्विदुरं सुधीः ॥ ४२ ॥

सुधी रामः कथंचित्तं भरतं वनान्निवर्तयामास परावर्तयत् । राज्ञो दशरथस्याज्ञां दधानोऽपि धारयन्नपि । किंभूतम् । विदुरं धीरम् । 'विदुरो नागरे धीरे कौरवाणां च मन्त्रिणि' इति विश्वः । तथा—विपुलांसं विपुलावंसौ स्कन्धौ यस्य तम् । जये स्थिरं निश्चलम् । संजयस्थिरमिति वा सम्यक् जये स्थिरमित्यर्थः । विपुलां महतीं राजाज्ञाम् ॥ पक्षे—तं विदुरं कौरवमन्त्रिणं संजयः सारथिः । संजयस्थिरमिति 'खर्परे शरि विसर्जनीयस्य लोपो वक्तव्यः' इति विसर्जनीयलोपः । विपुलां महतीं राजाज्ञाम् । स्थिरं वीरम् । वनान्तान्निवर्तयामास । शेषं समानम् ॥

प्रभ्रंशं कथमपि लम्भितस्य दैवा-
त्सा भर्तुः समुपगमं प्रतीक्षमाणा ।

दायादं तदनु तदीयमेव लक्ष्मी-
र्नाकश्रीरिव नहुषं निषेवते स्म ॥ ४३ ॥

सा लक्ष्मीः राजलक्ष्मीः तदीयं रामसंबन्धिनं युधिष्ठिरसंबन्धिनं वा दायादं भरतं दुर्योधनं वा निषेवते स्म अशिश्रियत् । तदनु पश्चाद्भर्तुः रामस्य युधिष्ठिरस्य वा समुपगमं समागमनं प्रतीक्षमाणा । दैवात्कथमपि प्रभ्रंशं त्यागमर्थाद्राज्यात् लम्भितस्य प्रापितस्येति भर्तृविशेषणम् । यद्यपि राज्ञो राज्यात्परिभ्रष्टं तदपि दैवकारितमिति दैवादित्युक्तम् । नाकश्रीः स्वर्गलक्ष्मीर्नहुषं राजविशेषमिवेति ॥

ते चित्रकूटाचलपादभाजां मखश्रियालंकृतदण्डकानाम् ।
क्रमेण भेजुः क्लमनाशनानि तपस्विनामाश्रममण्डलानि ॥ ४४ ॥

ते रामादयः क्रमेण तपस्विनामाश्रममण्डलानि तपोवनानि भेजुः सेवन्ते स्म । किंभूतानि । क्लमस्य परिश्रमस्य नाशनं येषु तानि । किंविशिष्टानाम् । चित्रकूटनाम्नोऽचलस्य पादं प्रत्यन्तवनं भजन्ति ये ते तथा । मखश्रिया यज्ञसंपदा अलंकृता दण्डका दण्डकवनविशेषा यैस्ते ॥ पक्षे—चित्राणि कूटानि शिखराणि यस्य एवंभूतस्य पर्वतविशेषस्य पादभाजामिति । तथा मखश्रिया अलमतिशयेन कृतानि दण्डकानि काम्यकर्माणि यैस्ते तादृशानाम् । 'दण्डको दण्डकारण्ये काम्यकर्मणि च स्मृतः' इति शब्दार्णवः । 'अलंकृतकाम्यकानाम्' इति पाठे—अलमत्यर्थं कृतं काम्यमिष्टार्थं कर्म यैस्ते इति रामायणपक्षे । भारते तु—अलंकृतं काम्यकं वनविशेषो यैः ॥

अवरोहितराज्येऽपि भर्तर्येकरसा यतः ।
तेन निन्ये परां शोभां तद्वधूरनसूयया ॥ ४५ ॥

तस्य रामस्य वधूः सीता अनसूयया अत्रिपत्न्या तेन हेतुना परामतिशयितां शोभाभङ्गरागादिना निन्ये नीता प्रापिता । तेन केनेत्याह—यतः सा अवरोहितराज्येऽपि भर्तरि एकरसा एकाकारा पतिव्रतत्वात् ॥ पक्षे—तद्वधूर्द्रौपदी न असूयया अनसूयया असूयारहितत्वेन परां शोभां निन्ये । शेषं समानम् ॥

क्षणेन तेषां क्षणदाचरः क्वचिद्विराधनामा रचयन्महायुधः ।
अरुन्ध पन्थानमरुंतुदः सतां पुरा ग्रहाणामिव वन्ध्यभूधरः ॥ ४६ ॥

क्वचित्प्रदेशे विराधो नाम क्षणदाचरो राक्षसः तेषां रामादीनां पन्थानं वर्त्म अरुन्ध रुरोध । क्षणेन महायुधः महासंग्रामान् रचयन् कुर्वन् । युधूशब्दः क्विबन्तः । सतां साधूनामरुंतुदः मर्मस्पृक् । विन्ध्यो भूधर इव । यथा पुरा पूर्वं ग्रहाणां मार्गमरुन्धेति ॥ पक्षे—क्षणदाचरो राक्षसः किर्मीरनामा । अग्रिमश्लोके एतदुल्लेखात् । तेषां युधिष्ठिरादीनां विराधनामारचयन् विगताराधना सेवा यत्र सा विराधना तां कुर्वन्निति । महायुधः महास्त्रः । तुल्यमन्यत् ॥

युद्धारब्धश्चण्डदोर्दण्डघातैर्भिन्दन्संधिं द्राग्विनिक्षिप्य भूमौ ।
संरम्भोद्यत्पांसु किर्मीरमेनं रक्षोनाथं राक्षसारिर्ममन्थ ॥ ४७ ॥

राक्षसारिः रामः एनं रक्षोनाथं विराधं ममन्थ विलोडितवान् । द्राक् झटिति । भूमौ निक्षिप्य संधिमर्थाद्देहस्य भिन्दन् विदारयन् । चण्डैः प्रचण्डैर्दोर्दण्डस्य घातैः प्रहारैः आरब्धं युद्धं येन स युद्धारब्धः । 'वाहिताग्न्यादिषु' इति परनिपातः । युद्ध आरब्धो वा । किंभूतमेनम् । युद्धारम्भकृतेन संरम्भेन उद्यन् उत्थितो यः पांसुर्धूलिः तेन किर्मीरं कर्बुरम् । 'किर्मीरो नागरङ्गे च कर्बुरे राक्षसान्तरे' इति विश्वः । पक्षे—राक्षसारिर्भीमः किर्मीरनामानं रक्षोनाथं ममन्थ । संरम्भोद्यत्पांसु यथा स्यादेवम् । तुल्यमन्यत् ॥

रक्षसां भयदानेन तैरलंकृतदण्डकैः ।
सुतीक्ष्णशरभङ्गाढ्या सहसा वनभूरभूत् ॥ ४८ ॥

सा वनभूः काननभूमिः रामादिभिर्हेतुभूतैः सुतीक्ष्णनाम्ना शरभङ्गनाम्ना मुनिना आढ्या अभूत् सुभगा बभूव । रक्षोवधादुत्साहवता तापसद्वयेन शोभितेत्यर्थः । किंभूतैः। रक्षसां भयदानेन हेतुना अलंकृतं भूषितं दण्डकं दण्डकारण्यं यैरिति ॥ पक्षे—अलमत्यर्थं कृतदण्डकैः कृतकाम्य(दमन)कर्मभिः तैर्युधिष्ठिरादिभिः सा वनभूः सुष्टु अतिशयेन तीक्ष्णानां शराणां बाणानां भङ्गेन आढ्या युक्ता बभूव। तत्र रक्षोभिः सह कृतयुद्धत्वात् । शेषं समानम् ॥

तं प्रत्यगृह्णन्नातिथ्यैर्मुनयो मनुजेश्वरम् ।
स्वकालसंभवैः पुष्पैः कामदेवमिवर्तवः ॥ ४९ ॥

तं रामं युधिष्ठिरं वा मुनयस्तद्वनस्था आतिथ्यैरतिथिसत्कारैः प्रत्यगृह्णन् गृहीतवन्तः। मनुजानामीश्वरं राजानम् । ऋतव इव । यथा ऋतवो वसन्तादयः कामदेवं स्मरं स्वकालसंभवैः पुष्पैः प्रतिगृह्णन्ति । एतत्काव्यकर्तारं कामदेवं राजानं वा ॥

इति श्रीहलधरणीप्रसूतकादम्बकुलतिलकचक्रवर्तिवीरश्रीकामदेवप्रोत्साहितकविराजपण्डितविरचिते राघवपाण्डवीये महाकाव्ये कामदेवाङ्के शशिधरविरचिते व्याख्याने च रामयुधिष्ठिरवनप्रयाणं नाम तृतीयः सर्गः ॥

---

चतुर्थः सर्गः ।

अथारिवर्गं नरदेवसंभवो निराकरिष्यन्परमास्त्रतेजसा ।
उदग्रधन्वा गुरुकार्यमुद्वहन्वनान्तरं प्राप शिवोपलब्धये ॥ १ ॥

अथेत्यनन्तरं नरदेवसंभवो रामः वनान्तरमन्यद्वनं प्राप जगाम । शिवस्य कल्याणस्योपलब्धये प्राप्त्यर्थम् । परमास्त्रस्य तेजसा अरिवर्गं शत्रुवर्गं राक्षससमूहं निराकरिष्यन्निराकर्तुमिच्छन् । एतदेव तत्र गमनहेतुः । गुरु अतिशयितं कार्यं राक्षसवधरूपमुद्वहन् धारयन् ॥ पक्षे—नरदेवसंभवोऽर्जुनः शिवस्य महादेवस्योपलब्धये प्रत्यक्षीकरणाय अ-

र्थात्तपश्चरणेन वनान्तरं प्राप । तपःकरणायेति भावः । अरिवर्गं दुर्योधनादिकम् । गुरवो युधिष्ठिरादयस्तेषां कार्यं गुरुकार्यम् । शेषं समानम् ॥

वराहवाधिरोपेण तपोभिर्भावितः पुरः ।
तेनागस्तिरयन्दृष्टो वनेचरवपुः प्रभुः ॥ २ ॥

अगस्तिमुनिस्तेन रामेण दृष्टः । तेन समं तत्र संदर्शनं बभूवेत्यर्थः । किंभूतः । वनेचरवपुः वनेचरशरीरवान् । वानप्रस्थतपस्वीति यावत् । प्रभुः प्रभावयुक्तः । तपोभिर्भावितस्तपोयुक्तः । प्रकाशतां गत इत्यर्थः । पुरोऽग्रे वरः श्रेष्ठो य आहवः संग्रामः तत्राधिरोपेणावष्टम्भेनार्थाद्रामस्य य आहवस्तत्राधिकं रोपो रोपणं यस्य तादृशेनेति रामविशेषणं वा । 'रोपो रोपणबाणयोः' इति मेदिनीकरः । 'अगस्तिः कुम्भयोनौ च वङ्गसेनतरौ पुमान्' इति च ॥ पक्षे—तेनार्जुनेन वनेचरवपुः किरातरूपधारी आगः अपराधोऽर्जुनकृतस्तं तिरयन् छादयन् । युद्धे अर्जुनकृतमपराधं दूरीकुर्वन्नित्यर्थः । तपोभिरर्जुनकृतैः पुरोभावितः अग्रेस्थितः प्रकाशतां गतः । किंविशिष्टेन तेन । वराहस्य शूकरस्य बाधी बाधकर्ता भेदको रोपो बाणो यस्य स तथा । 'पत्री रोप इषुर्द्वयोः' इत्यमरः ॥

निबद्धतूणः कवची धनुष्मान्महर्षिशस्यां समितिं प्रविष्टः ।
असौ मृगव्याधवपुर्धरेण हरेण तुल्यो मुनिभिर्व्यलोकि ॥ ३ ॥

मुनिभिस्तद्वनस्थैरसौ रामो हरेण तुल्यो व्यलोकि दृष्टः । किंविशिष्टेन । मृगव्याधवपुर्धरेण दक्षयज्ञभङ्गावसरे मृगव्याधस्य यद्वपुः तद्धारकेण । यद्वा—मृगं व्यधते इति मृगव्याधः । व्यधयतेर्घञ् । तादृशं यद्वपुस्तद्धारकेण । पशवो मृगा इति । तद्रूपप्रकाशकं विशेषणमाह—निबद्धः पिनद्धस्तूणो येन सः । बद्धेषुधिरित्यर्थः । कवची कवचवान् धृतं कवचं येन । धनुष्मान् सचापः । हरोऽपि तस्मिन् समये एवमभूदिति साम्यम् । महर्षिभिः शस्यां शंसनीयां समितिं सभां प्रविष्टः । तत्सभागत इत्यर्थः ॥ पक्षे—असावर्जुनो मृगव्याधवपुर्धरेण हरेण समितिं संग्रामं प्रविष्टो व्यलोकि दृष्टः । तुल्योऽर्थाद्धरेण सदृश इत्यर्थः । 'समितिः संपराये स्यात्सभायां संगरेऽपि च' इति विश्वः ॥

तमग्रतो दर्शितविग्रहं प्रभुं कृतप्रसादं प्रणिपत्य मौलिना ।
स कुम्भजन्मानमवाप्य शंकरात्ततो धनुर्वेदमयं समादधे ॥ ४ ॥

सोऽयं रामः कुम्भजन्मानमगस्त्यं प्राप्य ततस्तस्मात् शंकरात्कल्याणकारकादगस्त्यात् धनुर्वेदं समादधे जग्राह । मौलिना शिरसा तं प्रभुमगस्त्यं प्रणिपत्य । किंभूतम् । कृतः प्रसादोऽनुग्रहो येन तं तथा । अग्रतः पुरस्ताद्दर्शितः विग्रहः शरीरं येन सः ॥ पक्षे—सोऽयमर्जुनः ततः शंकरात्किरातरूपिणो धनुर्वेदमादधे । किं कृत्वा । मानं चित्तस्योन्नतिमवाप्य । अर्थाच्छंकरात् । किं कुर्वन् । कुं पृथ्वीं मौलिना मुकुटेन भजन् सेवमानः । तथा च किं कृत्वा । प्रभुमीश्वरं प्रणिपत्य । कथंभूतम् । अग्रत आदौ दर्शितः विग्रहो

वैरं येन तम् । मायया किरातरूपेण तदनुग्रहार्थं दर्शितवैरम् । कृतसंग्राममित्यर्थः । ततः कृतः प्रसादो येन तं कृतप्रसादम् । 'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः ॥

इति स विबुधविद्विड्घस्मराद्ब्रह्मयोने-
रधिगतपरमास्त्रोद्भासितूणीकृपाणः ।
अभिलषितजयश्रीर्नाकधाम्नां निकायै-
र्वनभुवि कृतवासः स्वस्थतां संप्रपेदे ॥ ५ ॥

स रामः स्वस्थतां स्वास्थ्यं प्रपेदे प्राप । वनभुवि तस्मिन्वने कृतवासः सन् । किंभूतः । इति पूर्वोक्तप्रकारेण ब्रह्मयोनेर्ब्रह्मोत्पत्तिकारणादगस्त्यात् अधिगतं प्राप्तं यत्परमास्त्रं तेनोद्भासिनौ तूणीकृपाणौ यस्य । 'तूणी नील्यां निषङ्गे च' इति विश्वः । कृपाणः खड्गः । नाके स्वर्गे धाम येषां ते नाकधामानो देवाः तेषां निकायैः समूहैः अभिलषिता काङ्क्षिता श्रीर्यस्य स तथा । ब्रह्मयोनेः कथंभूतात् । विबुधविद्विड्घस्मरात् असुरघ्नात् ॥ पक्षे—सोऽर्जुनः स्वः तिष्ठतीति स्वःस्थः स्वर्गस्थस्तस्य भावस्तत्ता तां स्वर्गस्थतां प्रपेदे प्राप्तः । 'खर्परे विसर्जनीयस्य लोपो वक्तव्यः' इति विसर्जनीयलोपः । अग्र उद्दिश्यमानस्य निवातकवचनाम्नो राक्षसस्य वधाय शक्रेण स्वर्गं नीतः । अत एव नाकधाम्नां निकायैरभिलषिता जयश्रीर्यस्य स ब्रह्मयोनेः शंकरात् । विश्वस्मरादन्धकासुरनाशकात् । शेषं समानम् ॥

अर्जुनेन यशसानुलिम्पता तच्चरित्रजनितेन दिक्तटीः ।
अध्यरोहि बलविद्विषः सभा विह्वलीकृतसुरारियोषिता ॥ ६ ॥

तस्य रामस्य चरित्रेण करणेन जनितेन अर्जुनेन धवलेन यशसा कीर्त्या बलशत्रोरिन्द्रस्य सभा अध्यरोहि अधिरूढा । किंभूतेन । दिशां तटीर्भित्तीः अनुलिम्पता धवलिम्ना अनुलिप्ताः कुर्वता । विह्वलीकृताः सुरारीणां योषितो येन ॥ पक्षे—अर्जुनेन बलविद्विषः सभा अध्यरोहि । तेन तादृशेन चरित्रेणेशबलेन सह संग्रामव्यापारेण जनितेन यशसा अनुलिप्ता । दिक्तटीः कुर्वता । तुल्यमन्यत् ॥

तस्मिन्दुरापे वसतः प्रदेशे लब्धास्त्रजातस्य मनोभवान्धा ।
तस्योर्वशीतुल्यविलासवेषा क्षपाचरी संनिधिमाजगाम ॥ ७ ॥

तस्य रामस्य संनिधिं समक्षं क्षपाचरी राक्षसी शूर्पणखा आजगाम । किंभूता । मनोभवेन मन्मथेन मनसिजविकारेण अन्धा विवेकशून्या । तस्मिन्दुरापे प्रदेशे वसतः कृतनिवासात् अगस्त्याल्लब्धमस्त्रजातमस्त्रसमूहो येन तादृशस्य । सा कीदृशी । उर्वशीतुल्यविलासवेषा उर्वशीतुल्यौ विलासवेषौ यस्याः । 'उर्वशीतुल्यसमानवेषा' इति पाठान्तरे उर्वश्या तुल्यो मानसहितो वेषो यस्याः ॥ पक्षे—तस्यार्जुनस्य संनिधिं क्षपाचरी रात्रिचारिणी अभिसारिका उर्वशी समाजगाम । किंभूता । तुल्यावनुरूपौ विलासवेषौ यस्याः । मनोभवान्धा कामुकी । लब्धास्त्रजातस्य अर्थाच्छंकरात् । शेषं समानम् ॥

अकामं चकमे सा तं तरुणं ज्यायसी सती ।
वैषम्येण हि पुंनार्योर्घटना मृतजीविका ॥ ८ ॥

सा शूर्पणखा उर्वशी वा तं राममर्जुनं वा चकमे आचकाङ्क्ष। संभोगायेति शेषः। किंभूतम् । तरुणं युवानम् । अकामं तद्विषयाभिलाषशून्यं एकपत्नीव्रतत्वान्मुनिरूपत्वाच्च । कुतः । ज्यायसी सती ज्येष्ठा सती । हि यतः पुमांश्च नारी च तयोः पुंनार्योर्वैषम्येण वयःकृतेन घटना योजना मृतजीविका मृतं मरणं तत्तुल्या जीविका । जीवनमित्यर्थः । मृतजीविका मृतोपायो मरणकारणमिति केचित् । 'आजीवे जीविका मता' इति विश्वः । केचित्—तरुणं नूतनं जायसी वृद्धा सा इति एतयोरुक्तयोर्वैषम्येण स्त्रिया नूतनत्वेन पुरुषस्य ज्येष्ठत्वेन पुंनार्योर्घटना मृतजीविका मृतसंजीवनी—इत्याहुः । एतदन्या विपरीता घटना मृतजीविका मरणकारणमेवेति च । अत एव 'प्राणहानिकारिणी वृद्धा' इति कामशास्त्रम् ॥

चुकोप सा भृशं तस्मै प्रातिकूल्यान्निराकृता ।
कर्णनासापनोदोऽयं स्त्रीणां यदवमानना ॥ ९ ॥

सा शूर्पन(ण)खा तस्मै रामाय भृशं चुकोप कोपं चकार । प्रातिकूल्यात्प्रतिकूलाचरणेन निराकृता दूरीकृता । कुतः । यतो हेतोः कर्णनासापनोदः कर्णनासाछेदः स्त्रीणामवमाननापमानः । तेन तस्याः कर्णनासाछेदनं कृतमिति भावः ॥ पक्षे—सा उर्वशी तस्मै अर्जुनाय भृशं चुकोप । यतः स्त्रीणामवमानना अनादरः कर्णनासापनोद एव । तत्तुल्य इत्यर्थः । 'अपलोपः' इति पाठे लोपश्छेदनम्। 'लुप्लृ छेदने' इति धात्वनुसारात् ॥

सा सर्वलोकैरपि दुष्प्रधर्षा विलक्ष्यतां प्राप्य तदा तदर्हा ।
तत्पौरुषस्य प्रतिरोधकानि व्याहृत्य वाक्यानि विनिर्जगाम ॥ १० ॥

सा राक्षसी तस्मात्प्रदेशाद्विनिर्जगाम निर्गता। किं कृत्वा । तस्य रामस्य रामसंबन्धिनः पौरुषस्य पुरुषव्यापारस्य पराक्रमस्य प्रतिरोधकानि विपरीतानि वाक्यानि व्याहृत्य उक्त्वा । सा कीदृशी । सर्वैरपि लोकैर्दिक्पालैर्भुवनत्रयवर्तिभिर्वा दुःप्रधर्षा अधर्षणीया । एतादृग्रूपं तस्या न केनापि कृतमिति भावः । तदा तस्मिन्काले विलक्ष्यतां सलज्जत्वं प्राप्य । तदर्हा नासाकर्णापनोदनार्हा योग्या ॥ पक्षे—सा उर्वशी ततः स्थानान्निर्जगाम । तस्यार्जुनस्य यत्पौरुषं पुरुषत्वं तत्प्रतिरोधकानि वाक्यानि व्याहृत्य नपुंसकत्वप्रतिपादकानि । शेषं तुल्यम् ॥

कृतवैरास्ततस्तेन खरदूषणसंगताः ।
निवातकवचास्तूर्णं [1]तं जग्मुः शक्रविद्विषः ॥ ११ ॥

ततोऽनन्तरं हेतोर्वा इन्द्रविद्विषो राक्षसास्तं रामं प्रति शीघ्रं जग्मुः गताः । किंभूताः ।

---

१. 'प्रययुः' कलि०.

तेन रामेण कृतवैराः । शूर्पणखायाः कर्णनासाछेदात् । निवाता दृढाः कवचा येषां ते । 'निवातो दृढसन्नाहे वातशून्येऽपि चाश्रये' इति विश्वः । कथंभूताः । खरदूषणाभ्यां सेनापतिभ्यां संगता इति ॥ पक्षे—निवातकवचा दैत्यविशेषाः खरेण तीक्ष्णेन दूषणेनापराधेन संगताः । तेनेन्द्रेण सह कृतवैरास्तमर्जुनम् ॥

जनस्थानं विसृज्याथ ते चास्थाने कृतोद्यमाः ।
रणस्थानं जवाज्जग्मुर्यमस्थानोपकण्ठगाः ॥ १२ ॥

ते खरदूषणादयो जनस्थानं दण्डकवनस्थानं विसृज्य त्यक्त्वा जवाद्वेगाद्रणस्थानं पञ्चवटीं जग्मुः गताः । रामेण सह संग्रामाय अस्थाने अकारणमेव कृतोद्यमाः । अर्थात्समराय । अत एव यमस्थानोपकण्ठगाः । यमस्थानसमीपगामिनः संनिहितमृत्यव इत्यर्थः ॥ पक्षे—भूलोकात्पञ्चमो लोको जनस्थानं तं विसृज्य निवातकवचा अर्जुनेन सह रणाय । जनस्थानं लङ्केति केचित् । जने लोके वा स्थानमिति । 'जनलोको महर्लोकात्परे लोके च वा परे' इति विश्वः । तुल्यमन्यत् ॥

सान्द्रस्यन्दनवंशसिन्धुरघटागन्धर्ववृन्दोज्ज्वले
खड्गव्यग्रकराग्रपत्तिपृतनासंपत्तिविस्तारिणि ।
तं वीरं प्रतियाति वैरिनिकरे कल्पान्तकादम्बिनी-
गम्भीरैरुदजृम्भि भीरुभयदैः संग्रामभेरीरवैः ॥ १३ ॥

तं वीरं राममर्जुनं वा लक्ष्यीकृत्य वैरिनिकरे शत्रुसमूहे प्रतियाति गच्छति सति संग्रामभेरीरवैः समरदुन्दुभिशब्दैरुदजृम्भि । जृम्भितमुत्थितमिति यावत् । किंविशिष्टैः । भीरूणां कातराणां भयदैस्त्रासजनकैः । कल्पान्ते युगान्ते या कादम्बिनी मेघमाला तद्वद्गम्भीरैः । तद्गर्जवन्महद्गर्जैरित्यर्थः । किंविशिष्टे । सान्द्रो निबिडः स्यन्दनवंशो रथवंशः सिन्धुराणां गजानां घटा समूहः गन्धर्वाणामश्वानां वृन्दो निकरश्च तैरुज्ज्वले दीप्ते । खड्गेन व्यग्रं कराग्रं यस्य एवं या पत्तिपृतना पदातिसेना तस्याः संपत्त्या समृद्ध्या विस्तारिणि विस्तारयुक्ते । 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः । 'पत्तिर्ना पदगे स्त्रियाम्' इति च ॥

समन्ताच्छृण्वन्त्यः[1] समरपटहध्वानमचिरा-
द्यथासन्नाः कल्पद्रुमविरचनाविभ्रमभृतः ।
नभोगर्भे चेरुर्मृधनिहतयोधग्रहपराः
कपोलोद्यत्स्वेदप्रकरकणिका दिव्यगणिकाः ॥ १४ ॥

नभोगर्भे आकाशगर्भे दिव्यगणिका उर्वशीप्रभृतयः चेरुर्बभ्रमुः । दिवि भवा दिव्या गणिकाः स्वर्वेश्याः । कथंभूताः । मृधे संग्रामे निहतानां योधानां समरमुखे मृतानां ग्रहण-

१. 'शृण्वत्यः' इत्येव युक्तः पाठः, 'आच्छीनद्योः' इत्यस्याप्राप्तेः.

पराः । स्वपतित्वेनात्मीयत्वकरणासक्तत्वात् । अतएव सात्त्विकभावोत्पत्तेः कपोलादुद्यन्ती उद्गच्छन्ती स्वेदप्रकरस्य घर्मजलप्रवाहस्य कणिका पृषद्यासां ता इति । समन्तात्सर्वतः समरपटहस्य प्रवृत्तसंग्रामवाद्यस्य ध्वानं शब्दं शृण्वन्त्यः । सद्योऽचिराद्यथा स्यात्तथा सन्ना उपागताः । तयोर्द्वयोः संग्राममधिगत्य समागता इत्यर्थः । तथा कल्पद्रुमस्य पारिजातवृक्षस्य या विरचना तत्पुष्पधारणप्रकारः । तस्य विभ्रमं बिभ्रति यास्तास्तथोक्ताः । 'गर्भो भ्रूणेऽर्भके कुक्षौ मध्ये पनसकण्टके' इति मेदिनिकरः । समानमुभयत्र ॥

जवनपवनपातैर्दिक्षु विस्तारितायां
बहलसमरधूलीवागुरायां निमग्नः ।
परिमलिनितवक्त्रः शोचनीयामवस्था-
मभजत परितूर्णं रुद्धपादः[1] पतङ्गः ॥ १५ ॥

पतङ्ग आदित्यः शोचनीयामवस्थां दशामभजत गतः । किंभूतः । बहला प्रचुरा या तयोः समरयोः धूली संग्रामभूमेरुत्थितरजः सैव वागुरा जालविशेषो मृगबन्धिनी तस्यां निमग्नः पतितः । जवनस्य वेगशालिनः पवनस्य पातैः दिक्षु विस्तारितायां प्रसारितायामिति वागुराविशेषणम् । अन्यैरपि वागुरा दिक्षु प्रसार्यते । तत्र पतङ्गः पततीति । अत एव परिमलिनितवक्त्रः म्लानमुखः । रजोऽवरुद्धत्वात् । रुद्धपादोऽवरुद्धतेजः । रजसैवेति शेषः । अन्योऽपि रुद्धपादो धूलिप्रसरम्लानमुखो भवतीति । 'पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः' इति विश्वप्रकाशः । परितूर्णं शीघ्रम् । समानमुभयत्र । 'पादो रश्म्यङ्घ्रितूर्यांशे' इत्यमरः ॥

अथोच्चलत्कलकलघोषभीषण
तदागतं बलमवलोक्य विद्विषाम् ।
उपाददे नरपतिनन्दनो धनु-
र्घनाघनः कुलिशवरायुधं यथा ॥ १६ ॥

अथेत्यनन्तरं नरपतिनन्दनो रामः अर्जुनो वा धनुरुपाददे जग्राह । विद्विषां खरदूषणानां निवातकवचादीनां वा बलं सैन्यं तदा तत्काले आगतं विलोक्य दृष्ट्वा । किंविशिष्टम् । उच्चलद्भिरुत्थितैः कलकलघोषैः महावीरशब्दैः भीषणं भयानकम् । यथा—घनाघन इन्द्रः कुलिशरूपं वरायुधं श्रेष्ठास्त्रं गृह्णातीति यथा इवार्थे । 'शक्रघातुकमत्तेभवर्षुकाब्दा घनाघनाः' इति विश्वः । 'कोलाहलः कलकलः' इत्यमरः ॥

विसारिणीमपि जगतीन्द्रनन्दनो
महारथाक्रमणसमग्रविक्रमः ।

---

१. 'बद्धपादः' कलि० .

रुरोध तां विबुधविरोधिवाहिनीं
महोदधेर्मलय इवोर्मिसंततिम् ॥ १७ ॥

जगतीन्द्रस्य पृथ्वीशस्य नन्दनो रामोऽर्जुनो वा तां विबुधविरोधिनां देवद्विषां वाहिनीं सेनां खरादिसैन्यं निवातकवचसैन्यं वा रुरोध रुद्धवान् । महारथानामाक्रमणे समग्रो विक्रमो यस्य स तथा । 'रथेनैकेन शत्रून्यः साहंकारो व्रजत्यलम् । महारथः स विज्ञेयो युद्धशास्त्रविशारदः ॥' इति । किंविशिष्टां ताम् । विसारिणीं विस्तृताम् । महतीमित्यर्थः । मलय इव । महाम्बुधेः समुद्रस्य उर्मिसंततिं कल्लोलपरम्परां मलयपर्वतो रुणद्धि यथा । 'विक्रमस्तु पुमान्कान्तिमात्रे स्याच्छान्तिसंपदि' इति विश्वः ॥

तरस्विनां द्विरदरथाश्वचारिणां
सिसृक्षतां प्रहरणपङ्क्तिमुज्ज्वलाम् ।
विरोधिनामधिरणमेकलक्ष्यतां
बलं दधौ नृपसुत एक एव सः ॥ १८ ॥

स एक एव नृपसुतो रामोऽर्जुनो वा विरोधिनां खरादीनां निवातकवचादीनां वा बलमधिरणं रणे एकलक्ष्यतां दधौ धारयति स्म । एकोऽद्वितीयो लक्ष्यो वध्यो यस्य स एकलक्ष्यः तस्य भावः एकलक्ष्यतेत्यर्थः । विभक्त्यर्थेऽव्ययीभावोऽधिरणमिति । किंविशिष्टानाम् । तरस्विनां बलवताम् । द्विरदैर्हस्तिभिः रथैः स्यन्दनैः अश्वैर्वाजिभिश्च चारिणां संचारणशीलानाम् । उज्ज्वलां दीप्तां प्रहरणपङ्क्तिमात्रपरम्परां स्रष्टुमिच्छूनामिति ॥

नियन्तृभिर्युधि पुरतः प्रधाविता
रथाः पुरःपवनपराङ्मुखीकृतैः ।
व्यदर्शयन्दिशमिव केतनांशुकैः
पराजये झटिति पलायनोचिताम् ॥ १९ ॥

नियन्तृभिः सारथिभिः पुरतोऽग्रे प्रधाविताः प्रद्रुता रथाः स्यन्दनाः केतनांशुकैर्ध्वजवस्त्रैः पुरःपवनैः संमुखवायुभिः पराङ्मुखीकृतैः पश्चात्कृतैः युधि संग्रामे पराजये सति झटिति पलायनोचितां शीघ्रपलायनयोग्यां दिशमिव व्यदर्शयन्दर्शयन्ति स्म । प्रकारमिव निवेदयामासुरिति यावत् ॥

अथापतन्नृपतनयस्य सर्वतः
पतिष्यतः शरनिकरस्य दूतिकाः ।
अनादरादरिपृतनासु दृष्टयः
सरोजिनीष्विव रजनीपतेस्त्विषः ॥ २० ॥

1. 'चिरं' कलि०.

अनन्तरं नृपतनयस्य रामस्यार्जुनस्य वा दृष्टयः दूतिका इव अरिपृतनासु खरादिसेनासु निवातकवचसेनासु वा सर्वत आपतन्नापतिताः । पतिष्यतश्च शरनिकरस्य अनादरात् । तमनादृत्येत्यर्थः । रजनीपतेस्त्विषः सरोजिनीष्विव । चन्द्रकिरणपाते सति यथा पद्मानां संकोचो भवति तथा तद्दृष्टिपाते सति रिपुसैन्यानां संकोचो जात इत्युक्तम् । अन्योऽपि यः शत्रुं प्रतियाति सोऽपि प्रथमं दूतप्रेषणं करोतीति ॥

उदञ्चयन्ध्वजमिव विक्रमश्रियो
विजृम्भयन्फणमिव रोषभोगिनः ।
प्ररोहयन्विजयतरोरिवाङ्कुरं
व्यभाव्यत भ्रुकुटिमता मुखेन सः ॥ २१ ॥

स रामोऽर्जुनो वा भ्रुकुटिमता भ्रूसंकोचयुक्तेन मुखेनैव व्यभाव्यत विभावितः उत्प्रेक्षितः । तत्स्वरूपमाह—ध्वजमिवेति । विक्रमश्रियः पराक्रमलक्ष्म्याः ध्वजमिवेति । उदञ्चयन् उत्तोलयन् । तथा—[रोष]भोगिनः क्रोधसर्पस्य फणमिव विजृम्भयन् विस्तारयन् । रोषो भोगीव । 'फणा द्वयोः' इत्यमरः । तथा—विजयतरोरङ्कुरमिव प्ररोहयन् उत्पादयन् । भ्रुकुटीबन्धेनैवं लक्षित इत्यर्थः । उत्प्रेक्षालंकारः ॥

भुजेन तद्भुजगनिभेन भूभृत-
स्तनुत्रिणा विहितविधूननं धनुः ।
अबूबुधच्छरधिगुहान्तशायिनः
स्वनिःस्वनैरिव समराय सायकान् ॥ २२ ॥

भूभृतो रामस्यार्जुनस्य वा भुजेन भुजगनिभेन सर्पसदृशेन विहितविधूननं विहितास्फालनं तद्धनुः स्वनिःस्वनैः स्वकीयशब्दैः शरधिगुहान्तः तूणीकन्दरान्तः अन्तशब्दस्वरूपे सुप्तान् सायकान् समराय अबूबुधत् जागरयति स्मेव । तनुत्रिणा तनुत्रयुक्तेन । भुजरक्षकवर्मयुक्तेनेत्यर्थः ॥

विधीयतां किमधिमृधं विरोधिनां
परासुता किमु परिभाव एव वा ।
इतीव तं विभुमनुयोक्तुमुद्यता
शरावलिः श्रवणसमीपमाश्रयत् ॥ २३ ॥

तस्य रामस्यार्जुनास्य वा शरावलिर्बाणपरम्परा श्रवणसमीपं कर्णसविधमगमत् आश्रयति स्म । अयं तु शरत्यागप्रकारः । कर्णमूलं यावद्धनुराकृष्य बाणस्त्यज्यते इति । उत्प्रेक्ष्यते । तं विभुं स्वामिनं राममर्जुनं वा इति अनुयोक्तुं प्रष्टुमिवोद्यता साभिलाषैव । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । इति किमिति । अधिमृधं संग्रामे विरोधिनां शत्रू-

णां परासुता अपगतप्राणभावः प्राणशून्यता विधीयतां किमु पराभव एव परिभवमात्रं विधीयताम् । किमु प्रश्ने । 'किमु संभावनायां स्याद्विमर्शे चापि दृश्यते' इति मेदिनिकरः ॥

अथ स्फुरद्गुरुगुणनादमेदुरा-
च्छरासनादुपहितमण्डलाकृतेः ।
विनिर्ययुर्निशितमुखाः शिलीमुखाः
क्षयार्णवादिव वडवाग्निहेतयः ॥ २४ ॥

अथानन्तरं निशितमुखाः शिलीमुखाः तीक्ष्णाग्रा बाणाः शरासनाद्धनुषो निर्ययुर्निर्जग्मुः । उपहिता कृता ज्याकर्षणेन मण्डलाकृतिस्तदाकारत्वं यस्य तस्मात् । पुनः किंभूतात् । स्फुरता गुरुणा अतिशयितगुणनादेन मेदुरादतिशयितात् । क्षयार्णवादिव । यथा क्षयकाले समुद्राद्वडवाग्निहेतयः वडवानलशिखा निर्यान्ति । अर्थात् संहाराय ॥

शरोरगाः सुररिपुसागरं जवा-
ज्जगाहिरे नृपसुतचापनोदिताः ।
विघट्टनस्फुरिततनुत्रनिष्पत-
त्स्फुलिङ्गकप्रकरविषानलाकुलाः ॥ २५ ॥

प्राणहरत्वेनोरगा इव शराः सुररिपोः खरस्य निवातकवचस्य वा सैन्यमनवगाहनीयत्वात्सागरमिव जगाहिरे विलोडयामासुः । तन्मध्यपतिता बभूवुरित्यर्थः । नृपसुतेन रामेणार्जुनेन वा चापान्नोदिताः प्रेरिताः । पुनः किंभूताः । विघट्टनेन अर्थाच्छराणां यत्स्फुरितं तनुत्रं सन्नाहस्तस्मान्निष्पतन्तो ये स्फुलिङ्गकप्रसरा यस्यैवंभूतो विषानलः तेनाकुला व्याप्ताः । 'तलत्र' इति पाठे तलत्रं[1] ज्याघातवारणं तलं हस्तमङ्गुलीस्वरूपं वा त्रायते इति ॥

परोज्झिताः प्रहरणपङ्क्तयोऽपत-
न्नृपात्मजे हिमततिवद्विनाश्य ताः ।
अनेकधा विससृपुरस्य ते ततो
रवेरिव प्रतिदिशमंशवः शराः ॥ २६ ॥

परैः शत्रुभिः खरादिभिर्निवातकवचादिभिर्वा उज्झितास्त्यक्ताः प्रहरणपङ्क्तयोऽस्त्रसमूहाः नृपात्मजे रामेऽर्जुने वापतन् पतिताः । रवेरादित्यस्यांशवः किरणाः प्रतिदिशमिव । अस्य रामस्यार्जुनस्य वा ते शराः हिमततितुल्याः तुषारपरम्परासदृशास्ताः प्रहरणपङ्क्तीरस्त्रसंततीर्विनाश्य प्रतिदिशं विससृपुः । रवेरपि करास्तुषारसंततीर्नाशयन्ति ॥

---

१. 'गोधे तले ज्याघातवारणे' इति कोशतस्तु तलशब्दस्यैव ज्याघातवारणार्थकत्वं प्रतीयते.

रणोद्यतं प्रथममुदायुधावलि
व्यलोक्यत त्रिदशजनैर्द्विषां बलम् ।
अनन्तरं कलितकबन्धबन्धुरं
ततः क्षणात्क्षितितलसंस्तरायितम् ॥ २७ ॥

त्रिदशजनैर्देवलोकैः संग्रामदिदृक्षया समागतैर्द्विषां शत्रूणां खरादीनां निवातकवचादीनां वा तद्बलं सैन्यं रणोद्यतं समराय समुद्यतं प्रथमम् उद्गता आयुधानामस्त्राणामावलिर्यत्र तत् । अनन्तरं व्यतीतकालमेव तत्सैन्यं कलितकबन्धेन शिरःशून्ययोधकलेवरेण बन्धुरमुन्नतं व्यलोक्यत । 'बन्धुरं चोन्नतानते' इति विश्वः । व्यलोक्यत विलोकितं ततः क्षणात्क्षितितले भूतले संस्तरायितम् । कबन्धानां पाते सति क्षितितले संस्तरवत् शय्येव जातं व्यलोक्यत संस्तर इवाचरतीति ॥

कबन्धभावात्पिशिताशनानां
प्रनृत्यतां कुक्षिमनुप्रविष्टाः ।
विनिर्ययुः कण्ठपथेन तेषां
मूर्ता इव प्राणगणाः खगेन्द्राः ॥ २८ ॥

तेषां पिशिताशनानां खरादीनां निवातकवचादीनां वा कबन्धभावाच्छिरोहीनत्वात् प्रनृत्यतां नृत्यं कुर्वतां कुक्षिमभ्यन्तरं पूर्वं ये खगेन्द्रा बाणाः शरा अनुप्रविष्टाः । ते खगेन्द्राः तेषामेव कण्ठपथेन विनिर्ययुः विनिर्गताः । मूर्ताः शरीरिणः प्राणगणा इवेत्युत्प्रेक्षा । 'खगः सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे' इति विश्वः । नर्तनहेतुं विभावयति—संमुखं पतितं शिर इति स्वामिकार्यमनेन कृतमिति वा । केचित्तु खगेन्द्राः पक्षिणो ये द्विषां कुक्षिमनुप्रविष्टाः त एव कण्ठपथेन विनिर्ययुः इत्यर्थमाचक्षुः ॥

उत्कृत्ता अपि विशिखैः सजीवशेषा
मूर्धानः शितदशनोत्कटाः परेषाम् ।
संस्कारादभिनरवीरमापतन्तः
खे गृध्रैः कलितकचैरपाह्रियन्त ॥ २९ ॥

कलिता गृहीताः कचा यैस्तैर्गृध्रैः तेषां खरादीनां निवातकवचादीनां वा मूर्धानः शिरांसि अपाह्रियन्त । दूरं नीतानीत्यर्थः । खे आकाशे । किंभूताः । जीवो जीवितं तस्य शेषो मूर्ध्नि स्थितं तेन सहिताः । संस्कारात्पूर्वं जनितादभिनरवीरं लक्ष्यीकृत्यापतन्तः । शितेन तीक्ष्णेन दशनेन उत्कटाः भयंकराः शिरसश्छेददशायामभिगन्तुमुद्यताः तमेव छेदनानन्तरमपि संस्कारवशाद्गच्छन्त इत्यर्थः । शरेण छिन्ना अपि क्रोधेन दष्टोष्ठतया दन्ता(न्ततीक्ष्णता)भिव्यक्तिरिति तात्पर्यम् । एवं प्राणा इति । पक्षे समञ्जसम् ॥

शिरांसि तद्विशिखमुखार्पितान्यलं
निषादिनां नभसि निगृह्य चञ्चुभिः ।
पतत्रिणः क्षणकृतमण्डलभ्रमाः
पदं दधुः परबलकेतुमूर्धसु ॥ ३० ॥

परस्य शत्रोः खरादेर्निवातकवचादेर्वा बलानां सैन्यानां केतुमूर्धसु ध्वजाग्रेषु पतत्रिणः पत्रिणः पदं चरणं दधुर्निहितवन्तः । क्षणं व्याप्य कृतं मण्डलरूपं भ्रमणं यैस्ते । नभसि आकाशे निषादिनां सारथिनां रामस्यार्जुनस्य वा विशिखमुखेऽर्पितानि [शिरांसि] चञ्चुभिर्निगृह्य गृहीत्वेति । 'चञ्चुत्रोट्यां स्त्रियाम्' इति विश्वः ॥

रणक्षितौ परकरिणां शरक्षतै-
श्चिरं करैरभिलुलुठे भयंकरैः ।
द्रुतोत्पतत्खगपतितुण्डखण्डित-
भ्रमन्महाविषधरभोगभङ्गिभिः ॥ ३१ ॥

रणक्षितौ संग्रामभुवि परस्य शत्रोः खरादेर्निवातकवचादेर्वा करिणां हस्तिनां करैश्चिरमभिलुलुठे लुठितम् । किंभूतैः । शरक्षतैः बाणक्षतैः । अर्थात्तयोरिति । भयंकरैः । कुतः । भयानकैः । द्रुतमिति हेतुगर्भविशेषणम् । द्रुतं शीघ्रमुत्पततः खगपतेर्गरुडस्य तुण्डेन खण्डितस्य भ्रमतो महाविषधरस्य भोगवच्छरीरवद्भङ्गिर्येषां तैः ॥

शरावलीविदलितकुम्भिकुम्भजा
विरेजिरे रणभुवि मौक्तिकोत्कराः ।
प्रवर्तिताः प्रतिमुखमस्य संपदां
जयश्रिया स्वयमिव लाजवृष्टयः ॥ ३२ ॥

रणभुवि समितिभूमौ मौक्तिकानामुत्कराः समूहा विरेजिरे शुशुभिरे । किंभूताः । शरावल्या बाणपरम्परया विदारितं यत्कुम्भिकुम्भस्थलं हस्तिगण्डस्थलं तस्माज्जाता उत्पन्नाः । अत्रोत्प्रेक्ष्यते । अस्य रामस्यार्जुनस्य वा हर्षाज्जयश्रिया प्रतिमुखं संमुखं प्रवर्तिता लाजवृष्टयः इव ॥

कृत्तं[1] शरैर्विजविभिरुष्णवारणं
दिवि भ्रमत्पवनवशादशोभत ।
मनस्विनां मन इव विक्रमोर्जितं
सविभ्रमं भुवनपरिभ्रमोद्यतम् ॥ ३३ ॥

---

१. 'हृतं' कलि०.

विजविभिर्वेगशालिभिरुष्णवारणं छत्रं कृत्तं शरैश्छिन्नं पवनवशादाकाशे भ्रममाणमशोभत राजते स्म। यथा मनस्विनां मन इव सविभ्रमं यथा स्यादेवम्। यद्वा—सविभ्रममिति मनोविशेषणम्। सविलासमित्यर्थः। स्वविक्रमेणोर्जितम्। बलवदुत्पन्नमिति यावत्। भुवनानां लोकत्रयाणां भ्रमणायोद्यतं मन इव ॥

तमीक्षितुं प्रतिमुखमाहतोद्यमा
विरोधिनः क्षतशिरसः क्षणाच्छरैः ।
नभोगताः सपदि सुराङ्गनासखा
व्यलोकयन्सुखमनिमेषदृष्टयः ॥ ३४ ॥

तं राममर्जुनं वा प्रतिमुखं संमुखमीक्षितुं कृतोद्यमा विरोधिनः शत्रवः खरादयो निवातकवचादयो वा क्षणादेव शरैः क्षतशिरसः तत्कालं नभोगताः स्वर्गस्थाः अनिमेषदृष्टयो निमेषशून्यलोचनाः सुखं यथा स्यात् तथा व्यलोकयन् अवलोकयामासुः। सुराङ्गना देवाङ्गनाः सखायो येषां ते[1]। अनिमेषे लोचने येषां ते देवत्वात्तथाभूताः ॥

दृष्टा विशन्तश्च विनिर्गताश्च प्रकाशयन्तो बलमप्रकाशाः ।
सतोयदे व्योमनि दृष्टनष्टाश्चेरुर्महोल्का इव तस्य बाणाः ॥ ३५ ॥

तस्य रामस्यार्जुनस्य वा बाणाः चेरुर्गताः। बलं रिपुद्वयसैन्यं विशन्तः प्रविशन्तो दृष्टाः। विनिर्गताः बहिर्गताश्च दृष्टाः। अतिवेगशालित्वादिति। यथा सतोयदे मेघयुक्ते व्योमनि दृष्टाः क्षणेन नष्टाः महोल्का इव ॥

एकेषुणा ये[2] रिपवोऽस्य भिन्ना न ते द्वितीयस्य शरव्यमासन्।
भिन्दन्ति भानोः प्रथमे तमांसि शेषाः करा लोकविलोकनाय[3] ॥ ३६ ॥

अस्य रामस्यार्जुनस्य वा ये रिपवः खरादयो निवातकवचादयो वा एकेषुणा एकबाणेन भिन्ना विदारिताः। ते द्वितीयस्य बाणस्य शरव्यं वेध्यं नासन् न वृत्ताः। अत्र दृष्टान्तमाह—भानोरादित्यस्य प्रथमे कराः किरणाः तमांस्यन्धकारान् भिन्दन्ति दारयन्ति। शेषा इतरे कराः लोकविलोकनाय लोकस्यावलोकनमात्राय ॥

च्युतानकप्रकटतमानडम्बरा
समन्ततोभृतबहुरत्नभूषणा ।
असुक्षयक्षणिककृतान्तकल्पिता
रणावनिर्विपणिरिव व्यभाव्यत ॥ ३७ ॥

सा रणावनिः रणभूमिः विपणिरिव पण्यवीथिकेव व्यभाव्यत लक्षिता। 'विपणिः प-

१. बहुव्रीहौ टच् दुर्लभः, तस्मात् सुराङ्गनानां सखायः सखिभूता इति षष्ठीतत्पुरुषो बोध्यः. २. 'येऽस्य परे विभिन्नाः' कलि०. ३. 'विभूषणाय' कलि०.

ण्यवीथिका' इत्यमरः । किंभूता । च्युतानकेन त्रुटितपटहादिना प्रकटीकृतो व्यक्तीकृतो मानडम्बरः पात्रप्रपञ्चो यत्र सा तथा । 'आनकः पटहो भेर्याम्' इति विश्वः । समन्ततः सर्वत्र भृतेन वर्तुलीकृतेन रत्नसमूहेन भूषणं यत्र । प्राणव्ययः क्षणिको यस्मादेव कृतान्तेन शूरादिना कल्पिता समन्विता । आनकः शिरस्त्रमिति केचित् । 'क्लीबं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ गृहे' इति मेदिनीकरः ॥

दानाम्भोभिः कुम्भिनां पङ्किलान्ता
धावद्रथ्या नेमिसीमन्तदुर्गा ।
पादातानां सा जघानाजिभूमि-
र्जङ्घालत्वं रक्तजम्बालसादा ॥ ३८ ॥

सा आजिभूमिः संग्राममही पादातानां पदातिसमूहानां जङ्घालत्वं शीघ्रगमनशीलत्वं जघान हतवान् । किंविशिष्टा । कुम्भिनां हस्तिनां दानाम्भोभिर्मदजलैः पङ्किलोऽन्तो मध्यो यस्याः सा पङ्कयुक्ता अन्तःशब्दस्वरूपवाची । धावन्ती या रथ्या रथसमूहः तस्या नेमिश्चक्रं तया कृतेन सीमन्तेन निम्नोन्नततया दुर्गा दुर्गमा दुःसंचरा । रक्तेन जम्बालः पङ्कः तेन सादोऽवसादो यत्र । 'जम्बालः शैवले पङ्के' इति मेदिनीकरः ॥

समधिकतरमाजौ राजसूनुर्विरेजे
त्रुटितसुभटकण्ठग्रन्थियन्त्रप्रणुन्नौ ।
रुधिरघुसृणधाराचक्रवालैर्वितन्व-
न्नभिनवजलकेलीविभ्रमं दिग्वधूभ्यः ॥ ३९ ॥

आजौ रणे समधिकमत्यर्थं राजसूनुः रामोऽर्जुनो वा विरेजे राजते स्म । किंविशिष्टः । दिग्वधूभ्यः दिगङ्गनाभ्यः अभिनवजलेन या केली तद्वद्विभ्रमं वितन्वन् विस्तारयन् । कैः । रुधिरमेव घुसृणं कुङ्कुमं तस्य धारा चक्रवालैः समूहैः त्रुटितश्छिन्नः सुभटानां यः कण्ठग्रन्थिः कण्ठबन्धः स एव यन्त्रं क्रीडाहेतुः तेन प्रणुन्नौ प्रेरितौ ॥

सुरद्विषां तुङ्गतरैः कबन्धैः पतद्भिरुर्वी सुचिरं चकम्पे ।
प्राक्खण्डिताग्रैरनुकृत्तमूलैर्महाद्रुमाणामिव मध्यकाण्डैः ॥ ४० ॥

उर्वी भूमिः सुचिरं चकम्पे चलिता । कैः । पतद्भिः पतनशीलैः तुङ्गतैरुच्चैः सुरद्विषां दैत्यानां कबन्धैः मूर्धहीनकायैः । उत्प्रेक्ष्यते । महाद्रुमाणां मध्यकाण्डैः मध्यभागशकलैः इव । कीदृशैः । प्राक् प्रथमं खण्डितानि अग्राणि उपरिभागा येषां तैः । अनु पश्चात् कृत्तानि छिन्नानि मूलानि येषामीदृशैस्तरुखण्डैः भूः कम्पते इत्यर्थः ॥ उपमा वा ॥

बाणव्रातव्रणितवपुषां पेतुषां कुञ्जराणा-
मङ्गादग्रात्कुलिशदलितोत्तुङ्गभूभृन्निभानाम्

सद्यः प्रोहुः प्रतिदिशमसृक्सिन्धवो मेरुमूल-

भ्रश्यज्जम्बूफलरससरित्पूरसौभाग्यभाज्यः ॥ ४१ ॥

कुञ्जराणां गजानामङ्गात्प्रत्यङ्गात्सद्यः प्रतिदिशं चतुर्दिक्षु अस्रक्सिन्धवो रुधिरनद्यः प्रोहुः प्रसरन्ति स्म । कीदृशानां गजानाम् । बाणव्रातव्रणितवपुषां बाणानां व्रातैः समूहैः व्रणितानि खण्डितानि वपूंषि शरीराणि येषाम् । अत एव पतनशीलानाम् । यथा कुलिशेन वज्रेण दलिताः खण्डिता ये उत्तुङ्गा उच्चा भूभृतो गिरयः तत्तुल्यानाम् । कीदृश्यो नद्यः । मेरुगिरिमूलात् भ्रश्यन् यो जम्बूफलानां रसस्य सरित्पूरः तत्सौभाग्यं शोभाजनिकाः । स्वर्गे जम्बूफलरसस्य जम्बूनामनदी वहतीति पुराणप्रसिद्धम् । रक्तत्वात्साम्यम् ॥

नीहारसंसिक्तमिवाब्जखण्डं कल्पानलालीढमिवार्णवाम्भः ।

शरन्मरुन्नुन्नमिवाभ्रवृन्दं बलं कथाशेषमभूत्परेषाम् ॥ ४२ ॥

परेषां शत्रूणां खरादीनां निवातकवचादीनां वा बलं सैन्यं कथाशेषमभूत् । नष्टं सर्वमित्यर्थः । तत्र दृष्टान्तः—नीहारसंक्षिप्तं पद्मखण्डमिव । यथा हिमदग्धं पद्मजालं कथाशेषं भवति । कल्पानलः कल्पान्ताग्निः तेनालीढं दग्धमर्णवाम्भः समुद्रोदकमिव । शरन्मरुन्नुन्नं शरत्कालीनवायुना प्रेरितमभ्रवृन्दं यथा कथाशेषं भवति । तथा सर्वनाशे दृष्टान्तः ॥

इति स सुभटदर्शं विद्विषां संप्रमाथा-

द्विरचितगुरुतुष्टिर्भूर्भुवःस्वस्त्रयस्य ।

विबुधमुनिनुतश्रीर्वर्धयन्धर्मधाराः

कृतसुरपतितोषः सोदराभ्यर्णमागात् ॥ ४३ ॥

स रामः सोदराभ्यर्णं लक्ष्मणसमीपमागात् आगतः । कीदृशः । सुभटदर्शं सुभटान् दृष्ट्वा विद्विषां खरादीनां संप्रमाथात् वधात् । भूर्भुवःस्वस्त्रयस्य त्रैलोक्यस्य विरचिता कृता गुर्वी बहुला तुष्टिर्येन सः । 'विरचितगुरुभक्तिः' इति पाठे भूर्भुवःस्वस्त्रयस्य विद्विषां संप्रमाथात् । विरचिता गुरोः पितुर्भक्तिराज्ञा करणेन येन तादृशः । विबुधैर्देवैर्मुनिभिः ऋषिभिः नुता स्तुता श्रीः शोभा यस्य सः । धर्मधारा धर्मपरम्परा वर्धयन् कृतः सुरपतेरिन्द्रस्य तोषो येन सः । पक्षे—सोऽर्जुनः सोदराभ्यर्णं युधिष्ठिरादिनिकटमागात् । विरचिता गुरोरिन्द्रस्य भक्तिर्येन दैत्यवधात् । तुल्यमन्यात् ॥

सोऽथ तीव्रविरहव्यथाहरैः सन्मनःसुखकरैः सुविस्तरैः ।

आत्मवृत्तकथनैः समादधे दारसोदरमनःप्रहर्षणम् ॥ ४४ ॥

अथानन्तरं स रामोऽर्जुनो वा दाराः सीता द्रौपदी वा सोदरस्य लक्ष्मणस्य युधिष्ठिरादेर्वा मनःप्रमोदं हर्षं समादधे करोति स्म । आत्मनो वृत्तस्य कथनः कथानकः । किंभूतैः ।

तीव्राणां विरहव्यथानां दुःखविशेषाणां हारैर्हारकैः । वनवासादिनोत्कटविरहजनिता या वेदना तस्या अपहारकैरित्यर्थः । पुनः किंभूतैः । तत्कथां शृण्वतां पुंसां श्रवणमार्गस्य कर्णविवरस्य पावनैः पवित्रजनकैः ॥

सोत्कण्ठया तीव्रवियोगखेदाद्भुजोपपीडं प्रिययोपगूढः ।
नरेन्द्रसूनुः सुतरां बभासे रत्येव युक्तो भुवि कामदेवः ॥ ४९ ॥

स नरेन्द्रसूनुः रामः सुतरां बभासे शुशुभे। स किंभूतः । भुजोपपीडं भुजाभ्यामुपपीड्य प्रियया सीतया उपगूढः आलिङ्गितः । 'सप्तम्यां चोपपीड–' इति णमुल् । कीदृश्या तया। तीव्रस्य वियोगस्य खेदात्परिश्रमात् दुःखात्सोत्कण्ठया । रत्या युक्तः कामदेव इव कंदर्प इव । यद्वा रत्या प्रीत्या कामदेवः एतत्काव्यकर्तेव ॥ पक्षे—नरेन्द्रसूनुरर्जुनः। प्रियया द्रौपद्या । तुल्यमितरत् ॥

इति शशिधरकृते राघवपाण्डवीयप्रकाशे चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

तीर्थानामथ गमनादघं नुदन्तः शृण्वन्तो मुनिगदिताः कथाश्च दिव्याः ।
पश्यन्तो नगवननिम्नगाश्च कालं द्राघिष्ठं दिनमिव ते सुखेन निन्युः ॥ १ ॥

ते रामादयो युधिष्ठिरादयो वा द्राघिष्ठं दीर्घकालमेकदिवसमिव सुखेन निन्युः नीतवन्तः । किंभूताः । तीर्थानां प्रयागादीनां गमनात्सेवनादघं पापं नुदन्तः स्फोटयन्तः । दिव्याः कथाः उपख्यानानि शृण्वन्तः आकर्णयन्तः । मुनिभिर्गदितानि नगान् वनानि सरितो वा नगानां पर्वतानां वनानामरण्यानां वा संबन्धिनीः सरितः पश्यन्तः । 'वनं नपुंसकं नीरे प्रवासालयकानने' इति विश्वः ॥

स्वाध्यायैरतिथिजनार्चनैः सहोमैर्भूतानां बलिहरणैः स्वधाभरैश्च ।
संवासेष्वथ महतां च सत्कथाभिस्ते नैकं दिनमिव वन्ध्यतामनैषुः ॥ २ ॥

ते रामादयो युधिष्ठिरादयो वा एकमपि दिनं वन्ध्यतां निष्फलतां नानैषुः न नीतवन्तः । एभिः सफलत्वमनैषुः । कैः । स्वाध्यायैः स्वशाखोक्तवेदाध्ययनैः । अतिथिजनानामागन्तुकानामर्चनैः पूजनैः सहोमैः वैश्वदेवहोमसहितैः भूतानां बलिहरणैश्च बलिकर्मभिः स्वधाभरैः नित्यश्राद्धादिभिः महतां मुनीनां च संवासेषु वसतिषु तैरुक्ताः कथा उपाख्यानानि । ताभिर्धर्मकथाभिरित्यर्थः ॥

महाजगरसांनद्धभीमसेनाभयंकरात् ।
राज्ञः प्रभावाद्दधिरे रोमहर्षं महर्षयः ॥ ३ ॥

महर्षयस्तद्वनवासिनो राज्ञो रामस्य प्रभावादनुभावाद्रोमहर्षं रोमाञ्चोत्कर्षं दधिरे धृतवन्तः । किंविशिष्टात् । महता अजगरेण कङ्कटेन संनद्धा कृतगुप्तिर्या भीमा भयानका सेना तस्या भयं करोतीति तस्मात्। 'उरच्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम्' इत्य-

मरः ॥ पक्षे—राज्ञो युधिष्ठिरस्य प्रभावात् महाजगरेण सर्पविशेषेण सम्यक्प्रकारेण नद्धो वेष्टितो यो भीमसेनः तस्याभयंकरात् अभयदायकात् । अगस्त्यशापादजगरीभूतेन नहुषेण भीमो युधिष्ठिरसंवादात्तेन मुक्त इति पुराणम् । 'संनद्धो वर्मितो व्यूढः' इति विश्वः ॥

स रक्षसां क्रोधवशेन सद्यो गणेन युद्धे यमसात्कृतेन ।
श्रुतिं प्रयातेन पुलस्त्यनप्तुर्दुर्मानसं क्षोभयति स्म भीमः ॥ ४ ॥

स रामः पुलस्त्यनप्तुः रावणस्य दुष्टं मनः क्षोभयति स्म क्षोभसहितं चकार । किंभूतः । भीमः भयानकः । अत एव क्षोभकः । केन । यमसात्कृतेन यमाय दत्तेन विनाशितेन रक्षसां राक्षसानां गणेन समूहेन श्रुतिं श्रवणं प्रयातेनेति । खरादिवधश्रवणाच्चुक्षुभे इति भावः ॥ पक्षे पुलस्त्यनप्तुः कुबेरस्य दुष्टं मानसं स भीमः क्षोभयति स्म । रक्षसां सरोवररक्षकानां राक्षसानां यमसात्कृतेन विनाशितेन गणेन समूहेन कुबेरः तत्र भीमसेनेन योद्धुमागत इति पुराणम् ॥

निशाचरेषु क्षयितेषु तत्र प्रवृत्तयज्ञोत्सवपुण्यघोषे ।
मुदा मुनीन्द्रैः सुखमध्युवास प्रहृष्टदारावरजः स राजा ॥ ५ ॥

स राजा रामः तत्र वने सुखं यथा स्यादेवमध्युवास अधिवसति स्म । पूर्वोक्तप्रकारेण निशाचरेषु राक्षसेषु क्षयितेषु सत्सु । किंभूतः । अतएव प्रवृत्तो यो यज्ञोत्सवः तस्य पुण्यो घोषः शब्दो यत्रेति । 'मनोज्ञं सुकृतं धर्मस्त्रयं पुण्यमुदाहृतम्' इति विश्वः । स किंभूतः । प्रकर्षेण हृष्टा हर्षिता दाराः सीता अवरजो लक्ष्मणो यस्य स तथा । दाराश्चावरजश्च दारावरजौ प्रहृष्टौ दारावरजौ यस्येति वा । रक्षोवधादिति शेषः ॥ पक्षे—राजा युधिष्ठिरः । दारा द्रौपदी । अवरजो भीमादिः । निशाचरः सरोरक्षक इति ॥

वनेऽपि सा संगतसत्यभामा संभाव्यमाना मुनिदारवर्गैः ।
पुष्पैरपूर्वैर्दयितोपनीतैः कृतावतंसा विरराज राज्ञी ॥ ६ ॥

सा राज्ञी सीता दयितेन रामेणोपनीतैरपूर्वैः पुष्पैः कृतावतंसा कृतालंकारा रराज शुशुभे । किंभूता । मुनीनां दारवर्गैः पत्नीसमूहैः संभाव्यमाना कृतोपचारा । संगतसत्यभामा संगता सत्यं भा दीप्तिर्मा लक्ष्मीर्यस्याः सा तथा । 'सत्यं कृते च शपथे तथ्ये त्रिषु तु तद्वति' इति मेदिनीकरः ॥ पक्षे—राज्ञी द्रौपदी दयितेन भीमेन कुबेरसरस उपनीतैरपूर्वैः पुष्पैः सुवर्णकमलैः कृतावतंसा । संगता सत्यभामा कृष्णपत्नी यस्याः सा तथेति ॥

ततो रथव्यावृतघोषयात्रः सुरेन्द्रसेनाकृतरोषबन्धः ।
अजातशत्रूद्यमरक्षितात्मा मायी रिपुस्तद्वनगोचरोऽभूत् ॥ ७ ॥

अनन्तरं मायी मायावान् कपटवेषधारी रिपुः शत्रुः रावणः तद्वनगोचरोऽभूत्। तद्वनमागतः सीताहरणाय। किंभूतः। न जातः शत्रुर्यस्य स रामस्तस्योद्योगादुद्यमात् रक्षित आत्मा स्वं येन स तथा। व्यावृतोऽप्रकाशितो घोषो यस्यैवं निःशब्देन रथेन यात्रा गमनं यस्य स तथा। रथस्य व्यावृत्तघोषस्य निःशब्दस्य यात्रा यस्येति वा। सुरेन्द्रस्य शक्रस्य बले सेनायां कृतो रोषस्य बन्धनं येन स तथा॥ पक्षे—रिपुः दुर्योधनः मायी मायावान् कपटी रथेन व्यावृता घोषयात्रा। व्याजेनेत्यर्थः। अजातशत्रुर्युधिष्ठिरः तदुद्यमेन रक्षित आत्मा यस्य। सुरेन्द्रसेनायाः कृतो रोषेण बन्धो बन्धनं येन स तथा। तद्वनं दुर्योधनः समागमत्॥

अथ स्फुरच्चित्रमृगोपलब्ध्यै दूरंगतेसावरजे नरेन्द्रे।
तदाश्रमोपान्तमवाप लोभाज्जयद्रथस्तीव्रतरादशास्यः॥ ८॥

अनन्तरं दशास्यो रावणः तदाश्रमस्य रामतपोवनस्योपान्तं समीपं प्रापत् सीताया लोभात्। किंभूतः। जयद्रथः जयनशीलो रथः स्यन्दनो यस्य स तथा। 'रथः पुमान्नवयवे स्यन्दने चेतसि चापि' इति विश्वः। कस्मिन्सति। सावरजे सलक्ष्मणे नरेन्द्रे नृपश्रेष्ठे रामे स्फुरच्चित्रमृगस्य सुवर्णमृगरूपस्य मारीचिराक्षसस्योपलब्ध्यै प्राप्त्यर्थं दूरमतिभूमिं गते सति। स किंभूतः। तीव्रं तरो वेगो यस्य सः॥ पक्षे—स जयद्रथः सिन्धुराजः तीव्रतरादतिवेगाल्लोभाद्धेतौ पञ्चमी। तदाश्रमोपान्तं युधिष्ठिरवनसमीपमवाप प्राप। अशास्यः अशासनीयः। नरेन्द्रे सावरजे भीमादिसहिते चित्रमृगस्य हरिणविशेषस्य प्राप्तौ दूरंगते सति॥

स तत्र कृष्णाञ्जितमीनलोचनां निरीक्ष्य मूर्तिर्जनकान्वयश्रियः।
वशं प्रपेदे वशिभिर्विगर्हितं कामस्य मृत्योरथवा दुरत्ययम्॥ ९॥

स रावणः तत्र वने कामस्य स्मरस्य वशमायातं प्रपेदे प्रपन्नः। किं कृत्वा। जनकान्वयस्य वंशलक्ष्म्या इव तस्याः सीताया मूर्तिं स्वरूपं दृष्ट्वा मम जन्मनि सा लक्ष्मीः। 'रामत्वे तु भवेत्सीता' इति। अतस्तां दृष्ट्वा तथायत्तः स बभूवेति समुदायार्थः। किंभूतां कृष्णाम्। कृष्णस्वरूपेण कज्जलेन वा अञ्जिते मीनतुल्यलोचने शफरसदृशे नेत्रे यस्याः सा। कीदृशं वशम्। वशिभिर्जितेन्द्रियैर्विगर्हितं विशिष्टनिन्दितम्। परिणामविरसत्वादिति। अथ वा। पूर्वाक्षेपे। दुरत्ययमत्यर्थशून्यं मृत्योरेव यमस्य वशं प्राप। अनेन प्रकारेण मृत्युरेव स्यादिति भावः॥ पक्षे—कृष्णां द्रौपदीम्। जनकस्य पाञ्चालस्य। स जयद्रथः। शेषं समानम्॥

अलोकसंभाव्यमसौ विलोक्य तदङ्गसौन्दर्यमनङ्गनुन्नः।
एवं वितर्कं मनसा चकार सहेन्द्रियैस्तन्मयतां गतेन॥ १०॥

असौ रावणो जयद्रथो वा एवमग्रे वक्ष्यमाणप्रकारेण मनसा चित्तेन वितर्कं नानारूपं वितर्कं चकार अकरोत्। 'तर्कः काङ्क्षावितर्कोहहेतुशास्त्रेषु कथ्यते' इति विश्वः। किंभूतेन

मनसा । इन्द्रियैश्चक्षुरादिभिः सह तन्मयतां तद्रूपत्वं गतेन प्राप्तेन । यत्र यत्र मनो याति चक्षुस्तत्र समवैतीति तद्रूपत्वमुक्तम् । किंभूतः सः । तस्याः सीतायाः द्रौपद्या वा अङ्गस्य शरीरस्य सौन्दर्यं कान्तिं विलोक्य दृष्ट्वा । अनङ्गेन कामेन नुन्नः प्रेरितः । किंभूतमनङ्गसौन्दर्यम् । न लोकेन जनेन संभाव्यं संभावनीयम् । अस्मिँल्लोके तादृग्रूपं न भूतं न भावीति ॥

तं वितर्कमाह—

धाता ध्याननिमीलिताक्षनिकरः कैश्चित्पदार्थैर्नवैः
सृष्ट्वेमां तदवस्थ एव नियतं यज्ञक्षमायामधात् ।
यद्युन्मीलितदृष्टिदृष्टममुना क्वाप्येतदीयं वपुः
क्व ध्यानं क्व तपः क्व चास्य नियमः क्व ब्रह्मवादे रतिः ॥ ११ ॥

धाता प्रजापतिः तदवस्थ एव इमां सीतां द्रौपदीं वा यज्ञक्षमायां यागभूमौ स्थापितवानित्यर्थः । किं कृत्वा । नवैरनन्यसाधारणैः पदार्थैः रूपादिभिः कैश्चिदनिर्वचनीयैर्निर्वक्तुमशक्यैः । अज्ञानरूपत्वादिति शेषः । ध्यानेन निमीलितो मुद्रितोऽक्षनिकरः इन्द्रियसमूहो येन । एवं सन् । तं दृष्ट्वेति । निर्मायेत्यर्थः । कथमेवमित्याह—यद्येवं न स्यात् । किं तु उन्मीलितदृष्टि यथा भवति तथा अमुना क्वापि तदीयं द्वयोर्वपुर्दृष्टं स्यात् तदास्य धातुः ध्यानं कुतः स्यादेवेत्यर्थः । तपः क्व स्यात् । क्व च नियमः संयमः । क्व च ब्रह्मवादे रतिः ब्रह्माध्यायः । तमिति । एतदालोकनसमुद्भूतमानसविधारणे धातुरेते व्यापारा भवेयुः अतो निमीलिताक्षः । ध्यानस्य एतां यज्ञभूमौ स्थापितवानिति वितर्कः । विशिष्टस्तर्को वितर्कः । वितर्कोऽनुमानपरिशोधकः । 'नियमो यन्त्रणायां च प्रतिज्ञानिश्चये व्रते' इति मेदिनीकरः ॥

अभियोक्तुमात्मविशिखेन शिवं यदि रूपमेतदवलम्ब्य पुरा ।
अयतिष्यत ध्रुवमयुग्मशरोऽतनुनाभविष्यदशरीर इति ॥ १२ ॥

अयुग्मशरः पञ्चेषुः कामः पुरा पूर्वमेव एतद्रूपमेतस्याः सीताया द्रौपद्या वा तादृशं रूपं सौन्दर्यं स्वरूपं वा आत्मविशिखेन स्वकीयेन बाणेन शिवं शंभुं ध्यानस्थितं समाधिस्थमभियोक्तुं यदि अयतिष्यत यत्नमकरिष्यत् । ध्रुवं निश्चयेन । अशरीरो नाभविष्यत् । अयं चाशरीरो भूत एतामवलम्ब्य यत्नमकार्षीदिति वितर्कः । अस्या रूपेण मोहनबाणः स्यादिति भावः । 'ननु प्रश्ने परकृतावधिकारे च संभ्रमे । आमन्त्रणे धातुनये प्रश्नानुज्ञावधारणे ॥' इति विश्वः ॥

सकामः कामोऽस्यां ननु निजवधूकोपचकितः
प्रवृत्तानां स्वैरं सरसजनचित्तप्रमथने ।

स्वयं लक्ष्मीभावं किल निजशराणां परिहर-
न्ननङ्गत्वं गत्वा मम हृदयदुर्गे निविशते ॥ १३ ॥

अस्यां सीतायां द्रौपद्यां वा कामः कंदर्पः सकामः साभिलाषोऽपि संभाव्यते। युक्तं च। कथमेवमित्याह—निजवधूकोपादात्मपत्नीरोषात् चकितस्त्रस्तः सन्। मम हृदयमेव दुर्गं निविशते। अनङ्गत्वमशरीरत्वं गत्वापि। अन्योऽपि त्रस्तो दुर्गं प्रविशतीति तर्कः। किं कुर्वन्। सरसानां शृङ्गारादियुक्तानां जनानां चित्तस्य प्रमथने प्रकर्षेण प्रवृत्तानां निजशराणामात्मीयबाणानां लक्ष्यीभावं लक्ष्यत्वं स्वयं परिहरन् त्यजन् परिहर्तुं भावः। 'अपि संभावनाप्रश्नशङ्कागर्हासमुच्चये। तथा क्रमपदार्थानां कामकारक्रियासु च ॥' इति मेदिनीकरः। 'किलशब्दस्तु वार्तायां संभाव्यानुनयार्थयोः' इति च। अपिशब्दो भिन्नक्रमे। अनङ्गत्वं गत्वापि भिन्नक्रमे। अनङ्गत्वं गत्वापि यतोऽस्यां साभिलाषः अत एव निजवधूत्रस्तः स्वयमपि गत्वापि निवेश्यत्वे हेतुमिति ॥

भवतु शतमखस्य स्वर्गलोकाधिपत्यं
भवतु तदुपभोग्या नन्दनोद्यानलक्ष्मीः।
भवतु सततफुल्लं दृक्सहस्रं तदीयं
सकलमफलमस्याः प्रेक्ष्यतां यो न यातः ॥ १४ ॥

शतमखस्येन्द्रस्य स्वर्गलोकाधिपत्यं भवतु तदुपभोग्या नन्दनोद्यानलक्ष्मीः भवतु। तदीयं तत्संबन्धि दृक्सहस्रं सततफुल्लमनवरतहृष्टं भवतु। तदेतत्सकलमफलम्। यदस्याः सीतायाः द्रौपद्या वा प्रेक्ष्यतां दृश्यतां यो न यातो न गतः। तस्येन्द्रस्य राज्यं नन्दनोद्यानलक्ष्मीः नेत्रसहस्रमेतदफलं सर्वम् एतयोर्दर्शने सफलं स्यात्। तदेतयोर्दर्शनाभावात्सर्वं निष्फलमिति भावः। 'प्रेक्षा नृत्तेक्षणे बुद्धौ' इति विश्वः ॥

अविरतमखदीक्षाजातसंस्कारजाड्यं
स्फुटतरमरसज्ञं मन्महे नाकनाथम्।
भवति यदि स तादृग्रूपवेषान्तरज्ञ-
श्चिरतरमकलत्रः स्यात्कथं गौतमोऽसौ ॥ १५ ॥

स्फुटतरमुत्प्रेक्षायां निश्चये वा। नाकनाथं स्वर्गपतिमिन्द्रमरसज्ञं रसज्ञानशून्यं मन्महे मन्यामहे। 'रसो ज्ञानं रसो हर्षे रसः शृङ्गार एव च। रसः स्वादोऽभिलाषश्च पारदेऽपि रसो विषम् ॥' इति कोशः। कुतः। अविरतं मखदीक्षायां जातमुत्पन्नं संस्कारजाड्यं यस्य स तथा। अन्योऽपि कफादिजडीकृतजिह्वो रसज्ञो न भवति। कथमेवं यदि स इन्द्रः ईदृस्याः सीतायाः द्रौपद्या वा रूपवेषयोः साहजिकाधिकयोरन्तरज्ञो विशेषज्ञानवान् भवेत्। तदासौ गौतमः चिरतरमकलत्रः पत्नीरहितो न स्यात्। अतः अरसज्ञोऽसाविति वितर्कः ॥

अस्याः स्फुटं माल्यकदामशोभिवेणीगुणोत्कर्षमलिम्लुचानाम् ।
कलापिनां कल्पयतीव दण्डं शिखण्डभारक्षपणाद्घनान्तः ॥ १६ ॥

घनान्तः शरत्कालः कलापिनां मयूराणां दण्डं शान्तिं कल्पयति करोति । कुतः । शिखण्डभारस्य बर्हभारस्य क्षपणात् निराकरणात् । स्फुटं निश्चये तर्के वा । अस्याः सीताया द्रौपद्या वा माल्यकानां पुष्पाणां दाम्ना मालया शोभते या वेणी तस्या यो गुणोत्कर्षः तस्य मलिम्लुचानां चौराणाम् । अन्यस्यापि चौरस्य शिखाछेदनरूपो दण्डः क्रियते । 'शिखण्डं बर्हचूडयोः' इति विश्वः । 'मलिम्लुचो मांसभेदे चौरज्वलनयोः पुमान्' इति मेदिनीकरः ॥

इदृग्रूपप्रचयरचनारम्भपाण्डित्ययोगा-
द्यातो दैवाज्जगति निपुणैः श्लाघनीयो विरञ्चिः ।
किं चैतस्याः प्रसवविधिना योगकोटीनिविष्टं
युक्तं भूमेर्बहु मनुमहे रत्नगर्भाभिधानम् ॥ १७ ॥

निपुणैर्विवेकिभिर्मुनिभिः विरञ्चिर्ब्रह्मा श्लाघनीयः श्लाघार्हो जातः । दैवकृतमेतदित्यर्थः । कुतः । ईदृश्याः सीताया द्रौपद्या वा प्रसवविधिना उत्पत्त्या योगकोटीनिविष्टं यौगिकं भूमेः रत्नगर्भाभिधानं रत्नगर्भा इति नाम रत्नं गर्भे यस्या इति नाम बहु मनुमहे मन्यामहे । 'जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते' ॥

अनुदिनमपि गर्भं गाहतामम्बुराशे-
र्मुहुरपि रविबिम्बे स्वं वपुः प्रक्षिणोतु ।
अतिविपुलकलङ्कं मण्डलं प्राप्य चन्द्र-
स्तुलयितुमलमस्या नैव वक्त्रारविन्दम् ॥ १८ ॥

चन्द्रः प्रत्यहमम्बुराशेः समुद्रस्य गर्भमभ्यन्तरं गाहताम् । तपःकरणायेति भावः । चन्द्रो मुहुः वारं वारं रविबिम्बे स्वं वपुः स्वं शरीरं प्रक्षिणोतु क्षिपतु । क्षीणं करोत्विति यावत् । तपसेति भावः । तदा अतिविपुलकलङ्कं मण्डलमवाप्य चन्द्रः पुनरस्याः सीताया द्रौपद्या वा अकलङ्कं निष्कलङ्कं वक्त्रारविन्दं मुखपद्मं तुलयितुं सदृशीकर्तुं नैवालं नैव समर्थः । यतः—तपःकरणेनापि तत्सादृश्यं नाप्नुयादिति भावः ॥

वनान्तरे स्तोकविभूषणापि पर्याप्तशोभा निजयैव कान्त्या ।
दृष्टा मया भाग्यवशेन सैषा मेघोपरुद्धेव मृगाङ्कलेखा ॥ १९ ॥

पुरःस्थितेन अर्थात्तस्या अग्रस्थितेन मया सेयं सीता द्रौपदी वा वनान्तरे भाग्यवशेन दृष्टा अवलोकिता । मेघोपरुद्धा मेघच्छन्ना मृगाङ्कस्य चन्द्रमसः लेखेव । स्तोकमल्पं भूषणं यस्याः सा । निजयैव कान्त्या पर्याप्ता परिपूर्णा शोभा यस्याः सा ॥

आलोकमात्रादखिलोऽप्यमुष्या[1] मा भूज्जनो मन्मथबाणवध्यः[2] ।
इतीव नूनं नगरीमपोह्य वनान्तमेषा गमिता विधात्रा ॥ २० ॥

इतीव इति कृत्वा विधात्रा स्रष्ट्रा नूनं निश्चयेन नगरीमपोह्य त्यक्त्वा वनान्तरमेषा सीता द्रौपदी वा गमिता । प्रापितेत्यर्थः । आलोकमात्रादमुष्याः सीतायाः द्रौपद्या वा दर्शनमात्रादखिलोऽपि जनो लोको मन्मथबाणवध्यो मा भूदिति ॥

न खलु जलदगर्भाद्विद्यतेऽन्यत्र विद्यु-
त्स्फटिकजठरमग्नो दृश्यते पद्मरागः ।
इयमपि वनभूमौ वर्तते हन्त बाला
न हि जगति निधानं सर्वलोकप्रकाशे ॥ २१ ॥

इयं सीता द्रौपदी वा बाला नवयौवनापि वनभूमौ वर्तते । हन्तेति वाक्यारम्भे युक्तमेव । यन्निधानं निधिः सर्वलोकानां प्रकाशे स्थाने न निश्चीयते नात्यर्थम् । दृष्टान्तः । जलदस्य मेघस्य गर्भादन्यत्र विद्युन्न खलु नैव विद्यते । पद्मरागोऽपि स्फटिकजठरमध्ये मग्नो दृश्यते । 'लग्नश्च' इति पाठेऽपि दृश्यते शोभते । 'खलु स्याद्वाक्यशोभायां जिज्ञासायां च सान्त्वने । वीप्सामाननिधानेषु पूरणे पादवाक्ययोः ॥' इति विश्वः । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः ॥

यावन्नरेन्द्रसुतसायकदक्षिणारुः-
सारङ्गरक्तकपिशं न वनान्तमासीत् ।
तामीक्षमीक्षमिति तर्कपरः स राजा
तावद्बभूव मदनायुधदक्षिणेर्मा ॥ २२ ॥

नरेन्द्रसुतो रामोऽर्जुनो वा तस्य सायकेन बाणेन दक्षिणारुर्दक्षिणगात्रव्रणितो यः सारङ्गस्तस्य रक्तेन रुधिरेण कपिशं तद्वनं नासीत् न बभूव यावत् तावदेव राजा रावणो जयद्रथो वा मदनायुधदक्षिणेर्मा मदनबाणेन दक्षिणभागे व्रण आसीदिति कामायुधेन दक्षिणे ईर्मं व्रणमस्येति दक्षिणेर्मा इति निपातः । तां सीतां द्रौपदीं वा ईक्षमीक्षं दृष्ट्वा दृष्ट्वा इति तर्कपर एवं तर्कयन् ॥

गाम्भीर्यादिव रथतोऽवतीर्य रागी
सोऽजानन्निव निजगाद तां तपस्वी ।
कासि त्वं कलभकरोरु कस्य दाराः
को वा ते कथय वनान्तवासहेतुः ॥ २३ ॥

१. 'पि मौग्ध्यान्'. २. 'वेध्यः'.

स तपस्वी तद्वेषधारी रावणो जयद्रथो वा रथादवतीर्य तां सीतां द्रौपदीं वा इत्यग्रे वक्ष्यमाणं निजगाद उवाच । स किंभूतः । रागी रागवान् । 'रागोऽनुरक्ते मात्सर्ये' इति शाश्वतः । गाम्भीर्यादिवेति । रथादित्यस्य विशेषणम् । गाम्भीर्यादिवावतीर्य । गाम्भीर्यं त्यक्त्वा इत्यर्थः । संजानन्नपि स्वरूपतो जानन्नेव व्याजेन तत्स्वरूपमजानन्निव । यथा अज्ञानं ज्ञानं प्रश्नः क्रियते तद्वत् । किं तत् । कासीत्यादि । का त्वमसीति जातौ नाम्नि च परिप्रश्नः । कस्य दाराः पत्न्यसि वनान्तवासे को हेतुः कथय । अन्तःशब्दो मध्यवाचकः । कलभः करिशावस्तस्य करवदूरू यस्या इति संबोधनम् । 'करभो मणिबन्धादि कनिष्ठान्तोष्ट्रतत्सुते' इति विश्वः ॥

सा तेन पृष्टा चलचेतसापि विस्पष्टमाचष्ट यथार्थमेव ।
तस्यापि हृत्स्थं दशनांशुजालैः शान्तिं नयन्तीव तमःसमूहम् ॥ २४ ॥

सा सीता द्रौपदी वा तेन रावणेन जयद्रथेन वा चलचेतसापि चञ्चलेनापि पृष्टा सती स्पष्टं व्यक्तं यथार्थमेव स्वरूपमेवाचष्ट कथयामास । तस्यापि रावणस्य जयद्रथस्य वा हृत्स्थं हृदयस्थितं तमःसमूहं पापसमूहं तदभिलाषजनितं दशनानां दन्तानामंशुजालैः शान्तिमुपशमं नयन्तीव प्रापयन्तीव ॥

योऽसौ वितानाहितसोमकार्यः क्षोणीभृताहं जनकेन तेन ।
लब्धापि कृष्णाजिनशोभितायां क्षितौ कलत्रे तनयेव सीता ॥ २५ ॥

साहं सीतेति नाम प्रश्ने उत्तरम् । किंभूता । तेन जनकेन नाम्ना क्षोणीभुजा राज्ञा कृष्णाजिनेन कृष्णसारचर्मणा शोभितायां क्षितौ यज्ञभुवि लब्धा प्राप्तेत्यभिजनोक्तिः । अयि संबोधने । कस्मिन्केव । कलत्रे पत्न्यां तनया दुहितेव । तेन केन । यो वितानें यज्ञे विहितं सोमकार्यं येन स तथा । सोमो लताविशेषः । 'नीरे सोमलतायां च सोमस्तुहिनदीधितौ । वानरे च कुबेरे च पितृदेवे समीरणे ॥' इति । 'कार्यं हेतौ प्रयोजने' इति च विश्वः ॥ पक्षे—अहं कृष्णा द्रौपदी तेन राज्ञा जनकेन पित्रा पञ्चालेन अजिनशोभितायां भुवि लब्धा सीता इव तत्सदृशीत्यर्थः । आहितं सोमकार्यं सोमयागो येन स द्रुपदः । अन्यत्समानम् ॥

पतिर्मम क्षत्रमशेषभूभृत्प्रभाविरामोऽयमजातशत्रुः ।
भीमस्य भीमावरजश्च जिष्णुर्नासत्यजाताभिरता च साहम् ॥ २६ ॥

मम पतिः स्वामी रामो दाशरथिः । कस्य दारा इत्यत्रोत्तरम् । किंभूतः । क्षत्रं क्षत्रियविशेषः । अशेषाणां भूभृतां प्रभावि प्रभविष्णुशीलः । पुनः किंभूतः । अजातशत्रुः अनुत्पन्नरिपुः । भीमस्य भयानकस्य जिष्णुर्जयनशीलः । 'भीमश्च' इति पाठे भयानकः । अर्थाच्छत्रूणाम् । भीमो भयानकोऽवरजो लक्ष्मणो यस्य । सा चाहं न असत्यजातं समूहो यत्र तस्मिन्नभिरता अनुरक्ता ॥ पक्षे—मम पतिरयमजातशत्रुर्युधिष्ठिरः, भीमो भीमसेनः, भीमावरजो जिष्णुरर्जुनः, जयनशीलः सर्वत्र विशेषणम्, सा

चाहं नासत्यजाताभिरक्ता नासत्यावश्विनीकुमारौ ताभ्यां जातौ नकुलसहदेवौ तयोश्चाभिरता अनुरक्ता। पतिः कथंभूतः। अशेषाणां भूभृतां प्रभाया विरामो यस्मात्स तथा। सर्वविशेषणम्। भीमस्याभिरतेति पृथक्कृत्य योज्यम्॥

पितुर्निकेतं श्वशुरश्रियं च विहाय साहं समयप्रतीक्षा।
दायादसंक्रामितराज्यभारा स्वभर्तृभक्त्या विपिने वसामि॥ २७॥

साहं सीता द्रौपदी वा स्वकीयस्य भर्तुः स्वामिनो भक्त्या सेवया विपिने वने वसामि। स्वामिभक्त्यर्थमेव प्रस्थितास्मीति वनवासोत्तरम्। किं कृत्वा। पितुर्जनकस्य द्रुपदस्य वा निकेतं गृहं श्वशुरस्य दशरथस्य पाण्डोर्वा श्रियं राज्यलक्ष्मीं विहाय त्यक्त्वा समयस्य क्रियाकालस्य प्रतीक्षा मानं यस्याः। समयप्रतीक्षा 'चतुर्दश वर्षाणि यावद्वनवासः कर्तव्यः' इति। 'समयः स्यात्क्रियाकाले' इति कोशः। दायादेषु संक्रामितः समर्पितो राज्यभारो यया सा। एवं च समस्तमेव पदं दायादेषु भरतादिषु समर्पितम्। दायादेन दुर्योधनादिना संक्रान्तो गृहीतो राज्यभारो यस्या वा। 'राज्यभारस्वभर्तृ—' इति पाठे—दायादेषु दायादैर्वा संक्रान्तो राज्यभारो येन यस्य वा। एवंभूतस्य स्वभर्तुः रामस्य युधिष्ठिरादेर्वा भक्त्या वने वसामीति॥

इयं हि पूर्वैः पदवी प्रदिष्टा स्त्रीणां त्रिवर्गाधिगमस्य मूलम्।
सुखेषु दुःखेष्वथ वा स्थितोऽयं यदेकभावेन पतिर्निषेव्यः॥ २८॥

स्त्रीणामियं पदवी पूर्वैः प्राचीनैर्वृद्धैः प्रदिष्टा कथिता। किंभूता। त्रिवर्गाधिगमस्य त्रिवर्गाणां धर्मार्थकामानामधिगमस्य प्राप्तेर्मूलमधिकरणम्। 'मूलमाद्यं[1] शिफा कान्तिः(?)' इति विश्वः। किं तत्। यत् एकभावेन एकया चेष्टया एकयैव मत्या सुखेष्वथ वा दुःखेषु स्थितः पतिरेव निषेव्यः सेवनीयः। 'धवः प्रियः पतिर्भर्ता' इत्यमरः॥

इति ब्रुवाणां स्मरबाणभिन्नः स निःसपत्नो मनुजेन्द्रपत्नीम्।
मनोज्ञहासां कृतहासमेनां पुनर्बभाषे प्रतिषिद्धभाषी॥ २९॥

स रावणो जयद्रथो वा इति पूर्वोक्तेन प्रकारेण ब्रुवाणां भाषमाणां मनुजेन्द्रपत्नीं सीतां द्रौपदीं वा पुनर्बभाषे उवाच। स किंभूतः। स्मरबाणेन भिन्नो विदारितः। 'भिन्नौ संगविदारितौ' इत्यमरः (?)। निःसपत्नः शत्रुशून्यः कृतहासं यथा स्यात्। प्रतिषिद्धभाषी विरुद्धभाषणशीलः। एकान्ते परकलत्रभाषणं प्रतिषिद्धम् इत्यर्थः। अव्यक्तभाषी वा। तां कीदृशीम्। मनोज्ञो मनोहरो हासो यस्यास्ताम्॥

अयं पुराविद्भिरुदीर्यमाणः स्फुटो भवन्संप्रति लोकवादः।
तृणे महानीलशिलेव सक्तिं करोत्यपात्रे खलु कामिनीति॥ ३०॥

अयं पुरातनैर्वृद्धैरुदीर्यमाणो लोकवादः लोकनिन्दितवादो वा संप्रतीदानीं स्फुटो

---

१. 'मूलं शिफाद्ययोः। मूलवित्तेऽन्तिके ना भे' इति मेदिनी.

व्यक्तो भवन्नस्ति। तमेवाह—खलु निश्चये। कामिनी स्त्री अपात्रे अयोग्ये सति सक्तिमासङ्गं करोति। तृणे महानीलस्य मणिविशेषस्य शिलेवेति। महानीलमणिशिला तृणे सक्तिं करोति। 'पात्रं भाजनयोग्ययोः' इति विश्वः॥

इदं तु ते भर्तृजनस्य भाग्यं तवाथ वा प्राक्तनजन्मपक्तिः।
त्वया विचारोज्झितया स एव न मुच्यते यद्बत दुर्गतोऽपि॥ ३१॥

तु प्रश्ने। इदं वक्ष्यमाणं ते तव भर्तृजनस्य भाग्यं दृष्टम्। अथवा तव प्राक्तनजन्मनः पक्तिः परिपाकः। किं तत्। यत् बत खेदे दुर्गतः कष्टार्हो वनवासी वा त्वया विचारोज्झिया विचारेण त्यक्तया स एव पतिर्न मुच्यते न त्यज्यते। तत्र विचारत्याग एव दुर्गतः सेव्यो न भवति। दुर्गतः इत्युच्यते॥

अनात्म[1]संतारसमर्थमेनं सा त्वं विहायात्महिते यतस्व।
अप्यस्ति कृत्यं तृणकाष्ठलोष्ठैर्न राज्यहीनैर्नरदेववंश्यैः॥ ३२॥

सा त्वं तथाविधा एनं दुर्गतं विहाय आत्महिते स्वकीयहिते यतस्व। तदर्थं यत्नं कुरु। किंभूतम्। न आत्मनः स्वस्य संतारे जीवनोपाये समर्थम्। अनात्मसंतारसमर्थम्। अत्र हेतुमाह—राज्यहीनैर्नरदेववंश्यैरपि न कृत्यं कार्यमस्ति। तृणकाष्ठलोष्ठैरपि कृत्यं कार्यमस्ति। स्वकार्यासमर्थत्वात्। व्यतिरेकोक्तिः। नराणां कोशो बलं राज्यायत्तमिति। तदभावे तृणतुल्यतापि नास्तीति भावः॥

पूर्वोक्तं निर्दिशति—

भिक्षावृत्तिं हरमपि जहौ जाह्नवी सिन्धुनम्रा
हित्वा नागानुपरतमदान्पङ्कजं याति भृङ्गी।
वीर्योदग्रं भजति नृपतिं प्राक्तनान्प्रोह्य पृथ्वी
सारापेताः सरसिजदृशस्तूलतुल्या भवन्ति॥ ३३॥

जाह्नवी जह्नुकन्या गङ्गा हरं शिवं जहौ तत्याज। किंभूतम्। भिक्षैव वृत्तिर्वर्तनोपायो यस्य तं निर्धनम्। किंभूता। सिन्धौ समुद्रे नम्रा अनुप्रविष्टा। अतो निर्धनं विहाय मां धनवन्तं भजस्वेति भावः। एवमुपरतमदान् मदशून्यान् गजान् हित्वा पङ्कजं सरसिजं मधुलुब्धा भृङ्गी याति प्रपन्ना भवति। अत्रापि मधुयोगो हेतुः। 'मदो रेतसि कस्तूर्यां हर्षेभदानयोः' इति मेदिनीकरः। एवं वीर्येण बलेनोदग्रमुद्भटं नृपतिं पृथ्वी धरणी भजते सेवते। प्राक्तनं प्राचीनमबलमवनीपं राजानं प्रोह्य त्यक्त्वा। सरसिजदृशः कमलनयनाया अङ्गनायाः सारापेताः निर्धनाः पुरुषाः तूलतुल्यास्तुच्छाः अनाश्रया भवन्तीति। यद्वा सरसिजदृशोऽपि पुरुषाः सारापेताः सारो धनं तेनापेता रहिताः। अङ्गनानामित्यध्याहार्यम्। तूलतुल्या भवन्तीति। 'सारो बले मज्जनि च

---

१. 'संभार' कलि०.

स्थिरत्वे न्याये च धने च सारम्' इति कोशः । अतोऽयं त्याज्यस्तपस्वी मां रत्नाकरतुल्यं सरसिजदृशं बलिष्ठं भजस्वेति ॥

औत्सुक्यादिदमेव स्फुटयति—

अहं युवा सुन्दरि सिन्धुराजः कुबेरसंपत्प्रतियोगिलक्ष्मीः ।
यो रावणो विद्विषतामसाध्यस्तमागतं मां भज भर्तृभावात् ॥ ३४ ॥

सुन्दरीति गौरवापादकसंबोधने, अहं युवा तरुणः सिन्धुराजः सिन्धुः समुद्रस्तस्य राजा । तात्पर्यं न भूमेरीश्वरः । कुबेरस्य धनदस्य संपदो लक्ष्म्याः प्रतियोगिनी सदृशी लक्ष्मीर्यस्य सः । यश्चाहं रावणो विद्विषतां देवानामसाध्योऽजेयः । तं मां लङ्कापतिमागतं भर्तृभावात् पतित्वेन भज ॥ पक्षे—अहं सिन्धुनाम्नो देशस्य राजा जयद्रथः । कुबेरसदृशधनी । रौतीति रावणो महावावदूकः ॥

सा त्यक्तशोका जटिलामशोकैरुद्यानलक्ष्मीमुपशोभयन्ती ।
मत्पाणिलूनप्रसवावतंसा साकं मया संचर सिन्धुदेशान् ॥ ३५ ॥

सा त्वं मया साकं सह सिन्धुदेशान् समुद्रप्रदेशान् संचर गच्छ । क्रीडार्थमित्यर्थः । त्यक्तः शोको यया सा अर्थान्मत्साहित्यात् । अशोकस्य पुष्पमशोकं तेन जटिलामुद्यानलक्ष्मीमुपशोभयन्ती अधिकं शोभयन्ती । 'उपोऽधिके च' इत्यनुशासनात् । त्वं कीदृशी । मत्पाणिना लूनेन छिन्नेन प्रसवेनावतंसः कर्णालंकारो यस्याः सा ॥ पक्षे—सिन्धुनामदेशान् । द्रौपदीं प्रति जयद्रथवाक्यम् ॥

सा तेन वाक्यैरभिसान्त्वितापि वाताहता विद्युदिव स्फुरन्ती ।
अलं प्रलापैरपयाहि पापेत्युक्त्वा परावृत्तमुखी बभूव ॥ ३६ ॥

सा सीता द्रौपदी वा प्रलापैरनर्थकैर्वाक्यैर्निरर्थकैर्निष्फलैरलं पूर्यताम् । पाप, पापिष्ठ अपयाहि दूरमपसर गच्छेत्युक्त्वा अभिधाय परावृत्तमुखी बभूव वृत्ता । किंभूता । तेन रावणेन जयद्रथेन वा पूर्वोक्तमभिसान्त्वितापि कृतसान्त्वनापि स्फुरन्ती सरोषकम्पयुक्तेत्यर्थः । वाताहता विद्युदिव । यथा वातेन हता स्पृष्टा विद्युत्कम्पते । 'धाराहता' इति पाठे धारा निरन्तरजलपातः ॥

यदा तया प्रार्थितयापि भूयः श्रीरेवया शोण इवापविद्धः ।
विकारमासाद्य तदा स तीव्रं बलेन तां हर्तुमियेष बालाम् ॥ ३७ ॥

भूयो वारंवारं प्रार्थितयापि मां भजस्वेति । ताभ्यां (रावणेन जयद्रथेन वा) याचितया सीतया द्रौपद्या वा यदा स रावणो जयद्रथो वा अपविद्धः क्षिप्तो निरस्तः । श्रीयुक्तया रेवया नर्मदया क्षिप्तः शोणनद इव । तदा तीव्रमतिशयितं विकारं विपरीताकारं मन्मथजनितं भावमासाद्य बलेन शक्त्या तां बालां हर्तुमुपहर्तुमियेष ऐच्छदिति ॥

पुरातिदर्पादिव दानवस्त्रयीं विधुंतुदः पर्वणि चन्द्रिकामिव ।
नदीरयस्तीरलतामिवोत्प्लवे स तां जहार प्रसभेन भामिनीम् ॥ ३८ ॥

स रावणो जयद्रथो वा तां सीतां द्रौपदीं वा अतिदर्पादतिरोषासामर्थ्याद्वा प्रसभेन हठात् भामिनीमिति सुन्दरीं जहार हृतवान् । पुरा पूर्वं दानवस्त्रयीमिव वेदत्रयीमिव । विधुंतुदो राहुः पर्वणि चन्द्रिकां चन्द्रज्योत्स्नामिव यथापहरति । नद्याः सरितो रयो वेगः उत्प्लवे अधिकजले तीरजां लतां व्रततिमिवापहरति ॥

तथागतां तामवलोक्य विह्वलां तदार्तनादप्रतिनादमेदुरैः ।
गुहामुखैर्निर्झरबाष्पवर्षिणी[1] स्वयं नु चक्रन्द वनान्तमेदिनी ॥ ३९ ॥

नु वितर्के। वनान्तमेदिनी वनस्थली स्वयं चक्रन्देव अरुददिव । कैः । गुहाः कन्दराः ता एव मुखानि वक्त्राणि तैः । सा किंभूता । निर्झरा एव बाष्पाः तद्वर्षिणी वृष्टियुक्तापि । बाष्पमुखा रुदन्ति कन्दरा अपि । तथा किंभूतैः । तस्याः सीताया द्रौपद्या वा आर्तनादस्य प्रतिशब्देन मेदुरैर्गभीरैः । तथागतां तद्रूपापन्नां रावणेन जयद्रथेन वा हृतां विह्वलामार्तनादेन क्रन्दमानां विलोक्येति ॥

चलज्जटायौवनसीम्नि तिष्ठता विलोक्य चौर्येण हृतां परेण ताम् ।
तदीयकेलीहरिणीगणैः समं चिराय चुक्रोश वने द्विजावलिः ॥ ४० ॥

वनसीमनि तिष्ठता परेण शत्रुणा रावणेन कामाविष्टेन चौर्येणापहृतां सीतां क्रन्दमानां विलोक्य दृष्ट्वा द्विजावलिः पक्षिसमूहो वनेऽपि चिराय चुक्रोश चक्रन्द । तदीयैस्तत्संबन्धिभिः केलीहरिणीनां क्रीडामृगीणां गणैः समूहैः समं सह । किंभूते तस्मिन् । चलन् गच्छन् जटायुः पक्षिविशेषः यत्र । तत्प्रत्युद्धारायेति शेषः ॥ पक्षे—द्विजावलिः ब्राह्मणपरम्परा । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । किंभूता । चलज्जटा रोषेण चलन्ती जटा यस्याः सा । 'जटा लग्नकचे मूले मास्यां प्लक्षे पुनर्जटी' इति विश्वः। यौवनसीमनि यौवनदशायां तिष्ठता परेण जयद्रथेन तां द्रौपदीम् ॥

आकृष्यमाणः प्रसभादिवोच्चैस्तदार्तनादैर्निजया रुषा च ।
त्वरावतस्तस्य रुरोध मार्गं जवेन भीमः खगराट्समानः ॥ ४१ ॥

तस्य रावणस्य मार्गं वर्त्म भीमो भयानकः खगराट् जटायुः समानः साभिमानः रुरोधारुधत् । किंभूतस्य तस्य । त्वरावतो वेगयुक्तस्य शीघ्रं गच्छतः । किंभूतः सः । तस्याः सीतायाः आर्तनादैरार्तस्वनैः निजया रुषा रोषेण प्रसभाद्वेगात् आकृष्यमाण आनीतः । उच्चैरत्यर्थम् ॥ पक्षे—भीमो भीमसेनः । तस्य जयद्रथस्य । खगराट् गरुडः तत्समानस्तत्सदृशः । अन्यत्समानम् ॥

---

१. 'वर्षिभिः' इत्येवमपि पाठो भवेत्.

परस्पराक्षेपविवृद्धरंहसोः प्रहाररेखाङ्कितगात्रयोर्मिथः ।
प्रकर्षविस्मापितसिद्धचारणं तयोरभूत्संगरकर्म दारुणम् ॥ ४२ ॥

तयोर्जटायुरावणयोर्दारुणं भयानकं संगरकर्म संग्रामकर्माभूत् बभूव । प्रकर्षेणातिशयेन विस्मापिताः सिद्धाः खेचराश्चारणा गन्धर्वादयो यत्र । किंभूतयोः । परस्परमन्योन्यमाक्षेपेण स्पर्धया विवृद्ध उपचितो रंहो वेगो ययोस्तौ । तथा—मिथः अन्योन्यं प्रहाररेखया व्रणेनाङ्कितं गात्रं शरीरं ययोस्तौ तथा ॥ पक्षे—तयोर्भीमजयद्रथयोः । सिद्धाश्चारणाश्चेति द्वन्द्वो वा । सिद्धास्त एव चारणा इति कर्मधारयो वा । अन्यत्समानम् ॥

चिरप्रहारक्षतपक्षमेनं निगृह्य कण्ठस्थितजीवशेषम् ।
स भीमसेनः स्वबलेन निन्ये तां धर्मराजाश्रितदिङ्मुखान्तम् ॥ ४३ ॥

भीमा सेना यस्येति भीमसेनो रावणः स्वबलेन स्वकीयेन सामर्थ्येन तां सीतां धर्मराजेन यमेनाश्रितं दिङ्मुखान्तं दक्षिणां दिशं लङ्काभिमुखं निन्ये नीतवान् । स इत्यस्य विशेषणं भीमसेन इति । किं कृत्वा । एनं जटायुपक्षिणं निगृह्य पराभूय । किंभूतमेनम् । चिरं प्रहारेण क्षताः खण्डिताः पक्षा यस्य तम् । कण्ठे स्थितो जीवशेषो यस्य तम् । सीताप्रवृत्तिकथनाय जीवशेष इत्यर्थः ॥ पक्षे—भीमसेनो वृकोदरः । तां द्रौपदीम् । युधिष्ठिरेणाश्रितं दिङ्मुखान्तं यत्र । युधिष्ठिरस्थानं प्रति निन्ये । कण्ठे स्थितो जीवशेषो यस्य रथाक्षादेर्भङ्गादिति । चिरप्रहारेण क्षतौ पक्षौ पार्श्वौ यस्य तम् । 'पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परितोल्लेखे खले सखिसहाययोः । चूडाबन्धेऽथ तन्त्रे च वाजिकुञ्जरपक्षयोः॥' इति मेदिनीकरः ॥

निशाचराणामुपरोधकर्त्रा पत्या प्रकामं कृतसान्त्वनापि ।
निनाय साशोकवनेषु कालं न मृत्युना नाप्यथ जीवितेन ॥ ४४ ॥

सा सीता अशोकवनेषु कालं निनाय अतिवाहयामास । न विद्यते शोको यस्माद्यत्रेति । शुभसूचकत्वेन तत्रावस्थितिरिति भावः । न मृत्युना मरणेन वा न जीवितेन सौख्येन किं तु दुःखेनेत्यर्थः । किंभूता । हेतुगर्भविशेषणम् । निशाचराणां राक्षसानां पत्या स्वामिना रावणेनोपरोधकर्त्रा अपहारकेनाधिकमवरोधकारकेन । प्रकाममत्यर्थम् । कृतसान्त्वनापि । प्रबोधनादिनेति शेषः ॥ पक्षे—सा द्रौपदी शोकप्रधानेषु वनेषु कालक्षेपं चकार । निशाचराणां हिडिम्बादीनामुपरोधकेन पत्या धवेन भीमेन कृतसान्त्वनापि । शेषं समानम् ॥

ततो वनेषु भ्रमते शशंस भर्त्रे प्रजानामरणिं प्रियां स्वाम् ।
द्विजोत्तमः कृच्छ्रगतः श्रमेण परेण बिभ्यद्धरिणापनीताम् ॥ ४५ ॥

अनन्तरं द्विजोत्तमो जटायुः प्रजानां भर्त्रे रामाय शत्रुणा रावणेनापनीतां स्वां प्रियां सीतां शशंस कथयामास । किंभूताय । वनेषु तदनुसंधानार्थं सीतान्वेषणार्थं भ्रमते

इतस्ततो भ्रममाणाय । अरणिं मन्थनकाष्ठमिव । तेजसामुत्पत्तेः साम्यमुत्पत्तिस्थानम् प्रजानामित्यनुषज्यते । 'अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थ्यदारुणि' इति मेदिनीकरः । कृच्छ्रं कष्टं गतः । अर्थात् युद्धजनितश्रमेण । किंभूतेन । बिभ्यद्धरिणा बिभ्यत् त्रस्तो हरिरिन्द्रो यस्मात् ॥ पक्षे—द्विजोत्तमो ब्राह्मणः पुरोधाः धौम्यः प्रजानां भर्त्रे युधिष्ठिराय हरिणरूपेण धर्मेणापनीतामरणिं शशंस । परेणातिशयितेन श्रमेण कृच्छ्रं गतः । बिभ्यदिति द्विजोत्तमविशेषणम् । अन्यत्समानम् ॥

वने पुनस्तत्पदवीं विचिन्वन्निजानुजप्राणभयोद्यतेन ।
कबन्धभूतेन परिश्रमार्तः केनापि भूतेन स संगतोऽभूत् ॥ ४६ ॥

स रामः केनापि भूतेन निशाचरेण कबन्धरूपेण शिरोहीनत्वात् पीडितः सन् संगतो बभूव । तस्याः सीतायाः पदवीं मार्गं विचिन्वन् जिज्ञासमानः । निजानुजो लक्ष्मणस्तस्य प्राणभये प्राणापहरणे उद्यतेन कृतोद्यमेन । 'निजं स्वीये च नित्ये च' इति मेदिनीकरः ॥ पक्षे—स युधिष्ठिरः केनापि भूतेन प्राणिना संगतो बभूव । किंभूतेन । के जले बन्धभूतेन प्रतिबन्धकेन । 'ब्रह्मशीर्षजलेषु कम्' इति मेदिनीकरः । निजे आवश्यके अनुजानां भीमादीनां प्राणभये उद्यतेनेति । अस्या (हरिणरूपधर्मस्य) वने पदवीं विचिन्वन्नत एव परिश्रमार्तः ॥

स तेन पूर्वं कृतविग्रहोऽपि तद्व्याहृतार्थप्रतिवाक्यदानैः ।
भृशं धिनोति स्म मनस्तदीयं न याति को नाम वशं गुणानाम् ४७

स कबन्धस्तदीयं रामसंबन्धि मनश्चित्तं भृशमत्यर्थं धिनोति स्म अप्रीणयत् । तेन रामेण उक्ताभिधेयस्य प्रतिवाक्यदानैः प्रत्युत्तरदानैः । 'अर्थो विषयानुनयोर्धनकारणवस्तुषु। अभिधेये च शब्दानां निवृत्तौ च प्रयोजने॥' इति विश्वः । हेतुमाह—को नामेति । गुणानां वशमायत्तं को नाम न याति । अपि तु सर्व एव ॥ पक्षे—स युधिष्ठिरः तस्य धर्मस्य तदुक्तार्थस्य प्रत्युत्तरदानैः । 'चतुर्थेऽह्नि पञ्चमे वा शाकं पचति स्वे गृहे । अनृणी चाप्रवासी च स वारिचर मोदते ॥' इति प्रश्ने प्रतिवाक्यम् ॥

ततो वधाविष्कृतदिव्यदेहाद्धितोपदेशं[1] प्रतिपद्य धर्मतः ।
निजानुजापत्प्रतिमोक्षणादसौ विपत्पयोधिं मनुते स्म गोष्पदम् ॥ ४८ ॥

असौ रामो विपदेव पयोधिः विपत्पयोधिः तं गोष्पदप्रमाणमवगाहनीयं मनुते स्म अमन्यत । कुतः । निजस्यानुजस्यापदो विपत्तेः प्रतिमोक्षणात्प्रतिमोचनात् । किं कृत्वा । तस्मात्कबन्धाद्धर्मतो धर्मेण हितोपदेशं सुग्रीवसाध्यरूपमुपदेशं प्रतिपद्य प्राप्य । किंभूतात्कबन्धात् । वधेनाविष्कृतो दिव्यदेहो यस्य स तथा ॥ पक्षे—धर्माद्धितोपदेशं प्रतिपद्य निजानुजो भीमादिस्तस्य विपत्प्रतिमोक्षणात् विपत्पयोधिं मनुते स्मेति ॥

---

१. 'देहतो हितो' कलि०.

ततः समुद्दीपितमत्स्यमण्डलं समुन्नमत्कीचकवंशदुर्गमम् ।
परैरचिन्त्याचरितं समुच्चलन्नराधिपम्पावनमाससाद सः ॥ ४९ ॥

स रामः पम्पा सरोविशेषस्तस्य वनमाससाद तत्समीपमाजगाम । कीदृशः । समुत् सहर्षः । कबन्धोपदेशात् । किंभूतं तत् । चलन्नुपगच्छन्नराणामाधिर्मानसी व्यथा यत्र । अतो व्याधिर्नश्यतीत्यवस्थाहेतुः । समुद्दीपितं प्रकाशितं मत्स्यमण्डलं येन तत् । समुन्नमन्नुन्नतीभूतः कीचकः सच्छिद्रो वंशो यत्र तेन वंशेन दुर्गमं दुःसंचरम् । पुनः किंभूतम् । परैरन्यैरचिन्त्यमनाकलनीयमाचरितमाचरणं यस्य ॥ पक्षे—स युधिष्ठिरः नराधिपं राजानं विराटमाससाद । गुप्तवासार्थं विराटनगरं गत इत्यर्थः । पावनं पवित्रम् । समुद्दीपितं मत्स्याभिधानं मण्डलं देशो येन । समुन्नमन्नम्रीभवन्कीचकवंशो राजविशेषान्वयस्तेन दुर्गममनाकलनीयं शत्रुभिः । अत एव परैरचिन्त्याचरितं रक्षणात् । 'अचिन्त्याचरितः' इति पाठे सविशेषणम् ॥

मातङ्गतेजःक्षयितारिशक्तौ स वानरेन्द्रं विषये वसन्तम् ।
समीरपुत्रेण कृतानुकूल्यः संप्राप राजाविदितः सखायम् ॥ ५० ॥

स राजा रामो वानरेन्द्रं सुग्रीवं सखायं मित्रं प्राप प्राप्तवान् । वित् ज्ञानं तेन इतः विदितः ज्ञानवान् । ख्यातो वा । पुनः कीदृशः । समीरणस्य वायोः पुत्रेण हनूमता कृतानुकूल्यः कृतमानुकूल्यं यस्य सः । सुग्रीवसमीपं प्रतिनयनात् । कथंभूतं तम् । विषये देशे वसन्तं कृतावस्थानम् । किंभूते विषये । मतङ्गमुनेरपत्यं मातङ्गस्तस्य तेजसा क्षयिता क्षयं नीता अरेः शत्रोर्वालिनः शक्तिर्यत्र तस्मिन् ॥ पक्षे—स युधिष्ठिरः नरेन्द्रं राजानं सखायं वा मित्रं प्राप । 'वा विकल्पोपमयोः' इति मेदिनीकरः । समीरपुत्रो भीमसेनः तेन विदितो ज्ञातः । गुप्तशरीरेण यः मातङ्गो हस्ती तस्य तेजसा शौर्येण । शेषं तुल्यम् ॥

सोऽक्षरन्धनसंगीतहरिगोत्रावलम्बनैः ।
तत्कर्मभिः स्वं कृतिनं विभावस्वन्वयोऽस्मरत् ॥ ५१ ॥

सुग्रीवो विभावस्वन्वयो दिवाकरपुत्रः तस्य रामस्य कर्मभिर्व्यापारैः स्वमात्मानं कृतिनं कुशलमस्मरत् स्मृतवान् । धनसङ्गी धनवान् प्राप्तराज्यत्वात् । किंभूतम् । अक्षरं अस्थिरम् । तत्कर्मभिरित्यनुषज्यते । किंभूतैः । इतः अर्थाद्राज्येन संगतः । एवं[भूतो] यो हरिः सुग्रीवः तस्य गोत्राणां वानराणामवलम्बनं येभ्यस्तैः ॥ पक्षे—स विभावसोरन्वयः सूर्यवंशीयो विराटः । तेषां युधिष्ठिरादीनां कर्मभिः । अक्षस्य पाशकस्य, रन्धनस्य, संगीतस्य नृत्यशालायाः, हरेरश्वस्य, गोत्राया गोसमूहस्यावलम्बनं येषु तैः । 'गोसमूहो भवेद्गोत्रा' इति विश्वः ॥

स व्यञ्जयन्नात्मभुजस्य तेजः संहृष्टविद्विड्बललोपिमल्लान् ।
रणेषु भीमो रघुवीरवर्यस्तालान्वने वायुरिवोन्ममाथ ॥ ५२ ॥

स रघुवीरवर्यो रामः रणेषु संग्रामेषु भीमो भयानकः वने तान् वृक्षानुन्ममाथ उन्मथितवान् । वायुरिव । यथा वायुर्द्रुमान्मथ्नाति तद्वदात्मनो भुजस्य सामर्थ्यं व्यञ्जयन् । अर्थात्सुग्रीवस्याग्रे प्रकाशयन् । कीदृशं तेजः । संहृष्टानां संहर्षशालिनां विद्विषां शत्रूणां बलं लोतुं शीलं यस्य तत्तथा । 'मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि' । 'तालः पादपमात्रे स्यादकारे (?) सर्जपादपे' इति मेदिनीकरः ॥ पक्षे—स भीमो मल्लानुन्ममाथ । रघुवीरवद्वर्यः श्रेष्ठः वने । तालान्वायुरिव ॥

दारोपरोधेन कृतापराधं रणोद्यतं भ्रातृजनेन सार्धम् ।
मूर्छद्यशोदुन्दुभिशत्रुमेनं सकीचकं दावमिव व्यमथ्नात् ॥ ९३ ॥

स रामो दुन्दुभिशत्रुं वालिनमेनं व्यमथ्नात् ममाथ । दुन्दुभिर्भीमः कश्चिद्दानव इति । मूर्छद्यश इति क्रियाविशेषणम् । 'मूर्छा मोहसमुच्छ्राययोः' इति । दारा अर्थात्सुग्रीवस्य उपरोधेनाधिकावरोधेन कृतापराधमिति वालिविशेषणम् । अत एव भ्रातृजनेन सुग्रीवेण साकं सह रणायोद्यतं युद्धं कुर्वाणं सकीचकदावमिव । यथा वंशविशेषसहितं दावं वनं कश्चिन्मथ्नातीति । 'वने च वनवह्नौ च दावो दाव इति स्मृतः' इति विश्वः ॥ भारतपक्षे—स भीमः एनं कीचकं विराटश्यालकं भ्रातृसमूहसहितममथ्नात् । मूर्छद्यशोदुन्दुभीति क्रियाविशेषणम् । एकमेव पदं यशःपटह इति । द्रौपद्या अवरोधेन कृतापराधं रणायोद्यतं रात्रावित्यर्थात् ॥

भावान्तरं प्राप्य सुरेन्द्रसूनौ स्वस्थानमासेदुषि वीरवर्ये ।
राजानमुज्जृम्भितमत्स्यकेतुं सुग्रीवमृद्धाङ्गदमाप लक्ष्मीः ॥ ९४ ॥

लक्ष्मीः राज्यलक्ष्मीः सुग्रीवं नाम वानरं राजानं प्राप । किंभूतः । ऋद्धः समुपचितः अङ्गदो यस्य तम् अर्थात् युवराजत्वेन उज्जृम्भितो विकासितः पुष्पकेतुः कामो यस्य तं प्राप्तराज्यसुखत्वात् । कस्मिन् सति । सुरेन्द्रसूनौ वालिनि वीरवर्ये वीरश्रेष्ठे भावान्तरं प्राप्य स्वःस्थानं परलोकमासेदुषि सति । 'स्वरव्ययं स्वर्गनाक-' इत्यमरः ॥ पक्षे—लक्ष्मीः जयलक्ष्मीः द्रौपदी वा शोभा वा राजानं युधिष्ठिरं सुग्रीवं शोभनग्रीवम् ऋद्धाङ्गदमुपचितभुजालंकारविशेषम् । 'अङ्गदः कपिभेदे स्यात्केयूरे भूषणेऽङ्गदम्' इति विश्वः । सुरेन्द्रसूनावर्जुने भावान्तरं बृहन्नडावेशान्तरं प्राप्य स्वस्थानं रङ्गशालायां गतवति सति ॥

महीभृतो माल्यवतस्तदा तं बृहन्नलाढ्ये कटके वसन्तम् ।
परप्रणीता स्वकलत्रपीडा कं कं न सालम्भयदार्तियोगम् ॥ ९५ ॥

परेण प्रणीता स्वकलत्रस्य पीडा व्यथा तं रामं कं कमार्तियोगं पीडायोगं नालम्भयत् । अपि तु सर्वमेवार्तियोगमलम्भयत् । लभेर्गत्यर्थत्वविवक्षया द्विकर्मकत्वम् । किंभूतम् । महीभृतः पर्वतस्य माल्यवन्नामकस्य कटके सानौ वसन्तम् । बृहता नलेन तृणविशेषेणाढ्ये ॥ पक्षे—माल्ययुक्तस्य महीभृतो राज्ञो विराटस्य कटके नगरे वसन्तं कङ्का-

ह्मणरूपिणं युधिष्ठिरं परेण शत्रुणा कीचकेन प्रणीता स्वकलत्रस्य द्रौपद्याः पीडा आर्तियोगं पीडायोगं न नालम्भयत्। अपि त्वलम्भयदेव। बृहन्नडारूपेणार्जुनेनाढ्ये युक्ते। 'कटकं वलये सानौ राजधानीनितम्बयोः' इति विश्वः॥

अथ घननिकुरम्बैरम्बुसंभारलम्बैः
स्थगितगगनगर्भा विद्युदुद्द्योतहृद्या।
नृपकुलजययात्राकेलिदीर्घान्तराया
पथिकमिथुनमृत्युः प्रावृडुज्जृम्भते स्म॥ ९६॥

अथेत्यनन्तरं प्रावृड् वर्षाकालः उज्जृम्भते स्म। विकासमाजगाम। तं विशिनष्टि—घननिकुरम्बैः मेघसमूहैः अम्बुसंभारेण जलसमूहेन लम्बैः स्थगितः पिहितो गगनस्य गर्भो यया सा। विद्युतः सौदामन्याः उद्द्योतेन हृद्या मनोहरा। नृपकुलं राजसमूहः तज्जयार्थं या यात्रा प्रयाणं तद्रूपा या केलिः क्रीडा तस्या अन्तरायो विघ्नम्। पथिकमिथुनस्य प्रवासस्थस्त्रीपुरुषस्य मृत्युरेव। 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः॥

शीकरक्षरणशीतमारुताश्चातकप्रकरकौतुकावहाः।
बभ्रमुः कृतवियोगिविभ्रमा वारिवाहनिवहा विहायसि॥ ९७॥

विहायस्याकाशे वारिवाहनिकरा मेघसमूहाः बभ्रमुः गतागतं चक्रुः। तान् विशिनष्टि—शीकरेति। शीकराणां क्षरणेन त्यागेन शीतो हिमो मारुतो येषां ते। चातकसमूहस्य कौतुकमावहन्ति ये ते। कृतो विरहिणो दिनादिविभ्रमो यैस्ते॥

द्राक्तडित्कनककोणताडितैर्दध्वने घनघटामहानकैः।
ताण्डवं तदनुवृत्तिपेशलं मण्डलेन विदधे शिखण्डिनाम्॥ ९८॥

घनानां मेघानां घटाः समूहास्त एव महानकाः पटहास्तैः दध्वने ध्वनितम्। तडिदेव कनकविकारः कोणो वीणादिवादनं तैस्ताडितैरिव। शिखण्डिनां मयूराणां मण्डलेन ताण्डवं नृत्यं विदधे विहितम्। तदनुवृत्त्या मेघावर्तनेन पेशलं कोमलं यथा स्यादेवमिति॥

याचितेन बहुचातकद्विजैरम्बुदेन जलदानपूर्वके।
हेममुष्टिरिव दूरमीरिता संचचार रुचिराचिरप्रभा॥ ९९॥

रुचिरा मनोज्ञाचिरप्रभा विद्युत् संचचार संचरति स्म। केव। अम्बुदेन मेघेन जलदानपूर्वं प्रथमं वर्षणं कृत्वा दूरमीरिता प्रेरिता हेममुष्टिरिव। कीदृशेन। बहुभिश्चातकैर्द्विजैरिव। चातकनामभिर्द्विजैः पक्षिभिर्वा याचितेन प्रार्थितेन। अन्येनापि द्विजैर्याचितेन जलदानपूर्वकं सुवर्णमुष्टिः क्षिप्यते इति॥

प्रावृषा जलदपङ्क्तिबाहुना चण्डधाम्नि विहितोपगूहने।
केलिभिन्नमिव रत्नकङ्कणं खण्डमिन्द्रधनुषः स शोभते॥ ६०॥

इन्द्रधनुषः खण्डं शोभते स्म । अर्थाद्रमते । किमिव । केलिभिन्नं संभोगादिक्रीडाविदारितं रत्नकङ्कणमिवेति । कस्मिन् सति । चण्डधाम्नि सूर्ये नायके प्रावृषा वर्षाकालेन नायिकया विहितोपगूहने कृताच्छादने दत्तालिङ्गने वा । जलदपङ्क्तिरेव बाहुर्यस्येति । बाहुनालिङ्गने सति क्रीडया रत्नकङ्कणभङ्गो जायते ॥

केकिनां कलितकेकमुच्चकैर्बर्हभारमवतत्य नृत्यताम् ।
चन्द्रकैर्विचकसेऽभ्रमण्डलं द्रष्टुमक्षिनिकरैरिवाच्छकैः ॥ ६१ ॥

केकिनां मयूराणां चन्द्रकैर्विचकसे विकसितम् । उच्चकैरत्यर्थं बर्हभारं पुच्छसमूहमवतत्य विस्तार्य कलितकेकं कृतशब्दं यथा स्यादेवं नृत्यतां नृत्यं कुर्वताम् । किंभूतैश्चन्द्रकैः । अभ्रमण्डलं मेघसमूहं द्रष्टुमच्छकैः स्वच्छैः अक्षिनिवहैरिव । 'ऊर्ध्वकैः' इति पाठान्तरे ऊर्ध्वीकृतैरित्यर्थः ॥

व्योम्नि खेलदचिरांशुनर्तकीहारयष्टिनिभयाम्बुधारया ।
पर्यगालि निपतद्घनोपलव्याजनायकमणिप्रकीर्णया ॥ ६२ ॥

व्योम्न्याकाशेऽम्बुनो जलस्य धारया पर्यगालि परिगलितम् । किंभूतया । खेलन्ती अचिरांशुर्विद्युदेव नर्तकी तस्या हारयष्टेर्निभया तुल्यया । निपतन् घनोपलव्याजो जलधरपाषाणसदृशो नायकमणिर्हारमध्यमणिस्तस्मात्कीर्णया क्षिप्तया तेन प्रकीर्णया व्याप्तयेति वा । 'निभस्तु कथितो व्याजे पुंलिङ्गः सदृशस्त्रिषु' ॥

लोकमुन्मदयितुं प्रसाधिता चूर्णमुष्टिरिव मीनकेतुना ।
दिङ्मुखेषु नवनीपजं रजो वार्षिकेण मरुता विचिक्षिपे ॥ ६३ ॥

नवनीपपुष्पे जातमुत्पन्नं रजः परागो दिशां मुखेषु वर्षासु भवेन वार्षिकेण मरुता वायुना विचिक्षिपे विक्षिप्तम् । लोकमुन्मदयितुमुन्मदिष्टं कर्तुं मीनकेतुना कामेन विस्तारिता विक्षिप्ता चूर्णमुष्टिरिव ॥

स्पर्शसौख्यमनिलेन लम्भिताः कामिनेव वनराजयोषितः ।
उच्छ्वसन्नवकदम्बकेसरा रेजिरे सपुलकोद्गमा इव ॥ ६४ ॥

वनराजय एव योषितो नार्यो रेजिरे शुशुभिरे । किंभूताः । उच्छ्वसन्नवो नूतनः कदम्बस्य केसरो यासु ताः । अत एव पुलकोद्गमेन सहिताः । कामिनेव अनिलेन वायुना स्पर्शसौख्यं लम्भिताः प्रापिताः ॥

मारुतेन निजवाहनोचितं नूनमिन्दुहरिणं जिघृक्षता ।
आततैर्जलदवागुराशतैर्ऋक्षमण्डलमपि न्यरुध्यत ॥ ६५ ॥

मारुतेन वातेन ऋक्षमण्डलमपि नक्षत्रमण्डलं न्यरुध्यत रुद्धम् । पिहितमिति यावत् । कैः । जलदवागुराशतैः मेघ एव मृगबन्धनी तच्छतैरित्यर्थः । आततैर्विस्तृतैः । नूनं

निश्चितम् उत्प्रेक्षायां वा निजवाहनोचितं निजवाहनस्योचितं योग्यं चन्द्रस्य गर्भस्थं हरिणं जिघृक्षता ग्रहीतुमिच्छता । एवं हरिणजिघृक्षया नक्षत्राण्यपि पिहितानीत्यर्थः ॥

शाद्वलेषु निचिताः परिस्फुरद्वारिबिन्दुषु सुरेन्द्रगोपकाः ।
मौक्तिकव्यतिकरातिसुन्दरैः पद्मरागमणिभिः समं बभुः ॥ ६६ ॥

शाद्वलेषु नवतृणेषु निचिता वर्तुलीकृताः सुरेन्द्रगोपका इन्द्रगोपकाः । 'गण्डगोपकाः' इति प्रसिद्धः । मौक्तिकस्य प्रशस्तस्य मुक्तासमूहस्य व्यतिकरेण संबन्धेनात्यर्थसुन्दरैः पद्मरागमणिभिः समं तुल्यं तद्वदिव । 'साधं(र्वे) साधु समानेषु समं स्यादभिधेयवत्' इति मेदिनीकरः ॥

उत्तरीयमिव केतकावलिः केसरौघमनिले विधुन्वति ।
भृङ्गलोलसुमनोदलच्छलात्प्राहिणोदिव कटाक्षमायतम् ॥ ६७ ॥

केतकावलिः केतकपरम्परा नायिकेव आयतं दीर्घं कटाक्षमिव प्राहिणोत् प्रेषितवती । कस्मिन् सति । उत्तरीयमिव उपरिवासः सदृशं केसरौघं किंजल्कसमूहमनिले वायौ विधुन्वति सति विस्तारयति सति कम्पयति सति । कुत एव । भृङ्गेन उत्सङ्गेन वा लोलं चञ्चलं वा यत्सुमनोदलं पुष्पदलं तद्व्याजेन दलप्रान्ते सौरभाहृत एतत्सौरभभ्रमभ्रमरसंबन्धेन दलाग्रे चञ्चलता तद्वत्प्रेषितेनेति । अन्यस्या अपि उत्तरीयवस्त्रबलेन कटाक्षाक्षेपो भवतीति तत्सादृश्यम् ॥

चञ्चुचुम्बितमनोज्ञमालतीकुड्मलाः प्रतिपदं मधुव्रताः ।
दध्रिरे रजतसूचिकोटिभिः सीव्यमानहरिनीलविभ्रमम् ॥ ६८ ॥

मधुव्रता भ्रमराः रजतघटितायाः सूचिकायाः कोटिभिरग्रैः सीव्यमानस्य हरिनीलस्येन्द्रनीलस्य विभ्रमं विलासं दध्रिरे तद्वद्धृतवन्तः । प्रतिपदं पदे पदे । किंभूताः । चञ्चुना[1] कोट्या चुम्बित आस्वादितो मनोज्ञो मालत्याः पुष्पजातेः कुड्मलानि कलिका यैस्ते तथा ॥

अप्रकाशितनिशाकरानना मेघनीलवसनावगुण्ठिताः ।
रागिणां रजनयो वितेनिरे चित्ततोषमभिसारिका इव ॥ ६९ ॥

रजनयो रात्रयः रागिणां विषयिणां चित्तस्य तोषं वितेनिरे विस्तारितवत्यः । अभिसारिका इवेति । अप्रकाशितो निशाकरश्चन्द्रमा एवाननं मुखमुपक्रमो यस्याः सा ॥ पक्षे—अप्रकाशितमीषत्प्रकाशितं निशाकरमिवाननं यस्या इति । ईषदर्थे नञ् । मेघेन नीलवसनेन मेघवद्वा नीलवसनेनावगुण्ठितं पिधानं यस्याः । कृष्णपक्षाभिसारिकेव ॥

---

1. 'चञ्चुस्त्रोटिरुभे स्त्रियौ' इत्युक्तेश्चिन्त्यम्.

उच्छ्वसत्कुटजगुच्छपाण्डुरा भृङ्गसंगतशिलीन्ध्रबन्धुराः ।
कन्दलीदलसमुज्ज्वला बभुः प्रावृषेव ककुभः प्रसाधिताः ॥ ७० ॥

ककुभो दिशः बभुः शुशुभुः । प्रावृषा वर्षया प्रसाधिता अलंकृता इव । किंभूताः । उच्छ्वसता विकसता कुटजगुच्छेन मालया स्तवकेन पाण्डुराः श्वेतरूपाः । भृङ्गसंगतेन शिलीन्ध्रेण बन्धुरा मनोज्ञाः । कन्दल्याः दलेन समुज्ज्वलाः सुन्दराः । 'शिलीन्ध्रं कदलीपुष्पे करके च मषान्तरे' इति विश्वः ॥

ततस्तडिच्चञ्चलसंपदस्ते वियोगिरामाशयदत्तशोकाः ।
दशाविशेषा इव शात्रवाणां क्रमेण वर्षादिवसाः प्रशेमुः ॥ ७१ ॥

तत इत्यनन्तरं ते तादृशा वर्षादिवसाः प्रशेमुः प्रशान्ताः । गता इत्यर्थः । शात्रवाणां दशाविशेषा इव । तत्तुल्या इत्यर्थः । अपगमनेन साम्यम् । किंभूताः । तडितां विद्युतां चञ्चला संपद्यत्र । तडिदिव चञ्चला संपत्समृद्धिर्यत्र । वियोगिनी पतिविश्लिष्टा या रामा स्त्री तस्या आशये दत्तः शोको यैरिति । तुल्यमुभयत्र । वर्षाकालो गतः शरदृतुरागत इत्यभिप्रायः । सहोपमा । दशाविशेषाः समृद्धत्वादय इति ॥

अथोडुमालोज्ज्वलतारहारा ज्योत्स्नास्मितोल्लासिशशाङ्कवक्त्रा ।
उदूढफुल्लाम्बुरुहा शरच्छ्रीः प्रावृट्पयोधेरुदियाय रम्या ॥ ७२ ॥

अथेत्यनन्तरं शरदः ऋतुविशेषस्य श्रीः संपत् उदियाय उद्गता । कुतः । प्रावृडेव पयोधिस्तस्मादुद्गता बभूव । अन्यापि लक्ष्मीः समुद्रादुद्गता उडुमालैव नक्षत्रमालैवोज्ज्वलो हारो यस्या इति । 'तारका उडवोऽस्त्रियाम्' इत्यमरः । 'तारो वानरभिन्मुक्ताविशुद्ध्योः शुद्धमौक्तिके । ना नक्षत्रेऽक्षिमध्ये च न ना रूप्ये नपुंसकम्' इति विश्वसारे । ज्योत्स्नैव चन्द्रिकैव स्मितमीषद्धास्यं तदुल्लासी यः शशाङ्कः स एव वक्त्रमाननं यस्याः सा । पक्षे—ज्योत्स्नेव यत्स्मितं तदुल्लासि शशाङ्कं वक्त्रं यस्याः सा । उदूढं धृतं फुल्लं विकसितमम्बुरुहं पद्मं यया सा । पक्षे—उदूढं हस्तेनेत्यर्थात् । पद्महस्तेत्यर्थः ॥

पद्मेषु हंसानसनेषु भृङ्गान्मनःसु रागं मृगलोचनानाम् ।
प्रायुङ्क्त पाथःसु च संप्रसादं स्थानेष्वनेकेषु गुणान्घनान्तः ॥ ७३ ॥

घनान्तः शरत् संप्रतीदानीमनेकेषु स्थानेषु गुणान् प्रायुङ्क्त प्रयुक्तवान् । तेषां प्रत्येकमाह—पद्मेषु सरसिजेषु हंसान् राजहंसान् । असनेषु वृक्षविशेषेषु भृङ्गान् भ्रमरान् । तत्काले पुष्पितत्वात्तत्संबन्धः । मृगलोचनानामङ्गनानां मनःसु रागम् । पाथःसु जलेषु सम्यक्प्रसादं प्रसन्नताम् ॥

कुबेरगुप्तात्सरसं सरस्तः सरोजरेणूत्करगौरपक्षाः ।
गताम्बुवाहं गगनान्तरालं जगाहिरे राजमरालमालाः ॥ ७४ ॥

राजमरालानां राजहंसानां माला: पङ्क्तय: गगनस्यान्तरालं मध्यं जगाहिरे गाहितवत्य:। किंभूतम्। गता अम्बुवाहा यस्मात् यत्र वा मुक्तमेघत्वात्। कुबरगुप्ताद्रक्षितात्सरसं यथा स्यादेवं सरस्त: सरोवरात्। सरोजानां रेणूत्करेण रज:समूहेन गौरा: पक्षा येषां ते ॥

निरस्य धाराधरशैवलौघं सलीलमालम्बितरश्मिसूत्रम्।
भूषामणिं भ्रष्टमिवार्कबिम्बं प्रावृड्सरस्त: शरदुज्जहार ॥ ७५ ॥

शरत् ऋतुविशेष: अर्कस्य बिम्बं मण्डलं प्रावृडेव सरो वर्षासरस्तस्मादुज्जहार उद्धृतवती धाराधरशैवलौघस्तं निरस्य क्षिप्त्वा सलीलं यथा स्यादेवमालम्बितं रश्मिरेव सूत्रं येन तम्। भ्रष्टं च्युतमर्थाज्जले भूषामणिमिवालंकारमणिमिव। यथा कश्चिच्छैवलमुत्सार्य अलंकारमुद्धरति ॥

प्रबोधभाज: परमस्य पुंसो विलोचने द्वे किल मुक्तनिद्रे।
व्यपेतपाथोधरपक्ष्मरोधं व्यराजतां व्योमनि पुष्पवन्तौ ॥ ७६ ॥

व्योम्न्याकाशे पुष्पवन्तौ सूर्याचन्द्रमसौ व्यराजतां शुशुभाते। 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमर:। किलोत्प्रेक्षायाम्। प्रबोधं भजते प्रबोधभाक् तस्य प्रबुद्धस्य परमस्य पुंसो नारायणस्य त्यक्तनिद्रे द्वे विलोचने चक्षुषी सूर्याचन्द्रविलोचनत्वात् तस्य व्यपेतोऽपगत: पाथोधरो मेघ: स एव पक्ष्म तस्य रोधोऽवरोधो यत्रेति क्रियाविशेषणम्। पाथो जलमुदरे यस्य स: ॥

मौनं मयूरीषु नदीषु कार्श्यं विपाण्डुरत्वं च बलाहकेषु।
शरद्यभीष्टागमनिर्वृताभिर्न्यासीकृतानीव वियोगिनीभि: ॥ ७७ ॥

शरदि ऋतुविशेषे वियोगिनीभिर्विरहिणीभि: एतानि वस्तूनि एषु स्थानेषु न्यासीकृतानीव। कुत्र कानीत्याह—मयूरस्य स्त्री मयूरी तासु मौनमाभाषणम्, नदीषु कार्श्यं कृशत्वम्, बलाहके मेघविशेषे पाण्डुरत्वम्। 'बलाकिनीषु' इति पाठे बलाकिनीषु मेघमालासु। किंभूताभि:। अभीष्टस्य वल्लभस्य आगमनेन निर्वृताभि: शरदि मौनं त्यक्तम्। मयूरीभिर्गृहीतमेव स्वाभाविकं मौनादि तेषामुत्प्रेक्षितमिति ॥

आसाद्य वर्षारजनीविरामं प्रबोधहेतोर्मकरध्वजस्य।
पठद्भिरुच्चैरिव मङ्गलानि कुलै: शुकानामुदकूजि हृद्यम् ॥ ७८ ॥

शुकानां कीराणां कुलै: समूहै: हृद्यं यथा स्यादेवमुदकूजि शब्दितम्। मकरध्वजस्य कामस्य प्रबोधहेतो: जागरणार्थमुच्चैर्मङ्गलानि पठद्भिरिव। वर्षाकाल एव रजनी तस्या विराममवसानमासाद्य प्राप्य। 'स्वजातीयगणे कुलम्' इति विश्व: ॥

विशीर्णसंक्रन्दनचापलेशच्छवीनि कीर्णानि वनस्थलीषु।
सलीलमादाय मयूरबर्हाण्युत्तंसयन्तीव किरातनार्य: ॥ ७९ ॥

किरातानां नार्यः स्त्रियो मयूराणां बर्हाणि पिच्छानि आदाय गृहीत्वा उत्तंसयन्ति स्म । किंभूतानि । वनस्थलीषु कीर्णानि क्षिप्तानि । विशीर्णो यः संक्रन्दनस्य शक्रस्य चापो धनुः तल्लेशवच्छवीनि तत्सदृशानि । 'संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः' इत्यमरः । 'छविः शोभा रुचिर्योषित्' इति मेदिनीकरः । सलीलमिति क्रियाविशेषणम् ॥

पयोदकालेन समुद्रगानां कालुष्यमुत्पाद्य समुज्झितानाम् ।
नवा नखाङ्का इव रेजुरुक्ष्णां शृङ्गाग्ररेखास्तटसीम्नि लग्नाः ॥ ८१ ॥

समुद्रगानां नदीनां तटसीम्नि लग्नाः संबद्धाः उक्षाणो वृषभास्तेषां शृङ्गाग्रलेखा विरेजुः शुशुभुः । यथाङ्गनानां स्तनतटे नवा नूतना नखाङ्काः शोभन्ते तद्वत् । किंभूतानाम् । पयोदकालेन प्रावृषा कालुष्यं मालिन्यमुत्पाद्य समुज्झितानां त्यक्तानाम् । अव्यवहितेन वर्षाकाल(लेन) जनितत्वात् नूतनत्वमिति । अन्यासामपि नायिकानां नायकेनोपभुक्तानां नवा नखाङ्कुराः शोभन्ते ॥

समुद्रपानोत्थितवक्त्रजाड्यनिवृत्तये कुम्भभवेन सद्यः ।
उद्गच्छता पीतजला इवाच्छाः पत्यः पयोधेः कृशतामुदूहुः ॥८२॥

पयोधेः समुद्रस्य पत्न्यः सरितः कृशतां तनुतामुदूहुः । कुम्भभवेनागस्त्येन सद्यः पीतजला इवोत्प्रेक्षा । किंभूतेन । उद्गच्छता ऊर्ध्वं गच्छता तेन । समुद्रस्य पानेनोत्थितं यद्वक्त्रजाड्यं तन्निवृत्त्यर्थमच्छा निर्मलाः ॥

व्यपेतनृत्याः परिमन्दनादा निरस्तबर्हाः शिखिनो न रेजुः ।
लयं गते लास्यगुरौ पयोदे तत्कालदीक्षामिव धारयन्तः ॥ ८३ ॥

शिखिनो मयूराः न रेजुः न शुशुभुः । अत्र हेतुः—व्यपेतमपगतं नृत्यं नर्तनं येषां ते। परिमन्दः स्वल्पीभूतो नादो येषां ते । निरस्तमपगतं बर्हं येषां ते । शरदि तेषां मयूराणां बर्हाणि शीर्णानि भवन्तीति प्रसिद्धम् । अत्रोत्प्रेक्षामाह—लास्यस्य नृत्यस्य गुरावुपदेष्टरि पयोदे मेघे लयं विलीनत्वं गते सति । तत्कालस्य दीक्षां गुरुविनाशकथितां दीक्षां धारयन्तः ॥

विनिद्रनीलोत्पललोचनानि प्रबुद्धबन्धूकललामभाञ्जि ।
मुखानि रम्याणि दिगङ्गनानां भान्ति स्म हासैरिव हंसयूथैः ॥८४॥

हंसानां यूथैः समूहैः हेतुभिर्दिशां मुखानि भान्ति स्म शोभन्ते स्म । यथा हासैः अङ्गनानां मुखानि शोभन्ते । 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि' इति मेदिनीकरः । उभयं विशिनष्टि—विनिद्रं विकसितं यन्नीलोत्पलं तद्वल्लोचने येषु तानि । प्रबुद्धं प्रफुल्लं यद्बन्धूकं तत्पुष्पं तदेव तद्वद्वा वर्तुलं यल्ललाम चिह्नं तद्भाञ्जि तद्युक्तानि । 'ललाम च ललामं च लाञ्छनध्वजराजिषु' इति शाश्वतः ॥

निशा निशीथिनीकान्तकान्तिसंततिसंतताः।
विरेजुः कामदेवस्य यशोभिरिव शोभिताः॥ ८९॥

निशा रजन्यो विरेजुः बभुः। शरदीति शेषः। किंभूताः। निशीथिन्याः रजन्याः कान्तस्य चन्द्रस्य कान्तिसंतत्या ज्योत्स्नापरम्परया सम्यक् तता व्याप्ताः कामदेवस्य कन्दर्पस्य वा एतत्काव्यकर्तुर्नृपस्य यशोभिरिव शोभिताः।

इति शशिधरविरचिते राघवपाण्डवीयप्रकाशे पञ्चमः सर्गः।

---

षष्ठः सर्गः।

समग्रवैकर्तनशक्तिरग्रे प्रोद्यत्सुशर्माथ स धार्तराष्ट्रः।
तदा शरत्काल इवैत्य राज्ञो विनिष्पतज्जीवधनं रुरोध॥ १॥

तदा एत्यागत्य शरत्कालः राज्ञो रामस्य जीवधनं जीवमेव धनं रुरोध रुद्धवान्। किंभूतम्। विनिष्पतत् सीतावियोगजनितदुःखेन बहिर्भवितुमिच्छुः। प्रियाप्राप्त्यनुकूलप्रयाणयोग्यकाले सति प्राणधारणयोग्यसमुच्छ्वासो रामो बभूवेत्यर्थः। कीदृशः। समग्रा संपूर्णा वैकर्तनस्यादित्यस्य शक्तिः सामर्थ्यं यत्र। दुःसहतेजःशालित्वादिति। 'विकर्तनार्कमार्तण्ड—' इत्यमरः। सधार्तराष्ट्रो हंसविशेषसहितः॥ पक्षे—अथानन्तरं धार्तराष्ट्रो दुर्योधनः राज्ञो विराटस्य जीवरूपं धनं गोधनं रुरोध। अग्रे प्रथमतः प्रोद्यत्सुशर्मा यस्य। दक्षिणदिगवस्थितगोग्रहणाय प्रथमं तेन सुशर्मा नियुक्तः इति भारतम्। विकर्तनस्यापत्यं वैकर्तनः कर्णः तस्य समग्रा शक्तिर्यत्रेति। 'प्रभावोत्साहमन्त्रजा' इति। 'असितास्यपदे हंसे धार्तराष्ट्रश्च कौरवे' इति विश्वः। 'जीवेऽस्त्री जीविते हंसो जन्तौ जीवो गुरावपि' इति विश्वः। अत्र सामान्यवाचको जीवशब्दः गोरूपजीवविशेषपरः प्रकरणात् क्रियते॥

द्विषा तदा गोग्रहणे निबद्धे राज्ञा प्रतीकारपरेण नुन्नम्।
सद्यः प्रसर्पद्धरिसैन्यमुद्यद्गजप्रचारोज्ज्वलमुच्चचाल॥ २॥

तदा प्रसर्पद्धरिसैन्यं वानरसैन्यमुच्चचाल उच्चलितम्। तदा तत्कालमेव। किंभूतम्। उद्यतो गजस्य वानरस्य प्रचारस्तेनोज्ज्वलमुद्भटम्। राज्ञा सुग्रीवेण नुन्नं प्रेरितम्। सीतान्वेषणायेति शेषः। द्विषा शत्रुणा रावणेनागसोऽपराधस्य ग्रहणे निबद्ध इति। तदीयापराधे सति प्रतीकारपरेण। अथ रामस्य शत्रुजनितदुःखस्य प्रत्युद्धारकेण॥ पक्षे—तदा राज्ञा विराटेन नुन्नं प्रेरितं सैन्यमुच्चचाल। कीदृशं सैन्यम्। प्रसर्पन्तो गच्छन्तो हरयोऽश्वा यत्र तत्तथा। उद्यन् यो गजो हस्ती तस्य प्रचारेणोज्ज्वलं द्विषा दुर्योधनेन गोधने निबद्धे सति। प्रतीकारपरेण पाण्डवकृतपूर्ववैरस्येत्यर्थः॥

गतेषु सैन्येषु सुशर्महेतोः स्वलब्धचिह्नः सुनयोत्तरश्रीः।
हरेस्तनूजः प्रतिपन्नकालं नृपप्रियान्वेषणतत्परोऽभूत्॥ ३॥

हरेस्तनूजो हनूमान् नृपप्रियायाः रामदयितायाः सीतायाः अन्वेषणतत्परः अनुसंधानपरोऽभूत् बभूव। सैन्येषु वानरप्रधानेषु गतेषु सत्सु। शोभनं यच्छर्म कल्याणं तद्धेतोः। स्वेनात्मना लब्धं ज्ञानं चिह्नमन्वेषणस्य येन सः। तद्रूपचिह्नज्ञानवानिति। रामाभिज्ञानचिह्नवांश्चेति। सुनयोत्तरश्रीः शोभननयप्रधाना श्रीर्यस्य सः। प्रतिपन्नकालं स्वीकृतक्रियाकालं यथा स्यादेवम्॥ पक्षे—हरेरिन्द्रस्य तनूजोऽर्जुनः नृपस्य विराटस्य यत्प्रियं शत्रुगृहीतं गोधनं तस्यान्वेषणमनुसंधानं तत्समानयनरूपं तत्परोऽभूत्। द्वादशवर्षाणि वनवासः। त्रयोदशे गुप्तवासः इति यत्प्रतिपन्नं तत्संपूर्णमित्यवगतम्। सुशर्महेतोः दक्षिणस्यां सुशर्मणावरुद्धगवां प्रतीकारनिमित्तं सैन्येषु विराटसहितेषु गतेषु स्वस्य लब्धं चिह्नं वानरध्वजादि येन। सुनयस्योत्तरस्य विराटपुत्रस्य श्रीर्यत्र स तथा॥

समृद्धतेजाः स गृहीतहेतिः शमीं समासाद्य यथा कृशानुः।
नरेन्द्रसूनोरवधूय शङ्कां कुर्वन्प्रतस्थे विजयप्रतीतिम्॥ ४॥

स मारुतिः प्रतस्थे प्रयातः। नरेन्द्रसूनोः रामस्य शङ्कां त्रासमवधूय निराकृत्य विजयप्रतीतिं कुर्वन्। अवश्यं तस्य विजयो भविष्यतीति निश्चयं कुर्वन्नित्यर्थः। किंभूतः। समृद्धं तेजो बलं यस्य सः। गृहीतो हेतिरस्त्रं येन सः। शमीं वृक्षविशेषमासाद्य कृशानुरग्निरिव। शमीतरावग्निस्तिष्ठति इति प्रसिद्धिः। 'हेतिरस्त्रायुधे नले' इति विश्वः॥ पक्षे—सोऽर्जुनः प्रतस्थे। नरेन्द्रसूनोः विराटपुत्रस्योत्तरस्य शङ्कां भयमवधूय विजयप्रतीतिं कुर्वन्। शमीतरुं समासाद्य तत एव गृहीतहेतिः। पूर्वं गृहीतास्त्रसमूहः। कृशानुरिवाग्निरिव समृद्धतेजाः॥

गच्छन्विलङ्घ्य नगरोपवनान्तराणि
संपातिपत्त्ररथसूचितकार्यसिद्धिः।
धीरो ददर्श करिनक्रकरालमग्रे
घोषोद्धतं सलिलराशिमिवारिसैन्यम्॥ ५॥

धीरो हनूमान् अग्रे पुरस्तात् सलिलराशिं समुद्रं ददर्श अपश्यत्। अरिसैन्यमिव। किंभूतम्। करिणा नक्रेण करालं भयानकम्। जलजन्तुरूपेण। पक्षे करिणा गजेन करालम्। 'करालं दन्तुरे तुङ्गे भीषणे चाभिधेयवत्' इति विश्वः। घोषेण शब्देनोद्धतम्। स कीदृशः। नगराणामुपवनानां चान्तरालान्यवकाशानि विलङ्घ्य गच्छन् श्रेष्ठदेशमिति। संपातिकेन पत्त्ररथेन पक्षिणा जटायुभ्रात्रा सूचिता कथिता कार्यसिद्धिर्यस्य सः। सीतान्वेषणरूपकार्यज्ञानवानित्यर्थः। रावणहृता लङ्कायां सीता, इत्युपदेशो वा। 'पतत्पत्त्ररथाण्डजाः' इत्यमरः॥ पक्षे—धीरो धैर्यवान् अर्जुनः अरिसैन्यं दुर्योधनबलं ददर्श सलिलराशिमिव। अनवगाहनीयत्वात्साम्यम्। सम्यक् पाति पतनशीलं पत्त्रं वाहनं यस्य एवंभूतो रथस्तेन सूचिता कार्यस्य विजयस्य सिद्धिः॥

पुरा समाक्रान्तमहेन्द्रभूभृत्स सिन्धुराजं गुरुभीष्मदुर्गम् ।
व्यलङ्घयत्तं मनसा समानप्रवृत्तिरभ्रान्तगतिः परौघम् ॥ ६ ॥

स मारुतिः हनूमान् सिन्धुराजं पयोधिं व्यलङ्घयत् लङ्घितवान् । स किंभूतः । मनसा तुल्या प्रवृत्तिर्गमनं यस्य सः । 'प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्तने' इति विश्वः । न भ्राम्ता चञ्चला विसंवादिनी वा गतिर्यस्य सः । तं किंभूतम् । परः श्रेष्ठः अतिशयवान्वा ओघो जलसमूहो यस्य स तथा । 'वृन्दे परम्परायां च ओघो वेगे जलस्य च' इति विश्वः । गुरु च महत् भीष्मं भयानकं दुर्गं चञ्चलं च । द्वन्द्वे विभाषैकत्वादेकवद्भावः । 'गुरु त्रिलिङ्ग्यां महति' इति विश्वः । गुरुत्वाद्भीष्मं ततो दुर्गमिति वा । स किंविशिष्टः । पुरा पूर्वं प्रथमतो वा समाक्रान्तो महेन्द्रभूभृन्महेन्द्रपर्वतो येन सः । तं पर्वतमारुह्य हनूमान् समुद्रलङ्घनायोत्फालः कृतः—इति रामायणे ॥ पक्षे—सोऽर्जुनः परौघं शत्रुसमूहं व्यलङ्घयत् । पूर्वं प्रथमतः समाक्रान्तो महेन्द्रो महेश्वरो भूभृद्दुर्योधनो येन सः । सिन्धुराजेन जयद्रथेन सहितं गुरुणा द्रोणेन भीष्मेण दुर्गमम् । अर्थाच्छत्रूणाम् । समानमन्यत् ॥

शैलेष्वसावस्खलितप्रवृत्तिर्गच्छन्नदीनोत्प्लवनप्रगल्भः ।
प्राप्योपकण्ठं परमण्डलस्य ददर्श संस्थानविशेषशोभाम् ॥ ७ ॥

स हनूमान् परमण्डलस्य परदेशस्योपकण्ठं समीपं प्राप्य संस्थानविशेषस्य सीतावस्थितदेशस्य लङ्कायाः शोभां ददर्श दृष्टवान् । 'स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च' इति विश्वः । किंभूतः । शैलेषु मैनाकादिषु न स्खलिता प्रवृत्तिर्गमनं यस्य सः । एवं वा गच्छन् सन् । नदीनामिनः ईश्वरः समुद्रः तस्योत्प्लवने प्रगल्भः समर्थः ॥ पक्षे—असावर्जुनः शत्रुमण्डलस्य समीपं प्राप्य संस्थानविशेषस्य तेषामवस्थितविशेषस्य व्यूहादिरचनायाः शोभां ददर्श । अदीनं प्रशस्तं समर्थं यदुत्प्लवनं गमनं तत्र प्रगल्भः तुल्यमितरत् ॥

परचक्रं परिक्रामन्नाशोकं गहनं गतः ।
क्षणादिव कृतार्थोऽभून्माहेयीदर्शनेन सः ॥ ८ ॥

स मारुतिः हनूमान् माहेयी सीता तस्या दर्शनेन कृतार्थः कृतप्रयोजनः अभूत् वृत्तः । सीतान्वेषणरूपस्य कार्यवृत्तत्वात् । मह्या इयं जाता माहेयी । महीशब्दात् 'स्त्रीभ्यो ढक्' । 'टिड्ढाणञ्—' इति ङीप् । 'शब्दानामभिधेयेऽपि निवृत्तौ च प्रयोजने । स्यादर्थः पुंसि विषये द्रव्यकारणवस्तुषु' इति विश्वः । परस्य चक्रं राष्ट्रं परिक्रामन् भ्रमन् । अशोकस्य गहनं वनं गतः । अशोकावनिकायां रावणेन सीता धृतेति ॥ पक्षे—सोऽर्जुनः माहेयीदर्शनेन परस्य शत्रोर्दुर्योधनस्य चक्रं सैन्यं परिक्रामन् मर्दयन् । अशोकस्य गहनं न गत इति । शेषं तुल्यम् । 'गहनं गह्वरे दुर्गे विपिने कलिले त्रिषु । राष्ट्रे चक्रा-

न्तरे चक्रे चक्रं सैन्यरथाङ्गयोः ॥' इति विश्वप्रकाशः । 'माहेयी गवि सीतायाम्' इति विश्वः ॥

दृष्ट्वैव तां भास्वरराजगोत्रां दीनामनाथां क्षितिरेणुकीर्णाम् ।
परोपरोधव्यसनातिभारादशोचयल्लङ्घितगोप्रचारः ॥ ९ ॥

लङ्घितो गवि भूमौ प्रचारः प्रचरणं येन सः हनूमान् तां सीतां दृष्ट्वैवाशोचयत् शोचति स्म । तां कीदृशीम् । भास्वरं दीप्तं राजगोत्रं राजकुलं यस्याः तां सीताम् । दुःखितामनाथामनीश्वरामर्थाद्भर्तृविश्लेषात् । भुवि लुण्ठनादिना रेणुभिर्धूलिभिः कीर्णां व्याप्ताम् । कुतः । परस्य शत्रोरुपरोधेन व्यसनं दुःखं तस्यातिभारादतिशयादिति । 'गोशब्दः पशुभूम्यक्षिवाग्रश्म्यर्थः प्रयुज्यते' इति शाश्वतः । 'नाम गोत्रं कुलं गोत्रं गोत्रस्तु धरणीधरः' ॥ पक्षे—तां गां परकर्तृकोपरोधव्यसनातिभारात् दृष्ट्वैवाशोचयत् । लङ्घितं गवां प्रचरणं येन सः । शेषं तुल्यम् ॥

तस्याश्च गोपालसमागमाशां संपाद्य संदर्शितराजचिह्नः ।
स व्यञ्जयामास हरेस्तनूजमात्मानमर्कात्मजशासनस्थम् ॥ १० ॥

स मारुतिः स्वात्मानं स्वं [हरेः] तनूजं वानरस्य पुत्रं व्यञ्जयामास प्रकाशितवान् । तस्याः सीतायाः कृते इति । अर्कात्मजस्य सुग्रीवस्य शासने आज्ञायां स्थितम् । संदर्शितं प्रकाशितमर्थात्सीतायाः राज्ञो रामस्य चिह्नमभिज्ञानं मुद्रिकारूपं येन स तथा । गोपालस्य भूमिपालस्य (रामस्य) समागमे तस्याः सीतायाः प्रत्याशां तां कृत्वा ॥ पक्षे—सोऽर्जुनः हरेरिन्द्रस्य तनूजं पुत्रमर्कात्मजस्य कर्णस्य शासने शास्त्यर्थे स्थितं सप्रतिज्ञम् । 'स्थित ऊर्ध्वे सप्रतिज्ञे गत्यभावे सुनिश्चले' इति विश्वः । 'शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिषु' इति च । तस्य गोपालस्य गोरक्षकस्य समागमाशां संपाद्य । राजचिह्नं छत्रमुकुटादि ॥

प्रयत्नवानुत्तरकार्यसिद्धये प्रदर्शयिष्यन्बहुशक्तिसंपदम् ।
सतालबाणासनकर्षणं द्विषां परिस्फुरत्केतुवनं बभञ्ज सः ॥ ११ ॥

स हनूमान् द्विषां शत्रूणां प्रमदावनं बभञ्ज । पुरोऽग्रे । अर्थात्सीतायाः । परिस्फुरन् केतुर्ध्वजो यत्र तत् क्रियाविशेषणम् । तालश्च बाणश्च असनं च तालबाणासनानि वृक्षविशेषाः तेषामाकर्षणं यत्र तद्वनविशेषणम् । स किंभूतः । उत्तरकार्यस्य सीतायाः रामस्य संनिगमनरूपस्य सिद्धये निर्वाहनार्थम् । बहुशक्तिसंपदं सुसामर्थ्यातिरेकसमृद्धिं प्रकाशयिष्यन् प्रकाशयितुं प्रयत्नवान् सप्रयत्नः । रावणवाटिकायाः प्रभञ्जनं कुर्वन्नित्यर्थः । मयैव रामोऽप्यानेतव्यः । स एव समुद्रे सेतुं बद्ध्वा रावणं व्यापाद्य त्वां नेष्यतीति भावः ॥ पक्षे—सोऽर्जुनः उत्तरस्य विराटपुत्रस्य कार्यं गोसमानयनरूपम् । द्विषां दुर्योधनादीनाम् । ध्वजवनं ध्वजसमूहं वनसदृशं बभञ्ज । पुरोऽग्रे स्फुरद्दीप्यत् सतालं

ध्वजरूपतालवृक्षसहितं बाणासनस्य धनुषः आकर्षणं यत्र यथा स्यादिति च । तुल्यमन्यत् ॥

संभ्रान्तद्रोणमुद्यच्छकुनिकलकलं विह्वलोलूकसार्थं
सद्यो विक्षिप्तगुल्मं क्षपितनृपतरुक्षुण्णपुंनागपूगम् ।
अद्धा नुन्नाश्वकर्णं प्रमथितविपुलश्रीफलं धूतधात्री-
चक्रं चक्रे स शोकास्पदमरिगहनं प्रागशोकाभिरामम् ॥ १२ ॥

स हनूमान् शत्रोः रावणस्य । गहनं प्रमदवाटिकां शोकास्पदं शोचनीयं चकार कृतवान् । किंभूतम् । प्राक् प्रथमतः लङ्कादाहाद्यपेक्षया अशोकाभिरामम् अशोकैर्वृक्षविशेषैः अभिरामं सुन्दरम् । यद्वृक्षमूले सीता आसीत् तस्यावरुग्णत्वात्तेनाभिराममिति वा । पुनः किंभूतम् । संभ्रान्ता उद्विग्ना द्रोणाः काका यत्र तत् । 'द्रोणः काके कृपीपतौ' इति विश्वः । उद्यन्नुद्गच्छन् शकुनीनां पक्षिणां कलकलो यत्र तत् । 'शकुनिः पुंसि विहगे सौबले कच्छपान्तरे' इति मेदिनीकरः । विह्वलो व्याकुल उलूकस्य सार्थः समूहो यत्र तत् । 'उलूकः पुंसि काकारावपि भारतयोद्धरि' इति विश्वसारः । विक्षिप्तो गुल्मो वृक्षस्तम्भो यत्र तत् । 'गुल्मः सेनाघटे स्तम्भे सैन्यरक्षणरुग्भिदोः' इति विश्वप्रकाशः । क्षयितः क्षयं नीतः नृपतरुरारग्वधो यत्र । क्षुण्णः खण्डितः पुंनागः प्रसिद्धो वृक्षविशेषः पूगः क्रमुकश्च यत्र । पुंनागानां पूगः समूहो यत्रेति वा । 'पूगः क्रमुकवृक्षयोः' इति विश्वः । 'आरग्वधो राजवृक्षः' इति च । अद्धा निश्चितम् । नुन्नस्ततस्ततः क्षिप्तः अश्वकर्णो वृक्षविशेषो यत्र । प्रमथितो विपुलः प्रचुरः श्रीफलो बिल्वो यत्र । धूतं कम्पितं धात्रीचक्रमामलीसमूहो यत्र । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इति विश्वः ॥ पक्षे—सोऽर्जुनः अरिगहनं गहनमिवारिमित्यर्थः । द्रोणः कलशसंभवः । शकुनिर्दुर्योधनमातुलः । उलूकः सौबलः शकुनिपुत्रः । गुल्मः सेनारक्षणम् । क्षयिता नृपतय एव तरवो यत्र । क्षुण्णः पुंनागस्य पुरुषश्रेष्ठस्य पूगो यत्र । अद्धा निश्चितं नुन्नाः प्रेरिता अश्वा येन एवंभूतः कर्णो राधेयो यत्र । प्रमथितं विपुलायाः श्रियो लक्ष्म्याः फलं यत्र । धूतं चालितं धात्रीचक्रं भूमिचक्रं येन । अशोकेन शोकरहितेनाभिरामम् । 'अशोकं त्रिषु निःशोके पुंसि कङ्केलिपादपे' इति मेदिनीकरः ॥

पराभवात्परि कुपितेन भूभृता प्रचोदिताः प्रचुरबला बलाधिपाः ।
समुद्ययुस्तमुपरितोरणस्थितं शरावलीविरचितदूरदुर्दिनाः ॥ १३ ॥

बलानां सैन्यानामधिपा ईश्वराः तं हनूमन्तं समुद्ययुः । तेन सह योद्धुमागता इति । किंभूताः । पराभवात् हनूमतो जनितात् वाटिकाभङ्गरूपात् । परि सर्वतोभावेन कुपितेन भूभृता रावणेन प्रचोदिताः प्रेरिताः । प्रचुराणि सैन्यानि येषां ते । कीदृशं तम् । उपरि तोरणे स्थितम् । शरावलीभिः शरपरम्पराभिर्विरचितं दूरमत्यर्थं दुर्दिनं यैस्ते ॥

पक्षे—तमर्जुनम् । उ संबोधने । परितः सर्वत्र रणे स्थितम् । 'उ संबोधनरोषोक्त्योः' इति मेदिनीकरः । भूभृता दुर्योधनेन । तुल्यमन्यत् ॥

उदायुधैर्व्यरुचदसौ पताकिभिर्विरोधिभिर्मृधभुवि कोष्ठकीकृतः ।
तडिच्छटाद्युतिजटिलैर्बलाहकैर्बलाकिभिर्वृत इव विन्ध्यभूधरः ॥ १४ ॥

असौ हनूमान् व्यरुचत् । असौ किंभूतः । उद्गतान्यायुधानि यैस्ते तैर्विरोधिभिः शत्रुभिः पताकिभिः पताकायुक्तैः मृधभुवि संग्रामभूमौ कोष्ठकीकृतः मण्डलीकृतोऽवरुद्धः वेष्टित इत्यर्थः । क इव । विन्ध्यभूधर इव । यथा विन्ध्यनामा भूधरः बलाकिभिर्बलाकायुक्तैः बलाहकैर्मेघैर्वृतो वेष्टितः शोभितः । 'बलाका बकपङ्क्ती स्याद्बलाका विषकण्ठिका । बलाकां कामुकीमाहुर्बलाकस्तु बको मतः ॥' इति शाश्वतः । तडिच्छटा विद्युच्छटा तस्या द्युतिभिर्जटिलैः । क्वचित् 'तदायुधैः' इति पाठः । तेषामायुधैरस्त्रैरित्यर्थः ॥ पक्षे—असावर्जुनः विरोधिभिर्दुर्योधनादिभिः । तुल्यमन्यत् ॥

परोज्झितानपि परमर्मभेदिनः स[1] पत्त्रिणस्तृणवदचिन्तयत्क्षणात् ।
व्यालोडयद्रणभुवि वैरिमण्डलं मदोत्कटो गज इव पल्वलं बली ॥ १५ ॥

स हनूमान् अर्जुनो वा वैरिमण्डलं शत्रुसमूहं व्यालोडयति स्म । परेण शत्रुणा राक्षसेन कौरवेण वा उज्झितान् त्यक्तान् । परस्य मर्मभेदिनोऽपि पतत्रिणो बाणान् तृणवत् तृणतुल्यान् निःसारानचिन्तयत् (मन्वानः) । रणभुवि संग्रामे । मदोत्कटो गज इव । यथा उत्थितमदो गजः पल्वलमल्पसरो विलोडयति तद्वत् । बलीत्युभयत्र समानम् ॥

निरन्तरशरव्राततिरोहितदिगन्तरः ।
ससैन्यपूरः परितः प्रापदक्षस्तमाहवे ॥ १६ ॥

आहवे समितौ तं हनूमन्तमक्षः रावणपुत्रः ससैन्यपूरः सैन्यसमूहसहितः प्रापत् प्राप्तवान् परितः सर्वत्र निरन्तरं क्षिप्तेन शरव्रातेन बाणसमूहेन तिरोहितं दिशामन्तरं येन सः ॥ पक्षे—यो भङ्गेन पलायितः सैन्यसमूहः स परावृत्तः सन् तमर्जुनमाहवे प्रापत् । अक्षः कुशलः ज्ञानवानित्यर्थः । 'अक्षो ज्ञानात्मशकटे व्यवहारेषु च पाशके' इति मेदिनीकरः । शेषं तुल्यम् ॥

विकलितरथवंशं मङ्क्षु भग्नाक्षभावा-
त्प्रमथितबलनाथं रुद्धभीष्मप्रभावम् ।
क्षपितकृपकृपाणं तत्तदाकर्णकृष्ट-
स्फुरितविपुलचापं स स्म सैन्यं धुनोति ॥ १७ ॥

---

१. 'पतत्रिणस्तृणवदधिचिन्तयन्क्षणात्' इति पाठे स इत्यध्याहार्यम्. चिन्तयन्मन्वान इत्यर्थः. २. प्रमादपतितम्.

स मारुतिः तत्सैन्यं रिपुसैन्यं तदा धुनोति स्म कम्पितवान् । विकलितो विपर्यस्तो रथवंशो यत्र भग्नाक्षभावात् भग्नाक्षत्वात् अक्षो रावणपुत्रः तस्य भङ्गादित्यर्थः । भग्नाक्षस्य रावणपुत्रस्य भावः प्रभाव इति वा । प्रमथितो बलनाथो यूथपो यत्र तत् । रुद्धो भीष्मो भयंकरः प्रभावो यत्र तत् । क्षयिता दूरीकृता कृपा यत्र एवं निर्दयः । कृपाणो नाम खड्गो यत्र तत् । आकर्णं कर्णपर्यन्तं कृष्टमाकर्णकृष्टम् स्फुरितं विपुलं चापं यत्र तत् ॥ पक्षे—सोऽर्जुनः तत्सैन्यं धुनोति स्म । भग्नकीलकत्वाद्विकलितरथवंशम् । रुद्धः भीष्मस्य गाङ्गेयस्य प्रभावो यत्र । क्षयितः कृपस्य कृपाणो यत्र । कर्णेन राज्ञा कृष्टः आकृष्टः स्फुरितो विपुलश्चापो यत्र तत् । शेषं समानम् ॥

निबद्धवैरं सृजता शिलीमुखान्प्रवर्तितानल्पतरास्त्रतेजसा ।
स राजपुत्रेण जितेन्द्रतेजसा न्यरोधि दुर्योधन उद्यतोऽपि सन् ॥ १८ ॥

स मारुतिः हनूमान् राज्ञो रावणस्य पुत्रेण न्यरोधि निरुद्धः । किंभूतेन । जितमिन्द्रस्य तेजो बलं येन तेन । इन्द्रजितेत्यर्थः । नितरां बद्धं वैरं येनेत्येवं यथा स्या[त्तथा] शिलीमुखान् बाणान् सृजता मुञ्चता प्रवर्तितानल्पतरं बहुतरमस्त्रतेजो येन स तथा । स किंभूतः । दुर्योधनं यस्य स दुर्योधनः उद्यतोऽपि रणाय कृतोद्यमोऽपि ॥ पक्षे—स दुर्योधनो राजपुत्रेणार्जुनेन । अन्यत्समानम् ॥

विपक्षवीरैः समितिं प्रवेशितः समीक्ष्य राजानमसौ सुखद्विषाम् ।
धरात्मजानिग्रहणप्रतिक्रियानिवेदितार्थैर्वचनैरकोपयत् ॥ १९ ॥

स मारुतिः सुखद्विषां शत्रूणां राजानं रावणं समीक्ष्य दृष्ट्वा वचनैस्तमकोपयत् । क्रुद्धं चकार । विपक्षवीरैः राक्षसैः समितिं सभां प्रवेशितः । 'समितिः समवेतार्थे सभायामपि संगरे' इति विश्वः । किंभूतैः तैः । धरायाः पृथिव्याः आत्मजा सीता तस्या यन्निग्रहणं निग्रहस्तस्य या प्रतिक्रिया प्रतीकारः एवंभूतो निवेदितार्थोऽभिधेयो यस्य तैः ॥ पक्षे—सोऽर्जुनः । राजानं दुर्योधनम् । धरात्मजा द्रौपदी । समितिं संग्रामम् । सुखद्विषाम् । शेषं समानम् ॥

ततो हनूमान्विजयाङ्कभूतस्वरेण घोरेण नदन्परेषाम् ।
लाङ्गूललग्नेन हुताशनेन ददाह लङ्कामिव चित्तवृत्तिम् ॥ २० ॥

तत इत्यनन्तरं हनूमान् परेषां शत्रूणां चित्तवृत्तिमिव लङ्कां ददाह अदहत् । सहोपमा । केन । लाङ्गूललग्नेन हुताशनेन पुच्छसंसक्तवह्निना । स किंभूतः । विजयस्य शत्रुपराजयस्याङ्कभूतेन चिह्नेन स्वरेण शब्देन घोरेण भयंकरेण नदन् कृतशब्दः । सिंहनादं कुर्वन्निति वा ॥ भारते—विजयस्यार्जुनस्याङ्कभूतो ध्वजयष्टिगतो हनूमान् स्वरेण नदन् परेषां दुर्योधनादीनां चित्तवृत्तिं ददाह । लाङ्गूललग्नेन हुताशनेन लङ्कामिव । शेषं तुल्यम् ॥

एवं प्रकाशीकृतवीर्यसंपद्धरेः कुमारो हरिदश्वकल्पः ।
विरोधिनां मूर्ध्नि निधाय पादं यशोऽच्छमुष्णीषमिव व्यमुष्णात् ॥ २१ ॥

हरेर्वानरस्य कुमारो मारुतिः विरोधिनां द्विषामच्छं निर्मलं यशो व्यमुष्णात् विशेषतो मुषितवान् चोरितवान् । किं कृत्वा । अर्थाच्छत्रूणां मूर्ध्नि पादं निधाय उष्णीषमिव । निर्मलत्वात्साम्यम् । सहोपमा वा । किंभूतः । पूर्वोक्तप्रकारेण प्रकाशिता वीर्यसंपद्येन स तथा । हरिदश्वोपमः आदित्येन सदृशः । 'हरिद्दिशि स्त्रियां पुंसि हरिद्वर्णविशेषयोः' इति विश्वः ॥ पक्षे—हरेरिन्द्रस्य कुमारोऽर्जुनः तेषां दुर्योधनादीनामुष्णीषं शिरोवेष्टनं मुषितवान् । अच्छं यश इव । 'उष्णीषं तु शिरोवेष्टे किरीटलक्षणान्तरे' इति मेदिनीकरः ॥

प्रभाविनोदी प्रबलाम्बुराशेर्विलङ्घनाल्लब्धजयोत्तरश्रीः ।
नृपप्रियोपायनरत्नहारी पुरः समीयाय तदात्मवर्गैः ॥ २२ ॥

स हनूमान् पुनरात्मवर्गैरङ्गदप्रभृतिभिः समीयाय संगतो बभूव । नृपप्रियायाः सीतायाः प्रहितमुपायनभूतमभिज्ञानरत्नं तस्य हारीति हनुमद्विशेषणम् । प्रबलस्य महतोऽम्बुराशेः समुद्रस्य विलङ्घ[क]त्वात् प्रभायाः लाङ्गूललग्नवह्निशिखायाः विनोदी निर्वापकः । लब्धा जयोत्तरा जयायत्ता श्रीर्येन सः । समुद्रेणापि अनिर्वाणस्य लाङ्गूललग्नाग्नेः सुखेन निर्वाणीकरणादिति ॥ पक्षे—सोऽर्जुनः आत्मवर्गैर्युधिष्ठिरादिभिः नृपस्य विराटस्य यदुपायनभूतं रत्नं गोकुलं तस्य हारी । 'जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते' । दीप्रस्य बलसमुद्रस्य लङ्घनात् । लब्धजया उत्तरस्य विराटपुत्रस्य श्रीर्यस्मादिति । शेषं समानम् ॥

ततः समृद्धाङ्गदहेमकुण्डलाः समेत्य सर्वे कृतमन्त्रनिश्चयाः ।
कृतार्थभावान्मधुरोचितश्रियः क्षमापतेस्ते पुरतोऽवतस्थिरे ॥ २३ ॥

ते हनूमत्प्रभृतयः समेत्य मिलित्वा क्षमापतेः रामस्य पुरतः अग्रे अवस्थिताः कृतार्थभावात्कृतप्रयोजनत्वात् सीतान्वेषणकार्यकारित्वात् मनोहरा उचिता श्रीर्येषां ते । कृतो मन्त्रनिश्चयो अग्रिमकृत्यनिश्चयो यैस्ते । समृद्धोऽङ्गदो वालिपुत्रो हेमकुण्डलो वानरविशेषो येषां ते तथा ॥ पक्षे—ते युधिष्ठिरादयः क्षमापतेः विराटस्य समृद्धमङ्गदमलंकरणं बाहोः केयूरं हेमकुण्डलं च कर्णालंकारो येषामिति । संमितमन्यत् ॥

उपकारगुणज्ञेन राज्ञा तद्विहितस्तदा ।
केलीकलहसंवृत्तः प्रहारोऽपि स चक्षमे ॥ २४ ॥

राज्ञा रामेण स प्रहारोऽपि चक्षमे क्षान्तः । तदा तेन विहितः वानरेन्द्रेण दत्तः केलीकलह[:] क्रीडाकन्दली [तत्र] संवृत्त उत्पन्नः । उपकाररूपं गुणं जानातीत्युपकारगुणज्ञः । ततः सीतान्वेषणादिकोपकारस्मरणादिति ॥ पक्षे—राज्ञा युधिष्ठिरेण स प्रहारश्चक्षमे ।

तेन विराटेन विहितः कृतः केलीपाशक्रीडा तस्यां यः कलहः [तत्र] संवृत्तो जातः । तत्र विराटेन युधिष्ठिरो ललाटे ताडित इति पुराणम् । स गुप्तवासाद्युपकारगुणज्ञेन । शेषं संमितम् ॥

दृष्ट्वैव चूडामणिशोभिनस्तांस्तच्छक्तिसंपादितभूरिकार्यः ।
संभावयामास चिरं नरेन्द्रः श्रुतप्रियोदन्तनितान्तहृष्टः ॥ २५ ॥

नरेन्द्रो रामः तान् सुग्रीवादीन् संभावयामास मानयति स्म । किंविशिष्टः । श्रुतो हनूमन्मुखाद्य उदन्तः प्रियायाः संदेशः प्रवृत्तिस्तेन नितान्तं हृष्टः । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः' इत्यमरः । तान्कीदृशान् । चूडामणिशोभिनः सीताभिज्ञानमणिभिः शोभायुक्तानित्यर्थः । कथंभूतः । तेषां सुग्रीवादीनां शक्त्या संपादितं भूरि कार्यं सीतान्वेषणलङ्कादाहादिरूपं कार्यं येन यस्य वा तथा ॥ पक्षे—नरेन्द्रो विराटः । तान् युधिष्ठिरादीन् । श्रुतः प्रियस्य प्रियजनस्य गोकुलस्य उदन्तः प्रवृत्तिः शत्रुविजयपूर्वकतत्समानयनरूपस्तेन हृष्ट इति । तच्छक्त्या तेषां युधिष्ठिरादीनां शक्त्येति । शेषं तुल्यम् ॥

प्रभञ्जनस्य द्विषतां जिष्णोरात्मोद्भवस्तदा ।
सत्कृत्य सुहृदां मध्ये राज्ञा दत्तोत्तरो बभौ ॥ २६ ॥

प्रभञ्जनस्य वायोरात्मोद्भवः पुत्रो हनूमान् बभौ शुशुभे । कीदृशस्य । जिष्णोर्जयनशीलस्य । स किंभूतः । सुहृदां मित्राणां नलनीलादीनां मध्ये राज्ञा रामेण सत्कृत्य संमान्य दत्तोत्तरो दत्तप्रतिवचनः ॥ पक्षे—जिष्णोरर्जुनस्य पुत्रः अभिमन्युः । कीदृशः । राज्ञा विराटेन विवाहविधिना दत्ता स्वसुता उत्तरा यस्मै सः । तेन सा परिणीतेत्यर्थः । द्विषां प्रभञ्जनस्य भञ्जनकर्तुः नाशकस्य । 'उत्तरा दिग्विशेषे च स्नुषायामर्जुनस्य च' इति विश्वः ॥

सदुत्तरोदारगुणः संतोषितहरीश्वरः ।
राजासौभद्रताविष्टः कामदेव इव श्रिया ॥ २७ ॥

असौ मारुतिः रेजे । श्रिया लक्ष्म्या । कामदेवः कन्दर्प इव । एतत्काव्यकर्तेवेति वा । किंभूतः । भद्रस्य भावः भद्रता तयाविष्टः । संतोषितो हरीश्वरः सुग्रीवो येन सः । श्रेष्ठा उदारा वा गुणा यस्य सः ॥ पक्षे—सुभद्राया अपत्यं सौभद्रः तस्य भावः सौभद्रता तया आविष्टः अभिमन्युः रेजे । सन् उत्तराया उदारो गुणो यस्य सः । सदुत्तरश्चासावुदारगुणश्चेति कर्मधारयो वा । संतोषितो हरिः कृष्णः ईश्वरश्च विराटो येन ॥ कामदेवपक्षे—संतोषितो हरिः पिता ईश्वरो येन सः ॥

इति श्रीहलधरणीप्रसूतकादम्बकुलतिलकचक्रवर्तिवीरश्रीकामदेवप्रोत्साहितकविराजपण्डितविरचिते कामदेवाङ्के राघवपाण्डवीये महाकाव्ये श्रीशशधरविरचिते राघवपाण्डवीयप्रकाशे सुन्दरवैराटीये अशोकवनदाह उत्तरगोग्रहो नाम षष्ठः सर्गः ॥

सप्तमः सर्गः ।

अथ नृपतिरुपेत्य मित्रवर्गैर्हरिबलभद्रमुखैः प्रणीतमन्त्रः ।
अवगतरिपुरात्मचक्रवृद्ध्या निजविजयोचितयत्नमन्वतिष्ठत् ॥ १ ॥

अथेत्यनन्तरं नृपतिः रामः निजविजयस्यात्मनो जयस्योचितं योग्यं यत्नमन्वतिष्ठत् चकार । किंभूतः । हरीणां वानराणां मध्ये ये बलेन भद्राः श्रेष्ठाः वानराः तत्प्रमुखैस्तत्प्रधानैः मन्त्रिवर्गैः सुग्रीवादिभिरुपेत्यागत्य प्रणीतमन्त्रः कृतकर्तव्यनिश्चयः । आत्मचक्रस्य निजसैन्यस्य वृद्ध्या अवगतो रिपुर्दशकंधरो येन तथा । स्वशक्त्युपचयज्ञानवानित्यर्थः । आत्मचक्रस्य वृद्ध्या प्रणीतमन्त्र इति । योग्यं मन्त्रमकरोदित्यत्रैव हेतुः । स्वशक्त्युपचये प्रयाणमेव कर्तव्यमिति कृतनिश्चय इति भावः । यदुक्तं माघेन—'स्वशक्त्युपचये केचित्' इति ॥ पक्षे—नृपतिर्युधिष्ठिरः युद्धायोद्योगं चकार । हरिः कृष्णः, बलभद्रो हली, तत्प्रमुखैर्मित्रवर्गैः आत्मचक्रस्य निजसैन्यस्य वृद्ध्या अवगतो रिपुर्दुर्योधनो येन स तथा । तस्मात्पुनरिति ॥

ततो युगान्तक्षुभिताब्धिकल्पाः स्वभारभुग्नोरगराजकण्ठाः ।
स्फुरत्प्रभावा नरपुंगवानां दिगन्तरेभ्यः पृतनाः समीयुः ॥ २ ॥

तत इत्यनन्तरं वानरपुंगवानां वानरश्रेष्ठानां पृतनाः सेनाः दिगन्तरेभ्यः संगता बभूवुः । कीदृशाः । स्फुरन्ती प्रभा दीप्तिर्येषां ते । युगान्ते क्षुभित उद्वेलितो योऽब्धिः समुद्रस्तत्कल्पास्तत्सदृशाः । स्वस्य भारेण गौरवेण भुग्न उरगराजस्य वासुकेः कण्ठो याभिस्ताः । अतिगौरवत्वात् धूर्धारणभुग्नकण्ठत्वमिति ॥ पक्षे—नरपुंगवानां पुरुषश्रेष्ठानाम् । स्फुरन्प्रभावो यासां ताः । तुल्यमन्यत् ॥

संनद्धसैन्येषु बलाधिपेषु ततस्ततो भूपतिमाश्रयत्सु ।
विरोधिचक्रं बहुधार्तराष्ट्रं चिन्ताभिरन्तर्गतशल्यमासीत् ॥ ३ ॥

विरोधी शत्रुः रावणः तस्य चक्रं सैन्यं चिन्ताभिरन्तर्गतशल्यं हृदयलग्नं शल्यं सव्यथमिवासीत् बभूव । किंभूतम् । बहुधा आर्तं पीडितम् राष्ट्रं यस्य तत् । केषु सत्सु । ततस्तस्माद्दिगन्तात् संनद्धसैन्येषु सम्यङ्बद्धेषु कृतसंनाहेषु बलाधिपेषु यूथाधिपेषु भूपतिं राममाश्रयत्सु ॥ पक्षे—धृतराष्ट्रस्येदं धार्तराष्ट्रं चक्रं सैन्यं चिन्ताभिर्विरोधि विरोधयुक्तं विरुद्धमासीत् । किंभूतम् । अन्तर्गतः शल्यो मद्राधिराजो यत्र तत् । भूपतिं युधिष्ठिरम् । तुल्यमन्यत् ॥

कृतोद्यमः शत्रुजये यथावद्राजा सराष्ट्राणि वनानि नीत्वा ।
महाविपद्वारिनिधिं तितीर्षुर्वेलावनान्तं प्रतिपद्य तस्थौ ॥ ४ ॥

राजा रामो वेलावनान्तं समुद्रतटान्तं प्रतिपद्य प्राप्य तस्थौ अवस्थितः । किंभूतः । महती विपद्यत्र एवंभूतं वारिनिधिं समुद्रं तितीर्षुः तरितुमिच्छुः । संतरणाशक्यत्वान्म-

हाविपत्कारितेति। यथावत् यथाविधि शत्रुजये कृत उद्यमो येन। राष्ट्राणि बहून् देशान् वनानि काननानि नीत्वा अतिक्रम्य ॥ पक्षे—वेला कालस्तस्या वनं पालनं कृतपूर्वसमयपरिपालनं तस्यान्तमवसानं चतुर्दशवर्षावसानं प्रतिपद्य प्राप्य। स राजा युधिष्ठिरः तस्थौ। महाविपदं वारिधिमिव तितीर्षुः। अनवगाहनीयत्वात्साम्यम् इति। शेषं समानम्। 'वेला काले च सीमायामब्धेः कूलविकारयोः' इति मेदिनीकरः॥

स सह्यभूभृत्कटकान्तसक्ता धीरा महेन्द्रस्य विलङ्घनेऽपि।
समं समुद्रस्य पयः समृद्ध्या नरेन्द्रसेना प्रतिगच्छति स्म॥ ५॥

नरेन्द्रस्य रामस्य सेना समुद्रस्य पयः पानीयं समं तुल्यतां प्रतिगच्छति स्म जगाम। कया। समृद्ध्या संपदा। उभयं विशिनष्टि लिङ्गव्यत्ययेन—सह सह्येन पर्वतेन वर्तन्ते ये भूभृतश्च तेषां कटकेषु नितम्बेषु सक्ता संबद्धा। समुद्रस्य पयश्च तत्र सक्तमिति। महेन्द्रपर्वतविशेषस्य लङ्घने समर्था योग्येत्यर्थः। पयोऽपि तल्लङ्घने धीरमिति॥ पक्षे—नरेन्द्रो युधिष्ठिरः। समुद्रस्य पयसां समृद्ध्या समं यथा स्यादेवं प्रतिगच्छति स्म। महेन्द्रस्य शक्रस्य लङ्घनेऽपि धीरा क्षमा। सह्यो राजविशेषस्तत्सहिता भूभृतो राजानस्तेषां कटकेषु सैन्येषु सक्तेति। अन्तःशब्दः स्वरूपे। 'राजधान्यां नितम्बेऽद्रेर्वलये कटकोऽस्त्रियाम्' इति विश्वः। 'प्रतिगर्जति' पाठान्तरम्॥

अथ नृपमनुवेलं सेव्यमानं बलौघै-
रगणितदशकण्ठोद्दण्डदोर्दण्डशक्तिः।
अनिलसुतनिबद्धप्रीतिरागत्य दूरा-
त्क्षितिघटितकिरीटं राक्षसेन्द्रो ववन्दे॥ ६॥

अनन्तरं नृपं रामं राक्षसेन्द्रो विभीषणो ववन्दे प्रणामं चकार। आगत्य रामं मिलितः। किंभूतम्। अनुवेलं वेलायां बलौघैः सैन्यसमूहैः सेव्यमानम्। स किंभूतः। अगणिता दशकण्ठस्य रावणस्य उद्दण्डदोर्दण्डस्य उद्भटभुजप्रकाण्डस्य शक्तिर्येन सः। दूरादागत्य लङ्कातः समेत्य। अनिलस्य वायोः सुतेन हनूमता निबद्धा प्रीतिर्यस्य यस्मिन्वा सः॥ क्षितिघटितकिरीटं भूलग्नमुकुटं यथा स्यादिति॥ पक्षे—राक्षसेन्द्रः घटोत्कचः। नृपं युधिष्ठिरम्। दूरादागत्य अनिलसुते भीमे निबद्धा प्रीतिर्येन अनुवेलं वारंवारमगणितो दशकण्ठो यया एवंभूता उद्दण्डदोर्दण्डस्य शक्तिर्यस्येति। शेषं समानम्॥

तं भीमतेजःप्रभवं प्रभावी विपक्षशक्तिप्रतिघातहेतुम्।
विभीषणं भूमिपतिः स्वकीयप्रसादलक्ष्मीसदनं चकार॥ ७॥

भूमिपतिः रामः तं विभीषणं स्वकीयप्रसादस्य लक्ष्म्याः सदनं गृहं चकार। रावणजयलक्ष्मीः तस्य प्रसादीकृतेति भावः। किंभूतम्। भीमस्य भयानकस्य तेजसः प्रभवः उत्पत्तिस्थानम्। विपक्षस्य रावणस्य शक्तेः प्रतिघातः तस्य हेतुम्। कीदृशो भूमि-

पतिः । प्रभावी प्रभावयुक्तः ॥ पक्षे—भूमिपतिः युधिष्ठिरस्तं घटोत्कचम् । विभीषणं भयंकरम् । भीमस्य तेजसा शुक्रेण प्रभव उत्पत्तिर्यस्य सः । विपक्षस्य दुर्योधनस्य शक्तिप्रतिहननकारणं तस्य प्रसादं कृतवान् ॥

जवेन जिष्णुर्नृपनन्दनोऽथ द्विषो जिगीषुर्हरिसंग्रहेण ।
दुर्योधनेन द्विषतावगाहमध्ये पयोराशिमुपाससाद ॥ ८ ॥

अथानन्तरं नृपनन्दनो रामः जिष्णुर्जयनशीलः दुर्योधनेन योद्धुमशक्येन हरिसंग्रहेण वानरसमूहेन द्विषः शत्रून् रावणादीन् जिगीषुः जेतुमिच्छुः जवेन वेगेन पयोराशिं समुद्रमाससाद आसन्नः । द्विषता शत्रुणा अवगाहमध्यं यथा स्यादिति। अवगाहितं मध्यं यस्य ॥ पक्षे—नृपनन्दनो जिष्णुर्जयनशीलोऽर्जुनः जवेन पयोराशिं समुद्रं द्वारिकामाससाद । दुर्योधनेन धार्तराष्ट्रेण सहसोपगत इत्यर्थः । हरिसंग्रहेण कृष्णसंग्रहेण । द्विषः शत्रून् दुर्योधनादीन् जिगीषुः । 'संग्रहो बृहदुद्धङ्के ग्रहसंक्षेपयोरपि' इति विश्वः । हरिं कृष्णमानेतुमर्जुनो दुर्योधनश्च गत इत्यर्थः । द्विषतावगाहमध्ये सतीति सप्तम्यन्तः पाठः । कृष्णो हि दुर्योधनेनावगाहितश्चेति वा । 'सुवेलः प्रणते शान्ते त्रिषु ना पर्वतान्तरे' इति विश्वः । अर्जुनविशेषणे दुर्योधनोऽवगाहितमध्य इति भावः ॥ 'सुवेलजिष्णुः' इति पाठान्तरे तत्र सुवेलः पर्वतविशेषः समुद्रपारवर्ती तस्य जिष्णुरिति रामविशेषणम् । सुवेलो जिष्णुश्चेति वा । अर्जुनविशेषणे शोभना वेला कालः तत्र जिष्णुः देशकालज्ञो जयनशीलो भवतीति ॥

दुर्गं तुङ्गोत्तरङ्गावलिमिलितमहानक्रमावर्तचक्र-
भ्रामद्दिण्डीरपिण्डप्रतिगलितसितच्छत्रविस्तारशोभम् ।
अम्भःसंभारभारालसजलदघटादुर्दिनीभूतदिक्कं
दिक्कुम्भिप्रौढशुण्डाशकलितसलिलं सागरं सोऽभ्यपश्यत् ॥९॥

स रामोऽर्जुनो वा सागरं समुद्रमभ्यपश्यत् संमुखं ददर्श । किंभूतम् । तुङ्गम् उच्चलन्तस्तुङ्गा उच्चा ये तरङ्गा ऊर्मयः तेषामावलीषु मिलिता महानक्रा यत्र तम् । 'कुम्भीदे नासिकायां च नक्रः शुक्रावयोः क्रमात्' इति विश्वः। आवर्तचक्रे भ्रमिसमूहे भ्रामन्तो ये दिण्डीरपिण्डाः फेनसमूहाः ततः प्रतिगलिता आयता सितच्छत्रवद्विस्तारिणी शोभा यत्र । दिण्डीरपिण्डसदृशं सितच्छत्रमिति । अम्भसां संभारस्य भारैरलसा अक्रिया ये जलदा मेघास्तेषां घटाः समूहाः तेन दुर्दिनीभूता दिशो यत्र । जलधारा घटा हस्तिसमूहा इति वा । 'घटा घटनगोष्ठीभघनावुवरयोषिति' इति मेदिनीकरः । दिशां कुम्भिनां हस्तिनां प्रौढैः शुण्डादण्डैः स्थूलहस्तैः शकलितं खण्डशः कृतं सलिलं यत्र । यद्वा । शकलैरितं युक्तं सलिलं यत्र । 'शकलं तु विखण्डे स्याद्रावबस्तुनि वल्कलः' इति विश्वः ॥

सरसं बहुयोजनाधिवासं भृतगाम्भीर्यमनुज्झितप्रसादम् ।
स महार्थमुपासदत्समुद्रं ध्वनिभाजं सुकवेरिव प्रबन्धम् ॥ १० ॥

स रामोऽर्जुनो वा समुद्रमुपासदत् समीपमागमत्। कवेः प्रबन्धं काव्यमिव। उभयं विशिनष्टि—सरसं सजलं शृङ्गारादिरसयुक्तं वा। 'शृङ्गारादौ रसे वीर्ये तिक्तादौ द्रवरागयोः। देहधातुप्रभेदे च पारदस्वादयो रसः॥' बहुयोजनेष्वधिवसतीति तम्। बहूनां योजनानामधिवासा अयमिति वा। बहुशब्दोऽनेकोपलक्षकः। 'चतुष्क्रोश्यां च योग्ये च योजनं परमात्मनि' इति विश्वः। पक्षे। बहूनां योजनानामधिवासमिति। धृतं गाम्भीर्यं भीरुत्वं येन। पक्षे। अर्थगाम्भीर्यम्। न उज्झितः प्रसादो येन प्रसादयुक्तम्। पक्षे। प्रसादो गुणविशेषः। प्रसादः समता गाम्भीर्यं सुकुमारत्वमिति। महानर्थो रत्नादिर्यत्र रत्नाकरत्वात्। पक्षे। महानर्थोऽभिधेयो यत्र शब्दादीनामर्थात्। ध्वनिभाजमारवयुक्तम्॥ पक्षे—ध्वनिरलंकारविशेषः। तद्युक्तम्। केचित्तु व्यारवमाहुः। मुद्रया सह वर्तते तत्समुद्रं सैन्यमुपाससाद। सरसं वीररसप्रधानं बहुयोजनाधिवासं बहुदेशावस्थितम्। अनवगाहनीयत्वेन धृतगाम्भीर्यं महार्थं सप्रयोजकं ध्वनिभाजं पटहादिशब्दयुक्तम्। 'शब्दानामभिधेयेऽपि निवृत्तौ च प्रयोजके। स्यादर्थः पुंसि विषये द्रव्यकारणवस्तुषु॥' इति विश्वः॥

सवारिपूरस्फुटदारणाय धृतप्रतिज्ञं प्रतिदर्शितात्मा।
तमार्चिचद्वारिधिरूर्मिबाहुप्रणुन्नरत्नावलिरञ्जिताङ्घ्रिम्॥ ११॥

तं रामं वारिधिः समुद्रः आर्चिचत् पूजयामास। स किंभूतः। प्रतिदर्शित आत्मा येन सः। मां मा विदारय किं तु सेतुं कुरुष्वेति दर्शितस्वरूपः। सह वारिपूरेण वर्तते स सवारिपूरः। जलराशिसहितः। तं किंभूतम्। स्फुटं दारणाय विदारणाय अर्थात्समुद्रस्य धृतप्रतिज्ञम्। यद्यस्मात्सुवर्त्म दास्यामीति कृतप्रतिज्ञम्। प्रायोपवेशनादिति। ऊर्मय एव बाहवस्तैः प्रणुन्ना रत्नावलिः रत्नसमूहस्तया रञ्जितावङ्घ्री यस्य स तथा। समुद्रेण तरङ्गानीतरत्नावलिभिः संपूजित इति समुदायार्थः॥ पक्षे—तमर्जुनं वारिधिरपूजयत्। अभिराध(द्ध)वानित्यर्थः। वाशब्द इवार्थः। रिपोर्दुर्योधनस्य दुःशासनस्य उरसो हृदयस्य दारणाय धृतप्रतिज्ञमिति। ऊर्मिरेव बाहुस्तेन प्रणुन्नेति। प्रकाशितात्मातिरोधनादिति॥

वेलादरीदुन्दुभिनाददक्षैस्तरङ्गहस्तैः कृतमङ्गलस्य।
उदन्वतोऽभ्यागमनानुकूल्यादमंस्त संक्रान्तमिवारिचक्रम्॥ १२॥

स रामोऽर्जुनो वा अरिचक्रं शत्रुसमूहं संक्रान्तं सम्यगाक्रान्तमिव निर्जितमिवामंस्त मन्यते स्म। कुतः। उदन्वतः समुद्रस्य अभ्यागमने संमुखागमने यदानुकूल्यं वृत्तं तस्मात्। किं तदित्याह—हेतुगर्भविशेषणम्। तरङ्गहस्तैः कल्लोलहस्तैः कृतमङ्गलस्य कृतस्वस्त्ययनस्य विघ्नध्वंसकत्वात्। कीदृशैः। वेलादरी समुद्रकन्दरा सा दुन्दुभिरिव वाद्यविशेष इव नादे तद्वादने दक्षैः कुशलैः॥

दिशानया गच्छ निजेष्टसिद्ध्यै हरिप्रभावार्पितसेतुबन्धया।
इतीव तस्मै स्फुटमाह सागरः स्वरैर्गभीरैः प्रतिनादयन्दिशः॥ १३॥

सागरः तस्मै रामाय इत्येवमाह उक्तवान् । स्फुटं व्यक्तमुत्प्रेक्षायां वा । गभीरैः स्वरैर्दिशः प्रतिनादयन् शब्दयुक्ताः कुर्वन् । किं तदाह—हरीणां वानराणां प्रभावेणार्पितः सेतुबन्धो यत्र तया अनया दिशा निजेष्टसिद्ध्यै वैरिनाशसिद्ध्यै सीताया आनयनाय च तस्येति । गच्छेति ॥ पक्षे। तस्मै अर्जुनाय इत्येवमाहेत्युत्प्रेक्षा। किं तत्। अनया दिशा प्रकारेण इष्टसिद्ध्यै गच्छ हरिः श्रीकृष्णस्तस्य प्रभावेणार्पितः सेतुबन्धो यत्र । व्यवस्थाबन्धो यत्र । हरिं श्रीकृष्णं स्वपक्षीकृत्य रिपुक्षयायेति । शेषं तुल्यम् । 'सेतुरालौ(लौ)-व्यवस्थायाम्' इति विश्वप्रकाशः ॥

असौ विसृष्टाशनितीव्रवेगहरिप्रभावोच्चलितान्पुरस्तात् ।
कृताभिपाताञ्जलधौ ददर्श विचित्रधातुच्छुरितान्महीध्रान् ॥ १४ ॥

असौ रामोऽर्जुनो वा महीध्रान् पर्वतान् जलधौ समुद्रे कृताभिपातान् ददर्श पश्यति स्म । विचित्रेण नानारूपेण धातुना गैरिकादिना छुरितान् संबद्धान् । पुरस्तादग्रे विसृष्टस्त्यक्तोऽशनिर्वज्रं तद्वत्तीव्रो वेगो येषाम् एवंभूता ये हरयो वानरास्तेषां प्रभावेणोच्चलितान् उत्पतितान् ॥ अर्जुनपक्षे—विसृष्टः प्रेरितः अशनिर्येन एवंभूतस्य तीव्रवेगस्य हरेः शक्रस्य प्रभावोच्चलितान् । तद्भिया समुद्रमागतानित्यर्थः । केचित्तु । महीध्रान् राज्ञो ददर्श हरिप्रभावादितस्ततः समागतानित्यर्थः । द्वारिकातटे समुद्रतटे कृतशबरानित्याहुः ॥

स विश्वकर्मोद्भवशिल्पसिद्धं सदूरसीमन्तितवारिपूरम् ।
मणिप्रभाभास्वरमभ्रवीथ्यामृजूत्थिताखण्डलचापकल्पम् ॥ १५ ॥
हरिप्रभावोपचितक्षमाभृन्निवेशनैश्चायततां प्रपन्नम् ।
महीमहाम्भोरुहनालकल्पं ददर्श सेतुं हरिवंशकेतुः ॥ १६ ॥

हरिः सूर्यस्तदुपलक्षितो यो वंशोऽन्ववायः तस्य सूर्यवंशस्य केतुः चिह्नं ध्वजो वा रामः सेतुबन्धं ददर्श अपश्यत् । किंभूतम् । विश्वकर्मणः उद्भवो यस्य स नलो नाम वानरः तस्य शिल्पेन सिद्धम् । तस्मात्सिद्धः शिल्पो यत्रेति वा। सदूरं यथा स्यादेवं सीमन्तितो द्विधाकृतो वारिपूरो येन तम् । मणीनां प्रभया भास्वरं दीप्तम् । अभ्रवीथ्यामाकाशे ऋजूत्थितो वक्रो गतो य इन्द्रचापस्तत्कल्पं तत्सदृशम् हरीणां वानराणां प्रभावेणोपचिता ये क्षमाभृतो बहुलीकृतपर्वताः तेषां निवेशनैरारोपणैरायततां प्रपन्नम् । महीमहाम्भोरुहं पद्मं तालकल्पं तालसदृशमिति । 'शिल्पं द्रुमे क्रियायोगे' इति मेदिनीकरः ॥ पक्षे—हरिर्वानरो वंशः केतुर्ध्वजो यस्य स हरिवंशकेतुरर्जुनो वानरध्वजत्वात्तस्य, सेतुं रामभद्रकृतं समुद्रबन्धं ददर्श । शेषं विशेषणं समानम् ॥ केचित्तु कुव्याख्यां कुर्वन्ति । हरिर्वायुः तस्य वंशस्य केतुः तत्पुत्रत्वात् भीमः हरिः कृष्णवंशकेतुः युधिष्ठिरो वा सेतुं व्यवस्थाबन्धं ददर्श । विश्वकर्मण उद्भवो यस्मात्स विश्वकर्मोद्भवो हरिः तस्य शिल्पेन कौशलेन सिद्धम् । यद्वा विश्वकर्मोद्भवो मयनामदैत्यशिल्पी तस्य

शिल्पेन सभारूपेण सिद्धः तत एव वैरोत्पत्तेः ततो व्यवस्थेति । वाजपेययूप इति व-त्परम्परासंबन्धे षष्ठी । सुदूरं सीमन्तित इव द्विधाकृतोऽरिपूरो यत्र । मणीनां राजमुकुटस्थितानां प्रभया । भास्वरं दीप्तम् निर्मलत्वात् । हरेः श्रीकृष्णस्य प्रभावेणोपचिता वर्तुलीकृता ये क्ष्माभृतो राजानस्तेषां निवेशनैर्युद्धायारोपणैरायततां प्रपन्नम् । क्षुण्णत्वाद्धर्मतुल्यत्वमित्याह च । तत्तुच्छम् । अग्रे द्वारिकाप्राप्ते ॥

सद्वारकान्तां नगरीं गरिष्ठां संप्रस्थितस्तेन यथा नृवीरः ।
ददर्श धीरो हरिवाहिनीभिर्निरन्तरालानि ककुम्मुखानि ॥ १७ ॥

नृवीरो रामः तां नगरीं लङ्कां सद्वारकां द्वारसहितां यद्वा द्वारेण कान्तां रमणीयां गरिष्ठां गुर्वीं तेन पथा वर्त्मना संप्रस्थितो गतः । ककुभां दिशां मुखानि वानराणां वाहिनीभिः सेनाभिः निरन्तरालानि अवकाशशून्यानि एकीभूतानि ददर्शेति वाक्यार्थः॥ पक्षे—स वीरोऽर्जुनः द्वारकां नगरीं तेन पथा रामभद्रकृतसेतुना प्रस्थितः हरिवाहिंनीभिः श्रीकृष्णसेनाभिः निरवकाशानि दिङ्मुखानि दृष्टवानिति । हरिवाहिनीभिः अश्वयुक्ताभिरिति वा । वीरो विक्रान्तः । 'शूर वीर विक्रान्तौ' इति धात्वनुसारात् ॥

पश्यन्मनोज्ञान्कटकप्रदेशान्विलङ्घ्य पन्थानमलङ्घ्यतेजाः ।
विरोधिनाधिष्ठितपूर्वभागं स तं धरित्रीधरमाससाद ॥ १८ ॥

स रामस्तं धरित्रीधरं पर्वतं सुवेलमाससाद प्राप । यत्र लङ्का स्थितेत्यर्थः । मनोहरान् कटकप्रदेशान् पश्यन्निति पन्थानं वर्त्म विलङ्घ्य । न लङ्घनीयं परैस्तेजो यस्य स तथा । तं कीदृशम् । विरोधिना रावणेन अधिष्ठितमाश्रयत्वेनाक्रान्तः पूर्वभागो यस्य ॥ पक्षे—सोऽर्जुनः तं धरित्रीधरं कृष्णमाससाद । पृथ्वीधरत्वात् । कटकप्रदेशान् । दुर्योधनपदानुवर्तुलीकृतान् । विरोधिना दुर्योधनेनाधिष्ठितः पूर्वो ज्येष्ठो भागोंऽशो यस्य स तथा । अवलम्भस्य तत्प्रतिपन्नत्वात् । शेषं समानम् ॥

विचारमूढस्य बलानुकूल्यं द्विषोऽपि कुर्वञ्जगतीधरोऽसौ ।
अमुष्य पादान्तजुषस्तदानीं निर्व्याजमात्मार्चनमाचचार ॥ १९ ॥

असौ जगतीधरः सुवेलपर्वतः अमुष्य रामस्य आत्मार्चनमाचचार आत्मपूजनं कृतवान् । निर्व्याजं यथा स्यादेवम् । द्विषो रावणस्य विचारे विवेके मूढस्याज्ञस्य दुष्टकर्मणो बलानुकूल्यं कुर्वन् । पादान्तजुषः प्रत्यन्तपर्वतयुक्तस्य । अन्योऽपि यः पादान्तनम्रो भवति तस्यानुकूल्यं क्रियते ॥ पक्षे—असौ जगतीधरः श्रीकृष्णः अमुष्यार्जुनस्य आत्मार्चनमाचचार गौरवमकार्षीदिति किंतु आत्मना स्वेनार्चनमात्मार्चनम् । आत्मानमेव तत्साहाय्यकरणायादिशदिति भावः । किंभूतस्य पादान्तस्थितस्येति । द्विषोऽपि दुर्योधनस्यापि विचारमूढस्य बलेन सैन्येनानुकूल्यं कुर्वन् । सैन्यानि तस्य दत्तवानिति । स्वयमर्जुनपक्षाश्रयो भूत इति । पादान्तजुष इति विरोधिन इत्यस्य विशेषणम् । 'पादोऽम्बुधौ तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च' इति मेदिनीकरः ॥

बलोपलम्भादवलेपभाजा दैवाद्विपक्षेण पुरो निरस्तः ।
विभीषणो विद्विषतामहार्यः प्रीत्यान्वयासीत्पुरुषोत्तमस्तम् ॥ २० ॥

विभीषणो रावणभ्राता तं रामं प्रीत्या अन्वयासीत् अनुजगाम । किंभूतः पुरुषोत्तमः सन् । द्विषतां शत्रूणामहार्योऽभेदनीयः । दैवाद्विपक्षेण रावणेन पुरोऽग्रे निरस्तस्त्यक्तः । बलस्य सामर्थ्यस्योपलम्भादवलेपभाजा अवलिप्तेन ॥ पक्षे—पुरुषोत्तमः श्रीकृष्णः तमर्जुनमन्वयासीत् । द्विषतां शत्रूणां विभीषणो भयानकः । बलोपलम्भात्सैन्यप्राप्तेर्विपक्षेण दुर्योधनेन पुरस्तात्प्रथमतस्त्यक्तः । बलगृहीत्वाद्दुर्योधनो गत इति भावः ॥

मनुष्यमूर्तेः परमस्य पुंसः सौहार्दमासाद्य स दैवयोगात् ।
पौलस्त्यसंपत्तिमपि स्वकीयभ्रूभङ्गलीलासुलभाममंस्त ॥ २१ ॥

स विभीषणः पौलस्त्यस्य रावणस्य संपत्तिं लक्ष्मीममंस्त मन्यते स्म । स्वकीयो भ्रूविक्षेपस्तस्य या लीला विलासः तया सुलभां सुप्राप्यां लीलामात्रेण प्राप्तिर्भविष्यतीति दैवयोगाद्भाग्यवशात् मनुष्यमूर्तेः परमस्य पुंसो नारायणस्य सौहार्दं सुहृद्भावं मैत्र्यं प्राप्य ॥ पक्षे—सोऽर्जुनः पौलस्त्यस्य कुबेरस्य संपत्तिं लक्ष्मीं परमस्य पुंसः श्रीकृष्णस्य मैत्र्यमासाद्य । शेषं समानम् ॥

ससैन्यसुग्रीवसमग्रयानप्रभावसंपन्नरनाथजन्मा ।
स भूमिभर्तुः कटकं मनस्वी जवादुपप्लाव्यमुपेत्य तस्थौ ॥ २२ ॥

स नरनाथजन्मा रामो भूमिभर्तुः सुवेलपर्वतस्य कटकं नितम्बमुपेत्य तस्थौ । किंविशिष्टम् । जवात् शीघ्रमुपप्लाव्यमुत्पाटनीयम् । किंभूतः । ससैन्यो यः सुग्रीवो वानरविशेषः तेन समग्रं यद्यानं प्रयाणं तस्य यः प्रभावस्तेन संपद्यस्य । मनस्वी मानवान् ॥ पक्षे—स नरनाथजन्मा युधिष्ठिरादिः भूमिभर्तुः दुर्योधनस्य कटकं सैन्यमुपेत्य जवाद्वेगादुत्तस्थौ । उत्प्लाव्यं निरसनीयम् । सह सैन्येन वर्तन्ते ये सुग्रीवा अश्वास्तैः समग्रं यद्यानं गमनं तस्य यः प्रभावस्तेन संपद्यस्येति ॥

तदा शुकोऽपि प्रतिपक्षवाचा वचोहरः प्राप्य सुसंवृतात्मा ।
तमुन्नतांसं जयशब्दपात्रं श्रियं दधानं नृपतिं निदध्यौ ॥ २३ ॥

तदा तस्मिन्काले शुको नाम राक्षसो वचोहरो दूतो विपक्षवाचा रावणवचनेन तं नृपतिं प्राप्य निदध्यौ दृष्टवान् । सु अत्यर्थेन संवृतः सुसंवृतः आत्मा येन सः । गोपितशरीर इत्यर्थः । तं कीदृशम् । उन्नतावंसौ यस्य वृषस्कन्धस्तम् । जयशब्दभाजनं पात्रं श्रियं शोभां दधानं बिभ्रतम् ॥ पक्षे—आशु शीघ्रं कोऽपि वचोहरो दूतः दुर्योधनस्य वचनेन प्रच्छन्नरूपः तं युधिष्ठिरं प्राप्य निदध्यौ ददर्श । धातोरनेकार्थत्वात् । जयोऽर्जुनः तस्य शब्दस्य ध्वनेः संभावनया वा पात्रमिति । समुत्थितां श्रियं दधानं संजयशब्दपात्रं

सम्यक् जयशब्दस्य पात्रं वा । संजयः सारथिर्वा तस्य शब्दस्य पात्रमिति वा । तुल्यमन्यत् ॥

तदाज्ञयासौ गतभीतिरेनं हरिप्रणेतारमिदं जगाद ।
प्रज्ञेक्षणस्त्वामिदमाह राजा मुखेन मे दूतधुरि स्थितस्य ॥ २४ ॥

असौ वचोहरो दूत एनं सुग्रीवमिदमेवाग्रे वक्ष्यमाणं जगाद उवाच । तस्य रावणस्याज्ञया गतभीतिरत्रस्तः । कीदृशमेनम् । हरेर्वानरस्य प्रणेतारमीश्वरम् । किं तत् । प्रज्ञा बुद्धिरीक्षणं यस्य सः तीक्ष्णबुद्धिः स राजा रावणः त्वां मम मुखेनेदमाह—दूतधुरि स्थितस्य । धुरीणस्येत्यर्थः ॥ पक्षे—असौ दूत एनं युधिष्ठिरमिदमाह । तदाज्ञया दुर्योधनाज्ञया । हरिः श्रीकृष्णः स प्रणेता उपदेष्टा यस्य तम् । प्रज्ञेक्षणः प्रज्ञाचक्षुरन्धो राजा धृतराष्ट्रः । समासान्तविधेरनित्यत्वात् दूतधुरीति रूपम् ॥

तद्वचनमाह—

त्वया हि सत्प्रीतिपरायणत्वादङ्गीकृता साधुजनप्रवृत्तिः ।
अतः स्वयोग्ये पथि वर्तितव्यं न ते सुवेलाक्रमणेन सिद्धिः ॥ २५ ॥

साधुजनस्य सज्जनस्य प्रवृत्तिः प्रवर्तनं प्रवाहः अङ्गीकृता स्वीकृता । साधुजनकृत्यं कृतमित्यर्थः । सत्प्रीतिपरायणत्वात् । स्वकार्यसाधनेन सत्प्रीतिरप्युपार्जितेति भावः । रामस्यात्र नयनेन वा सत्प्रीतिपरायणेति । 'प्रवृत्तिस्तु प्रवाहे स्यादुदन्ते च प्रवर्तने' इति मेदिनीकरः । अतो हेतोः स्वस्यात्मनो योग्ये पथि सु अत्यर्थमात्मनो योग्ये पथि वर्त्मनि स्थातव्यं वर्तितव्यम् । सुवेलस्य पर्वतस्याक्रमणे तव न सिद्धिः । कार्यनिर्वाहो नेति । युद्धोद्यमे निवृत्तिरेव कर्तव्येति भावः ॥ पक्षे—सत्यवादित्वात्साधुत्वं स्वस्याङ्गीकृतं सत्प्रीतिपरायणत्वादतः स्वयोग्ये पथि सत्यर्थे वर्तितव्यं सुष्ठु वेला कालः । तस्याक्रमणेन मर्यादालङ्घनेन तव सिद्धिः न कार्यनिर्वाहः । तुल्यमन्यत् ॥

आत्मोचितं प्रोज्झ्य वनान्तवासं युद्धाय मा चापलमद्य कार्षीः ।
अनात्मनीने पथि वर्तमानात्पुंसो हि लोका भृशमुद्विजन्ते ॥ २६ ॥

आत्मन उचितं योग्यं वनान्तवासं प्रोज्झ्य त्यक्त्वा युद्धाय चापलं चाञ्चल्यं मा कार्षीः मा क्रियताम् । वानराणां वनवास उचितः । न युद्धमिति भावः । कुत एवम् । हि यतः अनात्मनीने पथि वर्तमानात्पुंसो लोका भृशमुद्विजन्ते उद्वेगं गच्छन्तीति ॥ पक्षे—आत्मोचितमङ्गीकृतं वनान्तवासं वा त्यक्त्वा युद्धाय चापलं मा कार्षीः । अङ्गीकृता परिपालने सत्यवादिता स्यादिति भावः ॥

यथार्थमेतत्कुरु राजवाक्यं विचार्य मा लाघवसंश्रयी भूः ।
हितोपदेशेषु पराङ्मुखानामदूरसंस्था विपदो हि पुंसाम् ॥ २७ ॥

तत्पूर्वोक्तं यथार्थं स्वरूपं राजवाक्यं रावणवचनं कुरु सत्यार्थत्वात् । एतत्परिपालनं

कुरुष्वेति विचार्य परामृश्य राघवसंश्रयी राघवभाक् मा भूः । यतो हितानामुपदेशेषु पराङ्मुखानां पुंसां विपदो दूरसंस्थाः संनिधिवर्तिन्यः । अतो हि वचनपरिपालनं मा कर्तव्यमिति भावः ॥ पक्षे—कुरुराजवाक्यं धृतराष्ट्रवचनं विचार्य विचारणं कृत्वा लाघवसंश्रयी मा भूः । आज्ञालङ्घनं तस्य गुरोर्मा कुरुष्वेति तात्पर्यम् ॥

एवं विपक्षदूतेन व्याहृता वाक्यपद्धतिः ।
प्रतिजज्ञे सरस्वत्या हरिराजमुखोत्थया ॥ २८ ॥

हरिराजस्य सुग्रीवस्य मुखोत्थया सरस्वत्या वाण्या वाक्यपद्धतिः वचनपरम्परा विपक्षस्य रावणस्य दूतेन एवं पूर्वोक्तप्रकारेण व्याहृता उक्ता प्रतिजज्ञे प्रतिज्ञाता प्रत्युत्तरं तेन कृतमिति ॥ पक्षे—हरिः श्रीकृष्णः, राजा युधिष्ठिरः, ताभ्यां प्रत्युत्तरितम् ॥

अहो महन्नैपुणमस्य भूभृतो निवृत्तये नोदयितुं चिराय नः ।
भवन्ति सुव्यक्तमनात्मवेदिनः परोपदेशेषु विशेषपण्डिताः ॥ २९ ॥

अहो आश्चर्ये । नः अस्मान् निवृत्तये युद्धात्परावर्तनाय नोदयितुं प्रेरयितुं महन्नैपुणं कौशलमस्य भूभृतः रावणस्य । अत्र हेतुः—अनात्मवेदिनः सुव्यक्तं यथा स्यात्परोपदेशेषु विशेषपण्डिता भवन्ति ॥ पक्षे—भूभृतो धृतराष्ट्रस्य महत्कौशलम् ॥

स चेह राजा प्रतिदानपूर्वं शान्तिं न वाञ्छत्युचितां कुलस्य ।
दशाननस्यापि दशा न न स्यादमुष्य दीना हतबन्धुसूनोः ॥ ३० ॥

स च दृष्टो राजा रावणः चेद्यदि प्रतिदानं सीतायाः तत्पूर्वमुचितां योग्यां कुलस्य शान्तिं क्षमां न वाञ्छति तदा अमुष्य दशाननस्य दशा अवस्था दीना दुःखिता न न स्यात् । अपि तु स्यादेव । हता बन्धवः सूनवश्च यस्य ॥ पक्षे—दृष्टो राजा धृतराष्ट्रः कुलस्य कुरुवंशस्य दशाननस्य रावणस्य दशा न न स्यात् किं तु स्यादेव । दीना दुःखिता । हताः समन्ताद्विनष्टा बन्धवः सूनवो यस्य । यथा रावणोऽनयं प्रपन्नः सभृत्यो विनष्टः तथायमपीति ॥

शुभाशुभे कर्मणि संनिविष्टं धर्मो यथा पश्यति लोकमेकः ।
तथा जनश्चेदखिलोऽपि धर्मं जगत्यधर्मस्य कुतोऽवकाशः ॥ ३१ ॥

यथा एको धर्मः शुभे कर्मणि अशुभे च कर्मणि संनिविष्टं लोकं पश्यति । न तु शुभकर्मावस्थितस्यैव न वा अशुभकर्मावस्थितमेव । 'धर्मस्तु जानाति नरस्य तत्वम्' इति । तथा चेद्यदि । अखिलः संपूर्णो जनः धर्मं कर्म पश्यति तदा जगति संसारे अधर्मस्य कुतोऽवसरः । अधर्मो न स्यादेव । अत उभयरूपता लोकस्यापि कर्मापन्नं फलं साधारणं स्यात् । अतो यदि रामं युधिष्ठिरं वा शुभकर्मस्थं धर्मेण पश्यति तदा अधर्मस्य रावणस्य धृतराष्ट्रस्य वा स्यादेव तदुपचितकरणेनाधर्मो ममापीति भावः ॥

स एव तावत्प्रसमीक्ष्य धर्मं समाचरत्वात्महितं विधेयम्।
न यावदारोहति हन्त मौर्वी भीमानुजस्येष्वसनं खरारेः ॥ ३२ ॥

स एव रावण एव तावत्प्रसमीक्ष्य आत्मनो हितं विधेयं कर्तव्यं समाचरतु करोतु। यावत् खरारेः रामस्यानुजस्य लक्ष्मणस्य इष्वसनं चापं मौर्वी ज्या नारोहति नाक्रामति। भीमा भयंकरा। हन्त कष्टे ॥ पक्षे—स एव धृतराष्ट्र एव भीमस्यानुजस्यार्जुनस्य च खरस्तीक्ष्णः अरिर्यस्य स तस्य खरारेः शत्रोर्दुर्योधनस्येति भीमानुजस्य विशेषणम्। खरा तीक्ष्णा इति ज्याविशेषणं वा ॥

स सौष्ठवव्यञ्जितशौर्यमार्गैः प्रत्याहतो वानरराजवाक्यैः।
सद्यः पुरीं प्राप्य जनेश्वरे तद्वचो विषं सर्प इवोत्ससर्ज ॥ ३३ ॥

स दूतः पुरीं लङ्कां प्राप्य ततश्च जनेश्वरे तत्सुग्रीवोक्तं वचः उत्ससर्ज उत्सृष्टवान् कथितवान्। विषं सर्प इव। स किंभूतः। वानरश्रेष्ठस्य सुग्रीवस्य वचनैः प्रत्याहतस्तिरस्कृतः। सौष्ठवेन व्यञ्जितः प्रकाशितः शौर्यस्य शूरत्वस्य मार्गो येषु तैः ॥ पक्षे—स दूतो नरराजस्यार्जुनस्य वाक्यैः प्रत्याहत इव एवं जनेश्वरे धृतराष्ट्रे तद्वचः उत्ससर्ज। तस्य पुरीं प्राप्येति ॥

आगामिसंग्रामविपन्निवृत्तावुपायचिन्ताकुलचित्तवृत्तेः।
क्षत्राभियुक्तस्य विमोहभाजः प्रजागरोऽभूद्रजनीषु राज्ञः ॥ ३४ ॥

राज्ञो रावणस्य रजनीषु रात्रिषु प्रजागरो जागरणं बभूव। कीदृशस्य। क्षत्रेण रामेणाभियुक्तस्य। अत एव विमोहभाजो विशेषेण मुग्धस्य कर्तव्यविचारशून्यस्य। आगामिन्यां संग्रामविपत्तौ निवृत्त्यर्थमुपायस्य कारणस्य या चिन्ता तया आकुलिता चित्तवृत्तिर्यस्य सः ॥ पक्षे—राज्ञो धृतराष्ट्रस्य। क्षत्रेण विदुरेणाभियुक्तस्य। 'क्षत्ता द्वाःपालसारथ्ये क्षत्रियाशूद्रजे सुते' इति विश्वः ॥

अत्रान्तरे भूमिपतेः प्रियार्थं पयोधिसीमाधिगतोरुसैन्याः।
हरीश्वरा भूमिभृतोऽध्यरोहंस्तुङ्गां प्रतिज्ञामिव तुङ्गभूमिम् ॥ ३५ ॥

अत्रान्तरे अनन्तरं हरीश्वरा वानराधिपाः सुवेलनाम्नः पर्वतस्य भूभृतः तुङ्गभूमिं शृङ्गमध्यरोहन् अधिरूढाः। भूमिपते रामस्य प्रिया सीता तदर्थं तदानयनार्थम्। कीदृशाः। पयोधिसीमां समुद्रमर्यादामधिगतानि उरूणि बृहन्ति सैन्यानि यैस्ते। तथा तुङ्गां प्रतिज्ञामिव तामपि कृतवन्तः ॥ पक्षे—भूभृतो राजानः हरिः श्रीकृष्णः ईश्वरो येषां ते। कृष्णमुख्या इत्यर्थः। तुङ्गां प्रतिज्ञामध्यरोहन् तुङ्गा भूमिराश्रयो यस्यास्तां तुङ्गभूमिमिति वा। भूमिपतेर्युधिष्ठिरस्य प्रियार्थं प्रीतिनिमित्तं पयोधिसीमान्ते अधिगतं प्राप्तमुरु महत्सैन्यं यैस्ते ॥

भूभृच्छिरश्छेदविधानदक्षे मायाविनि क्षुभ्यति राक्षसौघे ।
वैधव्यचिन्ताचकितैश्चकम्पे नरेन्द्रदारैर्धरणीसमेतैः[1] ॥ ३६ ॥

धरणीसमेतैः पृथिव्या सह रामदारैश्चकम्पे सीतया कम्पितम् । वैधव्यचिन्तया चकितैस्त्रस्तैः । राक्षसानामोघे समूहे क्षुभ्यति चलति । कीदृशे । मायाविनि मायायुक्ते । भूभृतो रामस्य शिरो भ्रुकुटिका या तच्छेदनस्य विधानदक्षे कुशले । 'शिरो ना पिप्पलीमूले स्याद्भ्रमन्यां च योषिति' इति विश्वः । मायाशिरोदर्शनेन सीतया क्षुभितमिति भावः ॥ पक्षे—नरेन्द्रदारैः दुर्योधनपत्नीभिः । भूभृतो दुर्योधनादेः । राक्षसौघे घटोत्कचसैन्ये । मायाविनि सकपटे । शेषं समानम् । 'भूभृच्छिरश्छेदविधानदक्षः' इत्यपि पाठान्तरं दृष्टम् ॥

अथाङ्गदं बिभ्रतमुल्लसन्महः सुरेन्द्रसूनोर्हृदयैकनन्दनम् ।
समीक्ष्य कार्यस्य गतिं नरेश्वरो हरिं परेषां नगरीमजीगमत् ॥ ३७ ॥

अनन्तरं नरेश्वरो रामः हरिं वानरमङ्गदनामानं परेषां शत्रूणां राक्षसानां नगरीं लङ्कामजीगमत् । प्रजिगा(घा)य । अप्रेषयत् । कीदृशम् । उल्लसन्महस्तेजो दीप्तिं बिभ्रतं धारयन्तम् । सुरेन्द्रसूनोर्वालिनो हृदयैकनन्दनमुल्लासकं तत्पुत्रत्वात् । किं कृत्वा । कार्यस्य कर्तव्यस्य गतिं विचार्य प्रथमं दूतप्रस्थापनं क्रियते ततः संधिसंपत्तौ विग्रह इति नीतिः । 'गतिः स्त्री मार्गगमने ज्ञाने यात्राभ्युपाययोः' इति विश्वः ॥ पक्षे—नरेश्वरो युधिष्ठिरः । परस्य दुर्योधनस्य नगरीं हरिं श्रीकृष्णं प्राहिणोत् । अङ्गदं भुजालंकारं बिभ्रतम् । उल्लसन्महः तेजोयुक्तम् । नरेन्द्रसूनोरर्जुनस्य हृदयैकनन्दनं मादकम् । तुल्यमन्यत् ॥

स याननिर्ह्रादमुदीरयन्खे सुदूरमध्वानमतीत्य वेगात् ।
प्रपद्य मध्यं परमण्डलस्य ददर्श राजानमभीः सभायाम् ॥ ३८ ॥

सोऽङ्गदः सभायां राजानं रावणं ददर्शापश्यत् । कीदृशः । अभीः भयशून्यः । परमण्डलस्य शत्रुसमूहस्य मध्यं प्रतिपद्य गत्वा । सुदूरमध्वानं वर्त्मातिक्रम्य वेगात् जवात् । खे आकाशे यानस्य वाहनस्य निर्ह्रादं शब्दमुदीरयन् प्रकाशयन् इति । 'सभार्यम्' इति क्वचित्पाठः । मन्दोदरीसहितम् ॥ पक्षे—स हरिः श्रीकृष्णः राजानं धृतराष्ट्रं ददर्श सभायाम् भीष्मो द्रोणाचार्यो यस्य परगुणस्य परराष्ट्रस्य मध्यं प्रतिपद्य ॥

बलाधिपैर्भीष्ममुखैरुपेतं प्रसिद्धभूरिश्रवसं हरिस्तम् ।
सकर्णशल्यं वच इत्यवोचत्प्रकाशगम्भीरमहार्थजातम् ॥ ३९ ॥

बलाधिपैः स हरिरङ्गदो वानरस्तं रावणमग्रे वर्तमानं वचः अवोचत् उक्तवान् । कीदृशम् । प्रकाशं गम्भीरं महच्चार्थजातमर्थसमूहो यत्र तम् । बलाधिपैः सैनिकराक्षसे-

---

१. 'शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च' इति तु युक्तम्.

श्वरैः भीष्माणि भयानकानि मुखानि चक्राणि येषां तथाविधैः रुपेतं युक्तम् । प्रसिद्धानि भूरीणि बहूनि श्रवांसि कर्णानि यस्य स तथा । दशाननत्वात्कर्णबाहुल्यम् । कीदृशं वचः । कर्णयोर्व्यथाजनकं शल्यमिव ॥ पक्षे—स हरिः श्रीकृष्णस्तं धृतराष्ट्रं वचः अवोचत् । भीष्मो मुखं प्रधानं येषां तैः सैन्याधिपैरुपेतम् । प्रसिद्धो भूरिश्रवः सोमको राजविशेषो यत्र । सह कर्णेन राधेयेन शल्येन मद्राधिपेन वर्तते स सकर्णशल्यमिति ॥

अनात्मवंशोचितमार्यगर्हितं स बन्धुमित्रस्य कुलस्य घस्मरम् ।
त्वमग्रयायी नयपारदृश्वनां विरोधमीदृग्विधमीहसे कथम् ॥ ४० ॥

ईदृग्विधं विरोधं वैरं त्वं कथमीहसे कथं चेष्टसे । त्वं कीदृशः । नयस्य नीतिशास्त्रस्य पारदृश्वनां पारगामिनामग्रयायी प्रथमगण्यः । कीदृशं विरोधम् । नात्मनो वंशस्योचितं योग्यम् । श्रेष्ठैर्गर्हितम् । सह मित्रबन्धुभिर्वर्तते यत् कुलस्य तस्य घस्मरं मर्दनशीलं नाशकम् । तुल्यमुभयत्र ॥

तस्मादस्माद्विरम कलहाद्गोप्तुमात्मीयगोत्रं
क्षोणीभर्त्रे वितर मुषितामात्मपालो महेलाम् ।
नो चेज्जिष्णोरुपहर शरश्रेणये प्राणराशी-
न्मोहान्धानां युधि निजसुहृद्बन्धुभृत्यात्मजानाम् ॥ ४१ ॥

तस्मात्कलहाद्विरम उपशान्तो भव । आत्मीयगोत्रं स्ववर्गं गोप्तुं रक्षितुं क्षोणीभर्त्रे रामाय महेलां सीतां वितर प्रयच्छ । मुषितां चौर्येणानीताम् । आत्मपालः आत्मरक्षकः सन्निति । नो चेद्यदि एवं न करिष्यसि तदा जिष्णोर्जयनशीलस्य रामस्य शराणां श्रेणये परम्परायै मोहान्धानां मुग्धानां सुहृदां मित्राणां बन्धूनां स्वजनानां भृत्यानां सेवकानां निजानामात्मीयानामात्मजन्मनां पुत्राणां प्राणराशीनुपाहर उपहारीकुरु । वितरेति यावत् । युधि संग्रामे ॥ पक्षे—क्षोणीभर्त्रे युधिष्ठिराय । मुषितां द्यूतच्छद्मना जितां महती चासाविला चेति महेला पृथिवी तां वितर परित्यज देहि । नो चेज्जिष्णोरर्जुनस्य शरश्रेणये इति । तुल्यमन्यत् । 'महेला महिला वा' इति शब्दप्रकाशः । 'इला कलत्रे सोमस्य धरण्यां गवि वाचि वा' इति मेदिनीकरः । क्षोण्या भद्रमस्मादिति क्षोणीभद्रो राजा । 'भद्रं शिवे खञ्जरीटे' इति ॥

निशितविशिखशम्बोत्कृत्तवीरोत्तमाङ्ग-
स्तबकितलहरीभिः शोणिताम्भःसरिद्भिः ।
नयनिपुण न यावत्क्षाल्यते क्षोणिचक्रं
द्रुतमुपनतकालस्तावदाधत्स्व संधिम् ॥ ४२ ॥

नयो नीतिः तस्य। पुनः तस्य संबोधने हे रावण धृतराष्ट्र वा। तावत्संधिं द्रुतं शीघ्रमाधत्स्व कुरु। उपनतः कालो यस्य सः। यावत्क्षोणिचक्रं क्षितिमण्डलं शोणितमिवाम्भो जलं यत्र एवं सरिद्भिर्नदीभिर्न क्षाल्यते न धार्यते। शम्बो वज्रं तद्वद्विशिखा बाणा निशितास्तीक्ष्णास्तैरुत्कृत्तैश्छिन्नैः वीराणामुत्तमाङ्गैः शिरोभिः स्तबकिता गुच्छसहिता लहरी कन्दरा यत्र। 'शम्बं स्यान्मुसलाग्रेऽथ लोहमण्डलकेऽपि वा' इति विश्वः। क्वापि 'सङ्ग' इति पाठः। तत्र निशितानां विशिखानां सङ्गेन समूहेन। संमितमन्यत् ॥

वैधव्यव्यथितसुतावरोधबोध-
प्रक्रान्तप्रतिरवमेदुरोदराणि ।
स्युर्यावन्न तव गृहाण्यतो विचारं
त्वं तावत्कुरुकुलशान्तये यतस्व ॥ ४३ ॥

त्वं तावत्कुलशान्तये यतस्व यत्नमाचरस्व। कुलं रक्ष। अतोऽत्र विचारं च कुरु। यावत्तव गृहाणि वैधव्येन व्यथितानां सुतावरोधानां स्नुषाणां पुत्राणां बोधे प्रतिबोधे प्रक्रान्तेन गतेन प्रतिरवेण मेदुरोदराणि गम्भीरा[ण्य]न्तराणि मध्यानि येषां तानि एवं न स्युरिति॥ पक्षे—कुरुकुलशान्तये यतस्व। विचारं यथा स्यादत्रेति। तुल्यमन्यत् ॥

द्विजोत्तमाकीर्णकुशस्थलाढ्यान्ग्रामानपि त्वं नियतं विसृज्य ।
सुखप्रसादेन युधिष्ठिरेण संधाय मोदस्व चिराय राज्ञा ॥ ४४ ॥

राज्ञा रामेण युधि संग्रामे स्थिरेण प्रसन्नेन निश्चितं संधिं कृत्वा चिराय सुखमनुभव। किं कृत्वा। अपि समुच्चये। सीतां विसृज्य। द्विजोत्तमेन ब्राह्मणश्रेष्ठेनाकीर्णेन कुशस्थलेनाढ्यान् युक्तान् ॥ पक्षे—युधिष्ठिरेण राज्ञा संधाय द्विजोत्तमेनाकीर्णेन कुशस्थलेन ग्रामविशेषेण युक्तान् पञ्च ग्रामानिन्द्रप्रस्थादीन् दत्त्वा राज्यं कुरु ॥

परिगतनयविद्यां बिभ्रतो राजलक्ष्मीं
विषयरसनिवासे यौवने वर्तमानान् ।
बलतुलितमहेन्द्रानात्मजानात्मतुल्या-
न्समरभुवि मुधा त्वं मान्तकायोपकार्षीः[1] ॥ ४५ ॥

आत्मनस्तुल्यान्पुत्रान् बलेन सामर्थ्येन तुलितमहेन्द्रान् समरभुवि अन्तकाय मा उपकुर्याः समीपं मा कार्षीः यमसदनं प्रापयेति। परिगता नीतिविद्या यस्यास्तां राजलक्ष्मीं बिभ्रतः विषयरसस्य स्रक्चन्दनादेर्निवासे ॥ पक्षे—यौवने[2] स्थित इति वर्तमान इति। आकारप्रश्लेषो वृद्धः ॥

१. 'कार्षीः' इत्यपि, 'हार्षीः' इत्यपि च पाठः- २. 'यौवनेऽवर्तमानोऽस्थित इत्यकारप्रश्लेषे वृद्धः' इति पाठो भवेत्.

इति हरिवदनाद्विनिःसृता सा परिषदि सज्जनसंमतापि वाणी।
शशिरुचिरिव गह्वरे महाद्रेर्मनसि चकार परस्य न प्रवेशम् ॥ ४६ ॥

सा वाणी परस्य शत्रो रावणस्य प्रवेशनं न चकार। तस्यातिरुचिरा न बभूवेति परिषदि सज्जनेन संमता स्वीकृता वा। महाद्रेः पर्वतस्य गह्वरे शशिरुचिरिव। तत्र सदैव तमस उपयोगादिति। पूर्वोक्तप्रकारेण हरेरङ्गदस्य वदनान्मुखाद्विनिःसृता बहिर्गतेति॥ पक्षे—हरेः कृष्णस्य वदनात्। परस्य धृतराष्ट्रस्य। सज्जनेन भीष्मादिनेति॥

त्वरितमिति वृषाकपेर्गिरोद्यद्भ्रुकुटिभुजङ्गमलाञ्छनो विपक्षः।
रिपुकुलबलसारभूतमेनं तम इव तिग्मरुचिं निरोद्धुमैच्छत् ॥ ४७ ॥

विपक्षो रावणः एनमङ्गदं रिपुकुलानां शत्रुकुलानां वानरबलानां सारभूतं श्रेष्ठं सामर्थ्यभूतं वा। 'सारो बले मज्जनि च स्थिरांशे न्याये च नीरे च धने च सारम्' इति नानार्थः। 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च' इति विश्वः। तिग्मरुचिमादित्यं तमो राहुरिव। त्वरितं शीघ्रं निरोद्धुं प्रतिरोद्धुमैच्छत्। स कीदृशः। वृषाकपेरङ्गदस्य गिरा उद्यन्ती या भ्रुकुटिः रोषेण भ्रुवोः कुटिः सैव भुजङ्गमः कालसर्प इव। स एव लाञ्छनं चिह्नं यस्य स तथा॥ पक्षे—दुर्योधनः एनं श्रीकृष्णम्। वृषाकपेः श्रीकृष्णस्य। रिपुकुलबलस्य पाण्डुकुलसैन्यस्य। 'वृषाकपिः पुमान् कृष्णे शंकरे जातवेदसि' इति मेदिनीकरः। यथा तमोऽन्धकारः तिग्मरुचिमादित्यमिव। यथान्धकार आदित्यं रोद्धुमिच्छति तद्वत्। तस्य तेजो रोद्धुं न शक्यते, किं तु अन्धकार एव नश्यति तथात्रापीत्यर्थः॥

अधिपतिबलनुन्नेष्वञ्जसासौबलाग्रे
त्वरितकृतविरोधप्रक्रमेषु प्रकामम्।
परिषदि निजतेजस्तेजयामास पूर्वं
हरिरिव बलियज्ञे विक्रमाक्रान्तलोकः ॥ ४८ ॥

असौ अङ्गदः परिषदि संसदि निजमात्मीयं तेजः तेजयामास दीपयामास। 'निजमात्मीयनित्ययोः' इति विश्वः। बलियज्ञे हरिरिव। विक्रमेणाक्रान्तो लोकः परिषज्जनो येन स तथा। हरिपक्षे—विक्रमेण पादविक्षेपेण त्रिविक्रमरूपेण क्रान्तो लोको भुवनत्रयं येन स तथा। 'लोकस्तु भुवने जने' इत्यमरः। पूर्वं प्रथमतः बलानां सैन्यानामग्रे अभिमुखे त्वरितं कृतो विरोधो यत्रैवंभूतेषु प्रक्रमेषु विक्रमेषु अधिपतीनामीश्वराणां बलेन नुन्नेषु सत्सु। अञ्जसा तत्त्वेन प्रकाशेनेत्यर्थः॥ पक्षे—हरिः श्रीकृष्णः निजं तेजस्तेजयामास। विश्वरूपं चकारेत्यर्थः। सौबलाग्रे शकुन्यग्रे। बलियज्ञे पूर्वमेवेति। शेषं तुल्यम्॥

दिवि च भुवि च तुल्यं तायमानैर्महोभिः
प्रमथितपरधामा लोचनानि प्रतिघ्नन् ।
अरितिमिरनिरासाद्दर्शयन्विश्वरूपं
मिहिर इव स उद्यन्सर्वभूतैरशंसि ॥ ४९ ॥

सोऽङ्गदः सर्वभूतैः प्राणिभिरशंसि स्तुतः । उद्यन्मिहिर इव रविरिव । सोऽपि सर्वभूतैः स्तूयते । उभयविशेषणम् । प्रमथितं परेषां शत्रूणां धाम तेजो येन प्रमथितं परेषामन्येषां वा धाम येन । लोचनानि प्रतिघ्नन् परेषां लोकानां नयनानि प्रतिघ्नन् पराभवं नयन् । तुल्यमेकदैव वा दिवि भुवि च तायमानैः प्रसरद्भिः तेजोभिरिति हेतौ तृतीया । अरितुल्यस्य तिमिरस्य निरासात् विश्वस्य संसारस्य रूपं दर्शयत् ॥ पक्षे—हरिः श्रीकृष्णः विश्वरूपम् । 'रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः । ग्रन्थवृत्तौ नाटकादौ चाकारश्लेषयोरपि ॥' इति विश्वः ॥

परप्रतापातपसंनिपातात्प्रकीर्य तेजः प्रतिपक्षकक्षे ।
सकृत्प्रशान्त्या पुनरेव शान्तिं प्रापानुकुर्वन्रविकान्तचेष्टाम् ॥ ५० ॥

सोऽङ्गदः कृष्णो वा पुनरेव शान्तिं प्रपन्नः सकृत्प्रशान्त्या प्रशमनेन रविकान्तस्य सूर्यकान्तस्य चेष्टामनुकुर्वन् । सोऽपि स्वयमेव शाम्यतीति । विपक्षः शत्रुः कक्षं तृणमिवेति तत्र तेजः प्रकीर्य प्रक्षिप्य । परेषां शत्रूणां प्रताप एव आतपः तस्य संनिपातात्सङ्गात् ॥ पक्षे—कृष्णेनापि विश्वरूपं स्वयमेव संहृतमिति ॥

स क्षिप्रं नृपजननीतिपारदर्शी स्वैर्वाक्यैः कृतपरपक्षकर्णभेदः ।
भूभर्तुर्निकटमुपेत्य वैरिवर्गं व्याचष्टे प्रतिनियतोग्रदण्डसाध्यम् ॥ ५१ ॥

सोऽङ्गदः भूभर्तुः रामस्य निकटं समीपमुपेत्य नृपजनानां नीतेः पारगः स्वैर्वाक्यैः कृतः परपक्षस्य रावणपक्षस्य भेदो येन स कर्णकटुवचनोक्तिः ॥ पक्षे—स कृष्णः । भूभर्तुः युधिष्ठिरस्य कृतः परपक्षस्य परमिलितदुर्योधनपक्षपातिनः कर्णस्य राधेयस्य भेदः जापो येन प्रत्येकम् । शेषं समानम् ॥

अथाप्तकालो नृपतिर्न्ययुङ्क्त बलानि रोषादभिषेणनाय ।
युगान्तमासाद्य यथाम्बुराशिः स्वाम्भांसि लोकत्रयसंप्लवाय ॥ ५२ ॥

अथेत्यनन्तरं नृपतिः रामो बलानि सैन्यानि रोषात्कोपात् अभिषेणनाय शत्रुसंमुखगमनाय न्ययुङ्क्त नियोजयामास आज्ञापयामास । आप्तो गृहीतः कालः समयो येन तथा । अम्बुराशिरिव । यथा युगान्तकालमासाद्य लोकत्रयसंप्लवाय पयोधिरम्भांसि नियुङ्क्ते ॥ पक्षे—नृपतिर्युधिष्ठिरः आप्तकालः चतुर्दशवर्षाधिकसमयः । 'यत्सेनयाभिगमनमरौ तदभिषेणनम्' इत्यमरः । शेषं समानम् । अभिपूर्वात्सेनाशब्दाण्णिजन्ताल्ल्युटि । 'उपसर्गात्सुनोति–' इत्यादिना षत्वम् । 'लुटि तेरलु–' इति टेर्लोपे रूपम् ॥

साकं भुवा मत्सरिणां मनांसि प्रकम्पयन्भूमिपतिः प्रपेदे।
द्विषो जिगीषुर्जमदग्निजन्मा रामः कुरुक्षेत्रमिवाजिभूमिम् ॥ ९३ ॥

भूपतिः रामः आजिभूमिं संग्रामभूमिं प्रपेदे प्रपन्नः। मत्सरिणां सक्रोधानां मनांसि चित्तानि भुवा साकं भूम्या सह प्रकम्पयन् प्रकर्षेण कम्पयन्। कीदृशः सः। द्विषः शत्रून् जिगीषुः जेतुमिच्छुः। जगदग्निजन्मापरो रामः कुरुक्षेत्रमिव ॥ पक्षे—भूमिपतिः युधिष्ठिरः कुरुक्षेत्रमाजिभूमिं संग्रामस्थानं प्रपेदे गतः। जमदग्निजन्मा राम इति। शेषं समानम् ॥

अथ गतवति राज्ञः सोदरे शत्रुपक्षं
श्रितवति तदभीष्टं संविधित्सौ युयुत्सौ।
अपि सुभटसमेता सा चमूः कान्तिमत्तां
युवतिरिव न लेभे कर्णशोभाविहीना ॥ ९४ ॥

अनन्तरं सा चमूः सेना प्रकरणाद्रावणस्य कान्तिमत्तां न लेभे न प्राप। कर्णयोः श्रोत्रयोः शोभया विहीना युवतिरिव। रावणस्य सोदरे विभीषणे युयुत्सौ योद्धुमिच्छौ तस्य शत्रोः रामस्य पक्षं श्रितवति तस्य रामस्याभीष्टमाकाङ्क्षितं विधित्सौ विधातुमिच्छौ। शत्रुपक्षं रामपक्षं गतवति सति। 'मासार्धके पार्श्वग्राह्ये सखिसहाययोरपि। केशादेः परतो वृन्दे बले साध्यविरोधयोः ॥' इति मेदिनीकरः ॥ पक्षे—सा चमूः दुर्योधनसेना कर्णाद्राधेयाच्छोभा कर्णशोभा तया विहीना रहिता। भीष्मेण महारथगणनायां 'घृणी कर्णः प्रमादी च तेन मेऽर्धरथी मतः' इति कर्णोऽर्धरथतया गणितः। कोपाद्यावद्भीष्मो जीवति तावन्न योद्धव्यमिति संग्रामं त्यक्त्वा गतो दिनदशकम्—इति भारते। राज्ञो दुर्योधनस्य सोदरे युयुत्सौ तन्नामके धार्तराष्ट्रे शत्रुपक्षं पाण्डवपक्षं गतवति सति। शेषं तुल्यम्। तदभीष्टं तस्य पाण्डोरिति। श्रितवति आश्रित इति ॥

अथोद्धतस्यन्दनसप्तिपत्तिहस्तिस्फुटाटोपनिकामभीमा।
रणाङ्गणं प्रापदशास्यसेनापतिप्रणुन्ना पृतना परेषाम् ॥ ९५ ॥

अनन्तरं परेषां शत्रूणां राक्षसानां पृतना सेना रणाङ्गणं प्राप। दशास्यो रावणः स एव सेनापतिः तेन प्रणुन्ना प्रेरिता। स किंभूतः। सा किंभूता। उद्धतानां स्यन्दनसप्तीनां रथाश्वानां हस्तिनां स्फुटेनाटोपेन प्रपञ्चेन निकाममत्यर्थं भीमा भयानका ॥ पक्षे—परेषां दुर्योधनादीनामशास्या अशासनीया चासौ सेना च अशास्यसेना रणाङ्गणं प्रापत्। पत्या दुर्योधनेन नुन्ना प्रेरिता। पृतनानेकयुक्ता। 'पृतना तु स्त्रियां सेनामात्रसेनाविशेषयोः' इति विश्वः। रचनाविशेषवती। शेषं संमितम् ॥

विलोक्य जिष्णुः परमण्डलं तच्चिन्तां प्रियापायभयाद्गतोऽपि।
स्थैर्यं प्रपेदे हरियोगलब्धस्वास्थ्यः प्रभाविक्रमशोभिरामः ॥ ९६ ॥

रामो हरिर्वानरः सुग्रीवस्तस्य योगेन संबन्धेन लब्धं स्वास्थ्यं सुस्थितिर्येन सः स्थैर्यं प्रपेदे । कीदृशः । जिष्णुः जयनशीलः परस्य शत्रोर्मण्डलं सैन्यसमूहं वा विलोक्य दृष्ट्वा । प्रियायाः सीतायाः अपायादपगमाद्भयाच्चिन्तां गतोऽपीति । कीदृशं तत् । प्रभया दीप्त्या विक्रमेण पराक्रमेण शोभि शोभायुक्तम् ॥ पक्षे—जिष्णुरर्जुनः स्थैर्यं प्रपेदे । कीदृशः । प्रियाणां बान्धवानामपायाच्चिन्तां गतोऽपि सचिन्तोऽपि । हरेः श्रीकृष्णस्य योगतः उपनिषत्कथितात् लब्धस्वास्थ्य इति । प्रभावि प्रभावयुक्तं क्रमशः परिप्राप्य अभिरामः सुन्दरः । 'योगोऽपूर्वार्थसंप्राप्तौ ध्यानसंगतियुक्तिषु । वपुःस्थैर्यप्रभेदे च विष्कम्भादिषु भेषजे ॥' इति विश्वः ॥

कृत्वोपसत्तिं तरसा गुरूणां नरेन्द्रसूनुः कलितज्यधन्वा ।
बभूव भीमो भुवि शम्बरस्य वधं विधित्सन्निव कामदेवः ॥ ९७ ॥

नरेन्द्रसूनुः रामः भीमो भयानको बभूव । तरसा वेगेन गुरूणामुपसत्तिमुपासनां कृत्वा । कीदृशः । कलिता ज्या यत्र एवं धनुर्यस्य । अधिज्यधनुरित्यर्थः । कल्पवल्ली कामधेनुरिति । भुवि संग्रामस्थाने शम्बरस्य दैत्यविशेषस्य वधं नाशं विधित्सन् विधातुमिच्छन् कामदेवः कन्दर्प इव ॥ पक्षे—नरेन्द्रसूनुः युधिष्ठिरः भीमो बभूव । गुरूणां भीष्मद्रोणादीनाम् । शेषं समानम् । युधिष्ठिरो भीष्मादीन्नमस्कर्तुं परबलं गतः—इति भारते ॥

इति हलधरणीप्रसूतकादम्बकुलतिलकचक्रवर्तिवीरश्री**कामदेव**प्रोत्साहित-**कविराज**पण्डितविरचिते राघवपाण्डवीये महाकाव्ये कामदेवाङ्के शशधरविरचिते राघवपाण्डवीयप्रकाशे च सैन्यसमुद्योगो लङ्काकुरुक्षेत्रगमनो नाम सप्तमः सर्गः ॥

## अष्टमः सर्गः ।

अथ रघुनृपसूनोरेकतस्त्यायमाने
　बधिरितजगदण्डे चण्डकोदण्डघोषे ।
युगपदुभयसेनोज्जृम्भितोद्दामभेरी-
　पटहमुरजनादध्मानगर्भं नभोऽभूत् ॥ १ ॥

अथेत्यनन्तरं रघुनाम्नो नृपस्य सूनो रामस्य । राघवस्येति यावत् । लघु शीघ्रं यथा स्यात् नृपसूनोर्युधिष्ठिरस्य वा चण्डस्य कोदण्डस्य धनुषो घोषेण शब्देन बधिरितं जगदण्डं यथा स्यादेवमेकतस्त्यायमाने उपचिते सति नभो गगनमेवमभूत् बभूव । बधिरितं जगदण्डं ब्रह्माण्डं विश्वचक्रं यत्रेत्यर्थः । किंभूतम् । युगपदेवोभयसेनयोः रामरावणसेनयोः युधिष्ठिरदुर्योधनसेनयोर्वा उज्जृम्भितेन वर्धितेनोद्दामेनोद्भटेन प्रचण्डेन भेरीपटहमुरजानां नादेन शब्देनाध्मातो गर्भोऽभ्यन्तरं यस्य तत्तथा ॥

रणभुवि रणरेणौ तूर्यनादे च तूर्णं
स्थगयति जगदण्डं न्यक्कृतान्यप्रवृत्ति ।
अहह न निरधारि प्राणिनां चेतनाभिः
क्षितिमयमुत विश्वं शब्दतन्मात्रकं वा ॥ २ ॥

अहह आश्चर्यं रणभुवि संग्रामभूमौ प्राणिनां चेतनाभिरिति न निरधारि न निर्धारितम् । किं तत् । विश्वम् । किम् । क्षितिमयं क्षितिविकारः । पार्थिवमित्यर्थः । रजःसमाक्रान्तत्वात् । पक्षान्तरे । शब्दतन्मात्रकं वा शब्दस्वरूपमिति । कथं रणभुवि संग्रामभूमौ रणरेणौ संग्रामरजसि तूर्णं शीघ्रं तूर्यनादे च पटहादिध्वनौ च जगदण्डं विश्वं स्थगयति पिदधति सतीति । न्यक्कृता अधःकृता अन्येषां प्रवृत्तिर्यत्र तदिति विश्वविशेषणं क्रियाविशेषणं वा ॥

काष्ठाः क्वापि विलिल्यिरे कवलिताः केनापि भानोस्त्विषः
कुत्राप्यस्तमहर्जगाम कुहचिन्नष्टं नभोमण्डलम् ।
केनाज्ञायि विलोचनस्य विषयः कालक्षपा क्वाप्यभू-
द्ब्रह्माण्डोदरपूरणं रणमहीरेणौ तदा तन्वति ॥ ३ ॥

तदा रामरावणयोः कुरुपाण्डवयोः सेनयोः वायुवेगादुत्थिते रेणौ ब्रह्माण्डोदरस्य विश्वोदरस्य पूरणं तन्वति सति क्वापि कालक्षपा युगान्तकालरात्रिः संहारकालोऽभूत् । यत्र विलोचनस्य विषयः चक्षुर्ग्राह्यं वस्तु केनापि नाज्ञायि न ज्ञातम् । तत्स्वरूपमेवाह—काष्ठा दिशः क्वापि विलिल्यिरे विलीनाः । अकस्मादेवाज्ञाता इत्यर्थः । केनापि भानोः सूर्यस्य त्विषो दीप्तयः कवलिता भक्षिताः । ग्रस्ता इत्यर्थः । अहो कष्टे । दिनं कुत्राप्यस्तं जगाम । नभोमण्डलं कुहचिन्नष्टम् । कुत्राप्यदर्शनं गतम् । यद्वा नकारः शिरश्चालने । काष्ठा दिशः क्वापि न विलिल्यिरे । अपि तु विलीना एव । एवं सर्वत्र लोचनविषयः केनापि अज्ञायि । अपि तु न केनापि ज्ञातमित्यर्थः ॥

आरम्भे मदसलिलं मदद्विपानां माद्यद्दिक्करिकरशीकरं ततश्च ।
भूरेणुर्जलधरगर्भवारि पीत्वा स्वःसिन्धोरपि निरपादपां प्रवाहम् ॥ ४ ॥

आरम्भे उद्यमकाले प्रथमतः भुवि पतितं मदद्विपानां मत्तानां हस्तिनां मदसलिलं कर्म भूरेणुर्निरपात् निष्पिबति स्म । ततश्चाग्रिमकाले विरमति सति माद्यतां मत्तानां दिक्करिणां कराणां हस्तानां शीकरं मदजलं निरपात् । ततश्चोर्ध्वं गच्छति सति जलधराणां मेघानां गर्भस्य वारि पीत्वा स्वःसिन्धोः स्वर्गस्य सिन्धोरपि ततः क्रमेणापां प्रवाहं निरपादिति । 'प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणि' इति विश्वः ॥

प्रचलितहरिचक्रच्छिन्नमूलो विसर्प-
न्नभसि कृतनिरोधः प्रातिकूल्यं नराणाम् ।

सपदि धरणिरेणुस्तिग्मभानुं न्यरौत्सी-
दपर इव महीयान्रंहसा सैंहिकेयः ॥ ५ ॥

धरण्या भूमेरुत्थितो रेणुः तिग्मभानुमादित्यं न्यरौत्सीत् अरुद्ध । सपदि तत्क्षणात् रंहसा वेगेनापरो महीयान् बृहत्तरः सैंहिकेयो राहुरिव । द्वयोरपि विशेषणम् । प्रचलिता ये हरयोऽश्वा वानराश्च तेषां चक्रेण समूहेन छिन्नं मूलं यस्य स तथा ॥ पक्षे—प्रचलितेन हरेर्नारायणस्य चक्रेण छिन्नं मूलं यस्य । नराणां प्रातिकूल्यादानुकूल्यापगमात् । नभसि आकाशे कृतः निरोधो येन स तथा । समानमुभयत्र ॥

आसरोजभवसद्म सर्वतो लोकमुद्रसति रेणुमण्डले ।
नूनमाहितभयं न्यमीलयद्भास्करेन्दुनयने विराट् पुमान् ॥ ६ ॥

सरोजातपङ्कजाद्भवो जन्म यस्य स ब्रह्मा तस्य सद्म गृहं तत्सरोजभवसद्म तत आ सरोजभवसद्मपर्यन्तं सर्वतः सर्वत्र रेणुमण्डले रजःसमूहे लोकं भुवनमुद्रसति सति आक्रामति सति। नूनमुत्प्रेक्षते—विराट् पुमान् परमपुरुषो नारायणः भास्करेन्दुनयने सूर्यचन्द्ररूपे चक्षुषी न्यमीलयत् निमीलयति स्म । आहितभयं यथा स्यादेवमिति । उभयत्र समानम् ॥

उद्दामदुर्दिनविसंष्ठुलवृत्तिरारा-
दारब्धगात्रमलनो वसनान्तसङ्गी ।
आमृष्टगण्डतिलकानि मुखान्यचुम्ब-
द्रागीव रेणुनिकरः सुरसुन्दरीणाम् ॥ ७ ॥

रेणूनां निकरः समूहः सुरसुन्दरीणां मुखानि अचुम्बत् चुम्बति स्म । तत्रापि गत इति भावः । रागीव कामुक इव । आमृष्टानि प्रोञ्छितानि गण्डतिलकानि येषु तानि तद्व्याप्तत्वादेव । उभयं विशिनष्टि—आराद्दूरात् उद्दामेन दुर्दिनेन विसंष्ठुला वृत्तिर्यस्य सः । 'वृत्तिर्विवरणे जीवे कैशिक्यादिप्रवर्तने' इति मेदिनीकरः । 'आराद्दूरसमीपयोः' इति विश्वः । आरब्धः प्रारब्धो गात्रस्य मलनो विमर्दो येन स तथा । वसनान्तसङ्गी वस्त्रलग्नः । सर्वत्र समानम् ॥

अकालजलदावलीगलितरक्तधाराहता
करीन्द्रकरटक्षरन्मदमहोर्मिरुद्धासिता ।
रणव्रणितसैनिकक्षतजसिक्तमूला च सा
रजोजवनिका शनैरपससार सेनामुखात् ॥ ८ ॥

रज एव जवनिका आच्छादनपटः सा सेनाया मुखादपससार दूरीबभूव । शनैर्मन्दं यथा स्यात् । कीदृशी । अकाले या जलदावली मेघपङ्क्तिः तस्या गलितया रक्त-

धारया हता छिन्नमूला। तत्कालं रुधिरवृष्टया छिन्नमूलेत्यर्थः। रक्तवृष्टिः तदा संग्रामसूचिकेति भावः। ततश्च करीन्द्रस्य करटाद्गण्डस्थलात् क्षरद्भिर्मदमहोर्मिभिः रुद्धा अत एवासिता श्यामेति। 'करटः कटकाकयोः' इति विश्वः। रणे समरे व्रणिताः क्षतयुक्ता ये सैनिकास्तेषां क्षतजेन रुधिरेण सिक्तं मूलं यस्याः ता तथा॥

आभूमण्डलमापयोधिवलयादाचक्रवालाचला-
दातारापथमापुरंदरपदादापद्मसद्मालयात्।
आब्रह्माण्डकटाहकर्परपुटं तूर्णं जुघूर्णे भय-
भ्राम्यद्दिक्करिकीर्णभूमिवलयैर्भेरीरवैर्भैरवैः॥ ९॥

भैरवैर्भयंकरैर्भेरीरवैर्दुन्दुभिशब्दैः जुघूर्णे घूर्णितम्। आ भूमण्डलं भूमण्डलपर्यन्तम्। 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावः। आ पयोधिवलयात् समुद्रवलयपर्यन्तात्। आ चक्रवालाचलात् लोकालोकपर्वतपर्यन्तम्। 'चक्रवालोऽद्रिभेदे स्याच्चक्रवालं तु मण्डलम्' इति विश्वः। आ तारापथं नक्षत्रपथपर्यन्तम्। नक्षत्रपथं यावत्। आ पुरंदरपदात् इन्द्रलोकपर्यन्तम्। आ पद्मसद्मालयात् पद्मसद्मा लक्ष्मीः तस्या आलयो विष्णुस्तत्पर्यन्तम्। यद्वा ब्रह्मलोकपर्यन्तम्। पद्मं सद्म गृहं यस्येति वा। ब्रह्माण्डः कटाह इव तस्य कर्परं कपालं तस्य पुटं संपुटं तत्पर्यन्तम्। 'कर्परं स्यात्कपाले च शास्त्रभेदकटाहयोः' इति मेदिनीकरः। 'तैलादिपाकपात्रे ना कटाहः कूर्मकर्परे' इति विश्वः। तूर्णं शीघ्रं भयेन त्रासेन भ्राम्यत्करिभिः कीर्णं विक्षिप्तं वा यद्भूमिवलयं यथा स्यादेवमिति॥

दिव्यास्त्रग्रामशिक्षानिकषमरिकुलारब्धवैराग्निहोमं
स्वर्योषाकर्षदिव्यौषधममरपुरीवर्त्मसोपानखण्डम्।
कीर्तिक्षीराब्धिमूलस्थलमखिलजगच्छल्यनिर्हारयत्नं
प्राणद्यूतं व्यदीव्यन्नृपकुलमहसां मण्डनं शौर्यशौण्डाः॥ १०॥

शौर्येण शौण्डाः ख्यातास्तदीया योधाः प्राणद्यूतं प्राणैर्द्यूतं यत्र तेन। 'दिवः कर्म च' इति कर्मणि द्वितीया। चिक्रीडुः। प्राणद्यूतं किंभूतम्। दिव्यानामस्त्रग्रामाणां शिक्षाया अभ्यासस्य निकषं परीक्षास्थानम्। तथा—अरिकुलैः शत्रुसमूहैरारब्धो वैरमेवाग्निः तत्र होमो यत्र। स्वर्गस्य योषायाः सुराङ्गनायाश्चाकर्षणं दिव्यौषधम्। अमरपुरीवर्त्मनः अमरावतीमार्गस्य सोपानखण्डमारोहणनिःश्रेणिखण्डम्। कीर्तिरिव क्षीराब्धिः दुग्धसमुद्रस्तस्य मूलस्थलम् उत्पत्तिस्थानम्। स्थलेति नानार्थम्। अखिलस्य जगतः शल्यस्य नाराचस्य रावणदुर्योधनरूपस्य निर्हारे उत्पाटने यत्नो यत्र। नृपकुलमहसां मण्डनमलंकरणम्॥

---

१. 'हव्यम्' इति, 'होत्रम्' इत्यपि पाठः. २. 'करणे' इति क्वाचित्के पाठे 'साधकतमे' इत्यर्थः.

पुरो बलानां विजयध्वजश्रियं समादधानेन भृशं हनूमता ।
प्रवेशिता श्रोत्रपथेन विद्विषां मनःसु भीतिर्नदतातिभैरवम् ॥ ११ ॥

हनूमता विद्विषां शत्रूणां राक्षसानां मनःसु भीतिर्भयं श्रोत्रपथेन कर्णमार्गेण प्रवेशिता । अतिभैरवं यथा स्यादेवं नदता कण्ठगर्जं कुर्वता । बलानां सैन्यानां पुरोऽग्रे विशिष्टस्य जयस्य यो ध्वजः तस्य श्रियं भृशमत्यर्थं दधानेन ॥ पक्षे—विजयोऽर्जुनः तस्य ध्वजस्याश्रयं दधानेन । अर्जुनध्वजस्थितेन हनूमता । द्विषतां दुर्योधनादीनाम् । तुल्यमन्यत् ॥

बलोद्धतानीलगजाभिरामा तीव्राच्छभल्ला शरभालभीमा ।
महोदयारम्भपरा गभीरतारप्रणादा कुमुदानुबद्धा ॥ १२ ॥
उदीर्णतालार्जुनकृष्णसारप्रौढायुधा मन्युबलोर्जिता च ।
महीपतेः सल्लसदुत्तमौजाः सेना शतानीकमुखी ननाद ॥ १३ ॥

महीपते रामस्य सेना ननाद शब्दं चकार । कीदृशी । बलेन सामर्थ्यवता वीरेणोद्धता । 'बलं च सैन्ये सामर्थ्ये बल्युक्तेऽन्यलिङ्गकम्' इति यादवप्रकाशः । नीलगजाभ्यां वानरविशेषाभ्यामभिरामा मनोहरा । तीव्रा अच्छभल्लाः जाम्बवत्प्रभृतयो यत्र । शरभालेन वानरविशेषेण भीमा भयानका । महोदयायोपचयाय य आरम्भ उद्यमस्तत्परा । गभीरतारश्च महान्प्रणादो यस्यां सा । तारोऽत्युच्चध्वनिः यत्र सः । कुमुदेन वानरविशेषेणानुबद्धा संबद्धा । उदीर्णा उत्पाटिता ये ताला अर्जुना कृष्णसाराश्च वृक्षविशेषास्त एव प्रौढान्यायुधानि यत्र सा । 'कृष्णसारः शिंशिपायां पुंसि च स्यान्मृगान्तरे' इति विश्वः । मन्युना क्रोधेन बलेन चोर्जिता । सत् श्रेष्ठं लसदुल्लसदुत्तममोजो बलं यस्याः सा । शतमनीकानि मुखे यस्याः सा ॥ पक्षे—महीपतेर्युधिष्ठिरस्य बलेनोद्धता आसमन्ततः नीलाः श्यामा ये गजा हस्तिनः तैरभिरामा । तीव्राणि तीक्ष्णानि अच्छानि निर्मलानि भल्लान्यायुधविशेषाणि यत्र । शराणां भालेन तेजसा । 'भालं तेजोललाटयोः' इति विश्वः । कुमुदेन राजविशेषेणानुबद्धा । उदीर्णास्ताला हस्तास्फाला याभ्याम् एवंभूतयोरर्जुनकृष्णयोः सारेण बलेन प्रौढान्यायुधानि यत्र । 'तालः कालक्रियामाने करास्फाले द्रुमान्तरे' इति मेदिनीकरः । मन्योर्युधामन्योः भटविशेषस्य बलेनोर्जिता । सन् शोभनं लसन् उत्तमौजा योधविशेषो यस्याम् । शतानीको योधविशेषः । युधामन्यूत्तमौजसौ पाञ्चालौ द्रुपदपुत्रौ—इति भारते ॥

अकम्पनोद्दीपितमेघनादा प्रहस्तनाथा दृढचित्रकाया ।
आविर्भवद्वैरनरान्तकोग्रा सामर्षवेगोज्ज्वललोहिताक्षा ॥ १४ ॥
ससिन्धुराजातरसोग्रभीष्मा सहेतिशल्या कृतवर्मनिष्ठा ।
समिन्महाकर्मसु दक्षिणा च रुरोध शत्रून्परवाहिनी सा ॥ १५ ॥

सा परवाहिनी रावणसेना शत्रून् रामादीन् रुरोध अरुधत्। कीदृशी। अकम्पनेन राक्षसविशेषेण उद्दीपितो मेघनाद इन्द्रजिद्यत्र सा तथा। प्रहस्तो नाम राक्षसो नाथ ईश्वरो यत्र। दृढः संग्रामस्थिरः चित्रकायो नाम राक्षसो यत्र सा। आविर्भवद्वैरं यस्य एवंभूतेन नरान्तकेन रावणपुत्रेण उग्रा भयानका। 'प्रकाशे प्रादुराविः स्यात्' इत्यमरः। सह अमर्षेण वर्तते इति सामर्षः एवं यो वेगो जवः तेनोज्ज्वलो लोहिताक्षो नाम राक्षसो यत्र सा। ससिन्धुरा सगजा। जात उत्पन्नो रसो यस्याम् उत्पन्नवीररसा। उग्रा प्रचण्डा भीष्मा भयानका वा उग्रभीष्मा। सह हेतिभिः शल्यैश्च आयुधविशेषैर्वर्तते या सा। कृतानि सज्जानि यानि वर्माणि सन्नाहाः तेषु निष्ठा यस्याः। समितः संग्रामस्य महाकर्मसु महाव्यापारेषु दक्षिणा प्रवीणा। 'प्रवीणे दक्षिणः स्त्री तु दिशि दानप्रतिष्ठयोः' इति मेदिनीकरः॥ पक्षे—सा परवाहिनी दुर्योधनसेना शत्रून् युधिष्ठिरादीन् रुरोध। कीदृशी। न कम्पते इत्यकम्पना निर्भया इति भिन्नपदम्। यद्वा अकम्पनोऽत्रस्त उद्दीपितो मेघनादस्येव नादो यत्र। प्रकृष्टा हस्ता येषां राजानो नाथा यत्र सा। दृढचित्रका उज्ज्वलतिलका। 'चित्रकस्तिलके ना तु व्याघ्रभिच्चश्वपालिषु' इति मेदिनीकरः। आविर्भवद्वैरा[2] ये नराः पुरुषाः त एवान्तकोपमा यत्र सा। यद्वा। आविर्भवद्वैरेण नराणामन्तका यत्र सा। उग्रा भयानका। तथा आमर्षस्य क्रोधस्य वेगेन त्वरया उज्ज्वला लोहिते अक्षिणी येषां ते लोहिताक्षाः रक्तनेत्राः पुरुषा यत्र। ससिन्धुराजा जयद्रथयुक्ता। तरसा बलेन उग्रो भीष्मो यत्र। सहेतिः सायुधः शल्यो मद्राधिपो यत्र। कृतवर्मणि राजविशेषे निष्ठा निर्वहणं यस्याः। अयं त्रिगर्ताधिपतिः। तुल्यमन्यत्॥

द्रुतमधरितवज्रमुष्टिघातं स्फुरदशनिप्रभहेतिदुर्निरीक्ष्यम्।
रणभुवि विदधे महाभुजाभ्यामरिकुलमर्दनमश्विनन्दनाभ्याम्॥ १६॥

अश्विनन्दनाभ्यां मैन्दद्विविदाभ्यां वानराभ्यामरेः शत्रो रावणस्य मर्दनं विदधे विहितम्। रणभुवि संग्रामभूमौ। कीदृशाभ्याम्। महाभुजाभ्यामाजानुबाहुभ्यां द्रुतं शीघ्रम् अधरितो वज्रमुष्टे राक्षसस्य घातो यत्र। स्फुरन्नशनिप्रभस्य रक्षोविशेषस्य हेतिरस्त्रं तेन दुर्निरीक्ष्यं यथा स्यादेवं क्रियाविशेषणद्वयम्॥ पक्षे—अश्विनन्दनाभ्यां नकुलसहदेवाभ्याम् अरिकुलमर्दनं दुर्योधनादिमर्दनम्। द्रुतं शीघ्रमधरितः तिरस्कृतः वज्रमुष्टेर्वज्रसदृशमुष्टेर्घातो यत्र। स्फुरन्ती अशनेरिव वज्रस्येव प्रभा यस्या एवंभूता या हेतिः तया दुर्निरीक्ष्यमिति विशेषणद्वयम्। शेषं समानम्॥

रथान्रथैर्वाजिभिरर्वतोऽभ्रन्निभानिभैः पत्तिभिरेव पत्तीन्।
समीरसूनुः समरे परेषां बलानि वीरः प्रसभं बभञ्ज॥ १७॥

---

१. 'दृढचित्रकार्या' इति पाठमाश्रित्य 'चित्रकार्यो राक्षसविशेषः' इति राघवपक्षे, 'आर्या महती' इति पाण्डवपक्षे व्याख्यातम्.

समीरस्य पुत्रो हनूमान् परेषां रिपूणां राक्षसानां बलानि सैन्यानि बभञ्ज। किं कुर्वन्। रथैः स्यन्दनैः रथान् घ्नन् हिंसन्। वाजिभिरश्वैः अर्वतोऽश्वान्, इभैर्गजैः इभान् करिणः, पत्तिभिरेव पत्तीन् पदातीन्। समरे संग्रामे प्रसभं हठेन वीरः विक्रान्तः॥ पक्षे—समीरसूनुः भीमसेनः परेषां दुर्योधनादीनाम्। तुल्यमन्यत्॥

व्यूहप्रतिव्यूहविधानदक्षः सेनापतिः पावकलब्धजन्मा।
नरेन्द्रसैन्यानि जुगोप नीलः शिखण्डिसैन्यानि यथाम्बुवाहः॥ १८॥

पावकादग्नेर्लब्धं जन्म येन स पावकलब्धजन्मा नीलः नरेंद्रस्य रामस्य सैन्यानि जुगोप ररक्ष। नीलः श्यामलोऽम्बुवाहः शिखण्डिसैन्यानि रक्षति यथा तद्वत्। 'शिखण्डी ना कपाले स्याद्वाङ्क्यारिमयूरयोः' इति मेदिनीकरः। 'सैन्यं क्लीबं बले सेनासमवेते तु वाच्यवत्' इति च। व्यूहस्य सेनारचनाप्रकारस्य सूचीमुखादेः प्रतिव्यूहस्य विधाने रक्षणे दक्षः कुशलः॥ पक्षे—पावकजन्मा धृष्टद्युम्नः। स किलाग्निकुण्डात्समभूत्—इति पुराणम्। नरेन्द्रसैन्यानि युधिष्ठिरस्य सैन्यानि। धृष्टद्युम्नः सेनापतिरभूत् इत्यर्थः। शेषं समानम्॥

व्याधूतनानायुधयोधभीमां मदान्धमातङ्गघटापटिष्ठाम्।
पलाशिभिर्द्राग्विशिखैर्बबाधे सहस्रगोः सूनुररातिसेनाम्॥ १९॥

सहस्रगोरादित्यस्य सूनुः सुग्रीवः अरातेः रावणस्य सेनां बबाधे बाधते स्म। सेनां कीदृशीम्। मदेनान्धानां हस्तिनां घटाभिः संघैः पटिष्ठां पटुतराम्। व्याधूतानि कम्पितानि नानाविधानि आयुधानि यैरेवंविधैर्योधैर्भीमां भयानकाम्। विशिखैर्बाणैः द्राक् झटिति पलाशिभिः राक्षसैर्लक्षिताम्। लक्षणे तृतीया। पलं मांसमशितुं शीलं येषां ते पलाशिनः॥ पक्षे—पलाशिभिर्मांसभक्षणदक्षैः विशिखैर्बाणैः अरातेर्दुर्योधनस्य सैन्यानि। सहस्रं गावो दृष्टयो यस्य स सहस्रगुरिन्द्रस्तस्य सूनुरर्जुनः॥

विभीषणो दर्शितभर्तृभक्तिर्युद्धे हिडिम्बाकुलभूः प्रसर्पन्।
क्षपाचरेन्द्रः क्षपयांबभूव नैकान्यनीकानि निशाचराणाम्॥ २०॥

विभीषणो नाम क्षपाचराणामीश्वरः निशाचराणां राक्षसानामनीकानि सैन्यानि क्षपयांबभूव क्षिणोति स्म। किंभूतः। दर्शिता भर्तुः रामस्य भक्तिर्येन। युद्धे हि प्रसर्पन् गच्छन्। डिम्बेनाभयेनाकुला भूः स्थानं यस्य। 'डिम्बोऽभयध्वनावण्डे पुप्फुसे प्लीहनि प्लवे' इति विश्वः। 'भूः स्थानमात्रे कथिता धरण्यामपि योषिति' इति च॥ पक्षे—हिडिम्बाकुलभूः घटोत्कचः दुर्योधनपक्षवर्तिनां निशाचराणां नैकानीत्यर्थः॥

परिस्फुरत्कार्मुकमण्डलोऽथ नृपात्मजो वानरवीरलक्ष्मा।
तताप विद्वेषिबलं पृषत्कैर्लोकान्मयूखैरिव तिग्मभानुः॥ २१॥

अथानन्तरं नृपात्मजो रामः विद्वेषिणः शत्रोः रावणस्य बलं सैन्यं पृषत्कैर्बाणैः त-

ताप अतपत्। किंभूतः। परिस्फुरत्कार्मुकमण्डलं यस्य सः। वानराणां वीराः सुग्रीवादयो लक्ष्माणि चिह्नानि यस्य। चण्डभानुर्मयूखैः किरणैः लोकानिव ॥ पक्षे—नृपात्मजोऽर्जुनः विद्वेषिबलं दुर्योधनसैन्यं वानरवीरो हनूमान् लक्ष्म ध्वजचिह्नं यस्य स तथा। तुल्यमन्यत्॥

लूनस्यन्दनकेतुपत्तितुरगछत्राक्षधूर्बन्धुराः
सैन्यस्त्रीकुचकुम्भमौक्तिकबहिष्कारस्फुरत्साहसाः।
वीरोरःस्थलदारणारुणमुखाः सैन्येषु देवद्विषां
प्राणोन्मोचननिर्विकारचरिताश्चेरुस्तदीयाः शराः॥ २२॥

तदीयास्तस्य रामस्येमे तदीयाः शरा बाणाः चेरुः चरन्ति स्म। पतन्ति स्मेत्यर्थः। केषु। देवद्विषां राक्षसानां बलेषु। ते कीदृशाः। लूनैश्छिन्नैः स्यन्दनानां केतुभिर्ध्वजैः पत्तिभिः पदातिभिः तुरगैरश्वैः छत्रैरातपत्रैः अक्षधूर्भिः स्वकीलकैः बन्धुरा रम्याः। लूनेषु तेषु बन्धुरेति वा। 'बन्धूरबन्धुरौ रम्ये नम्रे हिंस्रे तु बन्धुरा' इति विश्वः। सैन्यानां सेनासमवेतानां योधानां स्त्रीकुचकुम्भतो मौक्तिकानां हाराणां बहिष्कारे दूरीकरणे स्फुरत्साहसं येषां ते तथा। तासां स्वामिनो वधादलंकारशून्यत्वात्। तथा—वीराणां योधानामुरःस्थलस्य वक्षसो दारणेन विदारणेन अरुणम्। अर्थाद्रक्तेन। मुखमग्रभागो येषाम्। 'बलात्कारकृते कृत्ये साहसं दमनेऽपि च' इति विश्वः॥ पक्षे—तदीया अर्जुनसंबन्धिनः सैन्येषु दुर्योधनादीनां चेरुः पतन्ति स्म। देवद्विषां दुर्योधनपक्षपातिनां राक्षसानां प्राणोन्मोचने निर्विकारचरिता इति योज्यम्। समानमन्यत्॥

निपातयन्तो ध्वजकाननानि विदारितोत्तुङ्गकरीन्द्रसेनाः।
महेन्द्रमुक्ताशनिसंनिकाशा न सेहिरे तस्य शरा विपक्षैः॥ २३॥

तस्य रामस्यार्जुनस्य वा शरा बाणा विपक्षैः रावणादिभिर्दुर्योधनादिभिर्वा न सेहिरे न सोढाः। कीदृशाः। ध्वजाः केतवः एव काननानि तानि निपातयन्तः ध्वजकाननानि ध्वजसमूहानिति वा। विदारिता उत्तुङ्गा करीन्द्रसेना गजोत्तमसेना यैस्ते। महेन्द्रेण शक्रेण मुक्तस्याशनेर्वज्रस्य संनिकाशास्तुल्याः। 'निकाशो निश्चये तुल्ये' इति विश्वः॥

चरंस्तथाजौ रघुराजसूनुर्विपाटितारातिचमूर्विपाटैः।
गाण्डीवमुच्छ्रायि धनुर्विधुन्वन्साक्षान्नरो देव इवाबभासे॥ २४॥

रघुराजसूनुः रामः नरो मनुष्यः साक्षात्प्रत्यक्षं कृतशरीरपरिग्रहो देवो विष्णुः आबभासे शुशुभे आजौ समरे चरन्। विपाटैर्बाणैः विपाटिता अरातिचमूः शत्रुसेना येन सः। गाण्डीवमिवोच्छ्रायि उद्रेकयुक्तं धनुर्विधुन्वन् कम्पयन्। 'साक्षात्प्रत्यक्षतुल्ययोः' इति विश्वः॥ पक्षे—नरोऽर्जुनः उच्छ्रायि गाण्डीवं धनुर्विधुन्वन्। साक्षाद्रघुराजसूनुर्देवो राम इव। शेषं समानम्॥

अथ रणभुवि भीष्मः प्रोच्चलन्मेघनादः[1]

स्फुरदविरलरोपारोपदुर्दर्शचापः।

द्विषदयुतनिपाते नित्यबद्धप्रतिज्ञः

स्फुटमलभत दोष्णोर्विक्रमस्यावकाशम्॥ २५॥

अथानन्तरं मेघनादो राक्षसः दोष्णोर्भुजयोर्विक्रमस्य स्फुटं प्रव्यक्तमवकाशमलभत प्राप्तवान्। रणभुवि भीष्मो भयानकः प्रोचलद्यथा स्यादेवं स्फुरतामविरलानां निबिडानां रोपाणां बाणानामारोपणैर्दुर्दर्शश्चापो धनुर्यस्य सः। द्विषतां शत्रूणामयुतस्य दशसहस्रस्य निपाते नित्यं बद्धा प्रतिज्ञा येन सः। 'रोपो रोपणबाणयोः' इति मेदिनीकरः॥ पक्षे—भीष्मो गाङ्गेयः प्रोचलन् सिंहनादो यस्य सः। दशदिवसपर्यन्तं द्विषतां शत्रूणामयुतानि दशसहस्राणि नित्यं प्रत्यहं घातयिष्यामीति भीष्मेण प्रतिज्ञातम्॥

रोमाञ्चिता इव भुवो गिरयः प्ररोह-

त्पक्षा इवाभ्रपटलीजटिला इवाशाः।

अन्तः शकुन्तिभिरिवाञ्चितमन्तरिक्षं

तद्बाणसंततितिरस्करणादभूवन्॥ २६॥

तस्य मेघनादस्य भीष्मस्य वा भयानकस्य बाणसंतत्या तिरस्करणात् भुवो रोमाञ्चिताः कण्टकिता इव गिरयः पर्वताः प्ररोहत्पक्षा इव जायमानपक्षा इव। आशा दिशः अभ्राणां मेघानां पटलीभिः जटिला इव। अन्तरिक्षं गगनाभ्यन्तरं शकुन्तिभिः पक्षिभिः अञ्चितं व्याप्तमिव। एतान्येवमभूवन्। तद्बाणसंततेः तिरस्करणादन्योन्यक्षेपणादेवमभूवन्निति वा॥

सुरेन्द्रसंतानभुवाभिमन्युना महारथो भग्नमनोरथः कृतः।

परैर्दुरीक्ष्यः स बभूव तेजसा रविर्यथा मध्यमधिष्ठितो दिवः॥ २७॥

महारथो मेघनादः परैः शत्रुभिः दुर्निरीक्ष्यः दुर्दर्शो बभूव। तेजसा दिवो मध्यमधिष्ठितो मध्यदिने रविरिव। सोऽपि तेजसा दुर्निरीक्ष्यो भवति। 'तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसि' इति मेदिनीकरः। स कीदृशः। सुरेन्द्रसंतानभुवा वालिपुत्रेणाङ्गदेनाभिमन्युना अभिगतरोषेण भग्नो मनोरथो यस्य स तथा। कृतं हिंसितमस्येति कृतः। हिंसक इत्यर्थः। 'कृतं युगेऽलमर्थे च विहिते हिंसिते त्रिषु' इति विश्वः॥ पक्षे—स महारथो भीष्मः परैः शत्रुभिर्दुर्निरीक्ष्यः। कृच्छ्रनिरीक्ष्य इत्यर्थः। अभिमन्युना सुभद्रापुत्रेण भग्नमनोरथः कृतः। सुरेन्द्रसंतानः अर्जुनः स एव भूरुत्पत्तिर्यस्येति। तस्माद्वा भूरिति वा॥

---

१. 'प्रोच्छल' कलि०.

तेन द्विषां दुष्करदर्शनेन मुक्तः शराशीविषराशिरुग्रः ।
क्षपामुखे ध्वान्तवदन्तरिक्षं निरन्तरालं न चिराच्चकार ॥ २८ ॥

शरा आशीविषाः एव सर्पबाणाः तेषां राशिः समूहः उग्रो भयानकः उपक्रमे ध्वान्तवत् अन्तरिक्षं गगनमचिरात् निरन्तरालमवकाशशून्यं पिहितं चकार कृतवान् । नकारः शिरश्चालने । अपि तु चिराच्चकारेति । यद्वा चिरान्निरन्तरालं न चकार । अचिरकालमेवेत्यर्थः । कीदृशः । तेन मेघनादेन मुक्तस्त्यक्तः । कथंभूतेन तेन । द्विषां शत्रूणां दुष्करदर्शनेन ॥ पक्षे—तेन भीष्मेण शरा आशीविषा इव शराशीविषास्तेषां राशिर्मुक्तः । अर्थात्पाण्डवसैन्ये क्षपामुखे प्रदोषे ध्वान्तमिवेत्यत्र योज्यम् ॥

तथाशान्तनवोद्योगे मेघनादे यथाध्वगाः ।
अवापुः प्राणसंदेहमुदारावानरेश्वराः ॥ २९ ॥

मेघनादे इन्द्रजिति अशान्तनवोद्योगे सति न शान्तो नवोऽभिनवो वा उद्योगो यस्य संग्रामश्रमेणाक्लिष्टे सति । यद्वा शान्तनवो भीष्मः तद्वदुद्योगो रणाय यस्य स तादृशे । उदारा उद्भटा वानरेश्वराः सुग्रीवादयः प्राणसंदेहमवापुः । यथा मेघनादे सति अध्वगाः पथिकाः ॥ पक्षे—शान्तनवस्य भीष्मस्योद्योगे मेघवन्नादः शब्दो यत्र एवंभूते सति । नरेश्वरा राजानः अर्थात् विपक्षाः । प्राणसंदेहमवापुः । उदारा एव ॥ क्वचित्तु 'तथा शान्तनवोद्योगो मेघनादो यथाध्वगः' इति पाठः । अत्र मेघनादो रावणपुत्रः तथाशान्तनवोद्योगो वृत्तः । यथाध्वगा मार्गगा वानरेश्वराः प्राणसंदेहमवापुरिति ॥ पक्षे—तथा शान्तनवस्य भीष्मस्योद्योगो वृत्तः । यथा नरेश्वराः प्राणसंदेहमवापुरेव । उदारा वा उच्चैराराविणः ॥

अस्त्रैरनालीढवपुः परेषां धृतायुधो यावदमित्रमेकः ।
मनोरथं वैरिबलस्य भङ्क्त्वा श्वेतं यशःपुञ्जमसौ बबन्ध ॥ ३० ॥

असौ मेघनादः श्वेतं यशःपुञ्जं बबन्ध बद्धवान् । वैरिवर्गस्य मनोरथं भङ्क्त्वा विदार्य । कीदृशः । परेषां शत्रूणामस्त्रैरनालीढवपुरस्पृष्टदेहः एकः सन् । यावदमित्रं धृतायुधः । यावन्तोऽमित्राः शत्रवः तावन्तं लक्ष्यीकृत्येति । 'यावदवधारणे' इति समासः ॥ पक्षे—असौ भीष्मः श्वेतं गजविशेषं बबन्ध । यशःपुञ्जं यशोराशिमिव । एवमेवम् । यद्वा श्वेतनामानं भटश्रेष्ठं यशःपुञ्जं च बबन्ध । वैरिबलस्य मनो मानसं रथं च स्यन्दनं च भङ्क्त्वा । श्वेतोऽद्रिविशेषः तस्येश्वरः श्वेत इति । 'श्वेतो द्वीपाद्रिभेदयोः' इति ॥

नरनारायणौ साक्षादिव तौ रामलक्ष्मणौ ।
सचक्रौ स तिरश्चक्रे नागरूपधरैः शरैः ॥ ३१ ॥

स मेघनादः तौ रामलक्ष्मणौ कर्मणी सचक्रौ चक्रं सैन्यं तत्सहितौ नागरूपधरैः शरैर्बाणैः तिरश्चक्रे अवसन्नौ चकार । नागपाशैः तौ बद्धावित्यर्थः । साक्षान्नरनारायणा-

विव ॥ पक्षे—स भीष्मो नरनारायणौ कृष्णार्जुनौ तिरश्चक्रे अवसन्नौ चकार रामलक्ष्मणाविव ॥

दुर्निवार्यमपरैर्धरणीशस्तस्य वीर्यमवलोक्य सरोषः।
नागबद्ध इव मन्दरशैलः स्थैर्यमात्मगतमुत्सृजति स्म ॥ ३२ ॥

धरणीशो रामः आत्मगतं स्थैर्यं धैर्यमुत्सृजति स्म । मया जेतव्यमित्यादिप्रकारं मनोगतं स्थैर्यं तत्याजेत्यर्थः। क इव। नागैर्बद्धो मन्दरशैल इव सोऽपि मन्थनकाले नागबद्धः। तस्य मेघनादस्य स्थैर्यं सामर्थ्यमपरैरन्यैर्दुर्निवारणीयं विलोक्य सरोषः ॥ पक्षे—धरणीशोऽर्जुनः कृष्णो वा तस्य भीष्मस्य। समानं शेषम्। नागेन नागबाणेन॥

जिघांसया तस्य शरार्दितानि बलानि भग्नानि निरीक्षमाणः।
मनुष्यमूर्तिः पुरुषः पुराणो महीतलं मन्युवशाज्जगाम ॥ ३३ ॥

मनुष्यशरीरः पुराणः पुरुषो रामः मन्युवशादतिरोषान्महीतलं जगाम गतवान्। पतित इत्यर्थः। तस्य मेघनादस्य जिघांसया हननेच्छया शरेणार्थान्मेघनादस्यार्दितानि पीडितानि बलानि सैन्यानि भग्नानि निरीक्षमाणः ॥ पक्षे—मनुष्यमूर्तिः पुराणः पुरुषः श्रीकृष्णः अर्जुनो वा। तस्य भीष्मस्य जिघांसयेति। शेषं तुल्यम्। रोषेण रथादवतीर्य प्रतोदहस्तो भीष्माय धावित इति भारतम्॥

सपदि भुवननाथे तां दशां संप्रपन्ने
भ्रमति च हरिचक्रे लोलहेतिप्रताने।
सुरमुनिभिरवाचि स्वस्ति लोकत्रयाय
व्युदजनि परसैन्ये मङ्क्षु कोलाहलश्च ॥ ३४ ॥

सपदि तत्काले भुवननाथे रामे तां दशामवस्थां संप्रपन्ने सति हरिचक्रे वानरसमूहे भ्रमति सति लोलश्चञ्चलो हेतिप्रतानोऽस्त्रसमूहो यस्य एवंभूते इतस्ततो गते सति सुरमुनिभिर्नारदाद्यैर्लोकत्रयाय स्वस्ति कल्याणमुक्तम्। मङ्क्षु तत्क्षणादेवं परसैन्ये रावणसैन्ये कोलाहलो व्युदजनि विशेषेणोत्थित इति। जितमित्येवंरूप इत्यर्थः ॥ पक्षे—सपदि तत्क्षणादेव भुवननाथे श्रीकृष्णे तां दशां रथादवतीर्य धरणीगमनरूपां संप्रपन्ने सति हरिचक्रे सुदर्शने भ्रमति सति परसैन्ये दुर्योधनसैन्ये। शेषं समानम्। सुरैर्देवैर्मुनिभिश्च॥

निरीक्ष्य रामानुजमाकुलंस्तथा तदा विसंज्ञे भुवनत्रये भृशम्।
प्रभाववेदी भुवनत्रयप्रभोर्मुमोच न स्वां प्रकृतिं पितामहः ॥ ३५ ॥

पितामहो ब्रह्मा स्वां प्रकृतिं स्वभावं न मुमोच न तत्याज नोद्विग्नो बभूवेति। तस्मिन्काले भृशमत्यर्थेन भुवनत्रये विसंज्ञे सति रामानुजं लक्ष्मणं निरीक्ष्य दृष्ट्वा आकुलः

---

१. 'त्रयायेत्युदजनि' कलि०.

सन्। कुतो न मुमोचेत्याह—भुवनत्रयप्रभोर्नारायणांशस्य रामस्य प्रभाववेदी प्रभावज्ञः। आत्मनैव नागपाशबन्धनमोक्षणे कर्तव्ये इति ॥ पक्षे—पितामहो भीष्मः परं स्वां प्रकृतिं न मुमोच तथा आकुलः। रामो बलभद्रः तस्यानुजं कृष्णं निरीक्ष्य भुवनप्रभोः कृष्णस्य। शेषं समानम् ॥

अवान्न वायुर्निरवात्कृशानुः क्षितिश्चकम्पे जलधिर्जुघूर्णे।
आसीन्महोल्काजटिलं नभश्च किं वा तदोद्भ्रान्तमभून्न भूतम् ॥ ३६ ॥

तदा तस्मिन् काले किंवाभूतं प्राणिजातमुद्भ्रान्तं नाभूदपि तु सर्वमेव तथाभूदिति। वायुः समीरः नावात् न वहति स्म। कृशानुरग्निः निरवात् निर्वाणो बभूव। पृथ्वी चकम्पे अकम्पत्। समुद्रो जुघूर्णे घूर्णितोऽपि। विपरीतगतिरित्यर्थः। नभश्च गगनं च महोल्काभिर्जटिलमासीदिति। तुल्यमुभयत्र ॥

अथ भुवमवतीर्णः पन्नगारिः किरीटी
सपदि शमितमन्युः प्रीतिहृद्यैर्वचोभिः।
तमवजितभुजङ्गप्राभवाभ्यां भुजाभ्या-
मशिथिलमुपगूह्य स्वामवस्थामनैषीत् ॥ ३७ ॥

अथेत्यनन्तरं पन्नगारिर्गरुडः तं राममशिथिलं दृढं यथा स्यादेवं भुजाभ्यामुपगूह्यालिङ्ग्य स्वामवस्थां स्वकीयदशां निर्विषत्वमनैषीत् नीतवान्। कीदृशः। किरीटमस्यास्तीति किरीटी मुकुटवान्। सपदि शमितमन्युः तत्क्षणात्प्रशान्तरोषः प्रीतिहृद्यैर्मनोहरैर्वचोभिर्वाक्यैः। 'मन्युः क्रोधे शुचावपि' इति विश्वः। अवजितं भुजङ्गस्य नागस्य प्राभवं प्रभोर्भावं प्रभुत्वं याभ्यां भुजाभ्याम् ॥ पक्षे—किरीटी अर्जुनः तं कृष्णं तथाविधं प्रतोदहस्तं भुजाभ्यामवगूह्य शान्तरसं चकारेति भारतम्। किरीटी कथंभूतः। भुवमवतीर्णः। पन्नगारिः पन्नगानां सर्पाणामरिः। पाताले तेषां निर्जयात्। शेषं तुल्यम् ॥

दीप्तं यशः संयति लब्धवन्तं गाङ्गेयमुच्चैर्गतमात्मधाम्ना।
तृणीकृताखण्डलशत्रुमेनं राजा स्ववर्गैः सह बह्वमंस्त ॥ ३८ ॥

राजा रावणः स्ववर्गैः रक्षोभिः सह एनं मेघनादं बह्वमंस्त बृहत्तरं मेने। बहु मानमस्याकरोदित्यर्थः। दीप्तं प्रकाशं यशो लब्धवन्तं प्राप्तवन्तं संयति संग्रामे आत्मधाम्ना स्वतेजसा उच्चैः श्रेष्ठं गाङ्गेयं हिरण्यं गतम्। कनकसदृशतेजोयुक्तमित्यर्थः। तृणीकृतः तृणवन्निःसारत्वात् अवज्ञातश्च आखण्डलरूपः शत्रुर्येन। 'गाङ्गेयः स्यात्पुमान् भीष्मे क्लीबं स्वर्णकशेरुणोः' इति विश्वः ॥ पक्षे—राजा दुर्योधनः स्ववर्गैः कर्णादिभिः सह एनं गाङ्गेयं भीष्ममात्मधाम्ना स्वतेजसा उच्चैर्गतं संग्रामे दीप्तं यशो लब्धवन्तं श्रीकृष्णस्यापि तथाविधप्रतिज्ञाभङ्गविधानात्। तृणीकृत अखण्डलः संपूर्णः शत्रुर्येन। खण्डं

लातीति खण्डलः, न खण्डलः अखण्डलः, तृणीकृत अखण्डलः संपूर्णः शत्रुर्येनेति तुल्यमन्यत् ॥

तदा पुनः स्वां प्रकृतिं प्रपन्नौ निरीक्ष्य हृष्टौ नरदेववर्यौ ।
बलाधिनाथाः प्रसभं बभञ्जुः प्रचण्डवेगाः परमण्डलं ते ॥ ३९ ॥

ते बलानामधिनाथा ईश्वरा वानराः सुग्रीवादयः प्रचण्डवेगाः अतिशयितवेगशालिनः प्रसभमत्यर्थं परमण्डलं शत्रुसैन्यं बभञ्जुः भग्नं चक्रुः । तौ नरदेववर्यौ नरश्रेष्ठौ रामलक्ष्मणौ हृष्टौ हर्षयुक्तौ स्वां प्रकृतिमाकारं गतौ प्रपन्नौ निरीक्ष्य दृष्ट्वा ॥ पक्षे—नरदेववर्यौ कृष्णार्जुनौ । बलाधिनाथाः भीष्मादयः । परस्य शत्रोर्दुर्योधनस्येति । 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः' इति विश्वः ॥

आक्रान्तमन्तर्हरिनायकेन तेषां प्रतापेन कृशानुनेव ।
पुरत्रयं प्लुष्टमिवेश्वरेण विरोधिचक्रं चकितं चचाल ॥ ४० ॥

विरोधिचक्रं रावणसैन्यं चकितं त्रस्तं चचाल चलति स्म । रणादपससारेति यावत् । हरीणां वानराणां नायकेन श्रेष्ठेन हनूमत्प्रभृतिना अन्तरन्तरे आक्रान्तं कृताक्रमणं तेषां वानरश्रेष्ठानां प्रतापेन प्लुष्टं प्रतप्तम् । 'पुष्टम्'इति पाठे पूर्णम् । यथेश्वरेण शंभुना कृशानुना नेत्रवह्निना पुरत्रयं प्लुष्टं दग्धम् ॥ पक्षे—हरिः श्रीकृष्णो नायको यस्य तेनार्जुनेन तेषां पाण्डवसैन्यानां विरोधिचक्रं दुर्योधनसैन्यम् । शेषं तुल्यम् ॥

रोषेण धूम्राक्षमकम्पनं च प्रमथ्यसैन्यं पवमानसूनुः ।
व्ययोजयत्संयति जीवितेन तुङ्गेन दोष्णा तुलिताद्रिशृङ्गः ॥ ४१ ॥

पवमानस्य वायोः सूनुर्हनूमान् धूम्राक्षमकम्पनं च राक्षसं जीवितेन प्राणेन व्ययोजयत् वियुक्तं चकार । मारितावित्यर्थः । रोषेण क्रोधेन तयोः सैन्यं प्रमथ्य विलोड्य । तुङ्गेनोच्छ्रितेन दोष्णा भुजेन तुलितमद्रिशृङ्गं येन सः । पर्वतशृङ्गेन तौ हतावित्यर्थः ॥ पक्षे—पवमानसूनुर्भीमः सैन्यं सेनासमवेतं सैनिकं जीवितेन व्ययोजयत् । प्रमथ्यसैन्यं जघानेत्यर्थः । कीदृशम् । रोषेण धूम्राक्षं धूम्रनयनमकम्पनं कम्पशून्यं स्थिरम् । भुजेन तुलितं सदृशीकृतमद्रिशृङ्गं येनेति ॥

ततो निषङ्गी शरदी प्रहस्तः सेनापतिः क्रौञ्चमिवापगेयः ।
बलं बृहच्छक्तिधरो बिभेद मूर्छद्यशःपाण्डुसुतस्य राज्ञः ॥ ४२ ॥

ततोऽनन्तरं प्रहस्तो नाम सेनापतिः अर्थाद्रावणस्य राज्ञो दशरथसुतस्य रामस्य सैन्यं बिभेद भिन्नं चकार । किंभूतम् । बृहदतिशयितं मूर्छत् आधिक्यमुच्छ्रायं गतेन यशसा कीर्त्या पाण्डु गौरम् । स कीदृशः । निषङ्गी तूणवान् । शरं ददाति शरदं धनुः तदस्यास्तीति शरदी धनुर्धरः अस्त्रविशेषधारी वा । क इव । शक्तिधर इव । यथा स्कन्दः आपगेयो गङ्गासंभवः क्रौञ्चनामानं पर्वतं भिन्नवानिति ॥ पक्षे—आपगेयो

भीष्मः पाण्डुसुतस्य युधिष्ठिरस्य बलं बिभेद । मूर्छ्यशो यस्य । शरैर्दीप्रो हस्तो यस्य स तथा । शेषं समानम् ॥

प्रवीरलोकान्प्रशमं नयन्तं प्रतापकालानलमस्य दृष्ट्वा ।
यशोधनस्तन्निधनैकसाध्यां स्वपक्षरक्षां क्षितिपोऽनुमेने ॥ ४३ ॥

क्षितिं पातीति क्षितिपः रामः स्वपक्षस्य बलस्य रक्षामनुमेने मन्यते स्म । केन । हेतुगर्भविशेषणम् । तन्निधनैकसाध्यामिति । तस्य प्रहस्तस्य यन्निधनं प्रणाशः तदेकेन साध्यामित्यर्थः । यशांसि धनानि यस्य स यशोधनः । किं कृत्वा । अस्य प्रहस्तस्य प्रताप एव कालानलो युगान्ताग्निस्तम् । प्रकृष्टान्वीरलोकान् । प्रलयं विनाशं नयन्तं दृष्ट्वा विलोक्य । अन्यो युगान्ताग्निः लोकान् प्रलयं नयतीति साम्यम् ॥ पक्षे—क्षितिपो युधिष्ठिरोऽर्जुनो वा । तन्निधनैकसाध्यां भीष्मविनाशसाध्याम् । अस्य भीष्मस्य । शेषं तुल्यम् ॥

विक्रान्ता अपि धीमन्तस्तेऽपार्था हरिनायकाः ।
नक्तंचारिबलाधीशमभिपेतुर्जयार्थिनः ॥ ४४ ॥

ते हरिनायकाः कपीशाः नक्तं रात्रौ चरितुं शीलं येषां ते नक्तंचरा राक्षसाः तेषां बलस्याधीशमीश्वरं प्रहस्तं लक्ष्यीकृत्याभिपेतुः पतिताः । जयार्थिनो जयकाङ्क्षिणः । विक्रान्ताः विक्रमशालिनः । धीमन्तो बुद्धिमन्तः । तथापार्था अपगतप्रयोजनाः ॥ पक्षे—ते पार्थाः पृथायाः कुन्त्याः पुत्रा युधिष्ठिरादयः अरिबलानामधीशं भीष्ममभिपेतुः । नक्तं रात्रौ । हरिः कृष्णो नायको नेता येषां ते तथा ॥

निर्भिन्नमर्मणा देहस्पृहां हित्वा युयुत्सुना ।
परेभ्यस्तेन वीरेण वधोपायः प्रदर्शितः ॥ ४५ ॥

तेन वीरेण प्रहस्तेन परेभ्यः शत्रुभ्यः अर्थाद्वानरेभ्यः वधोपायः वधप्रकारः प्रदर्शितः कथितः । कीदृशेन । निर्भिन्नं मर्म यस्य तेन देहस्य स्वशरीरस्य स्पृहां काङ्क्षां हित्वा युयुत्सुना योद्धुमिच्छुना । जीवितेच्छाशून्येनेत्यर्थः ॥ पक्षे—तेन वीरेण भीष्मेण । परेभ्यः युधिष्ठिरादिभ्यः वधोपायः प्रदर्शितः इति । मृत्युर्मे शरै(ण)च्छन्नो देहो भवतु किं तेनास्माकम् [इति] युयुत्सुनेति शरशय्यां समानयेति भावः ॥

प्रवर्त्य भूयः समरं परश्शतान्विपक्षवीरान्नयतेयिमक्षयम् ।
पराक्रमस्तस्य धनंजयोद्भवप्रतापरुद्धोऽपि न पप्रथेतराम् ॥ ४६ ॥

तस्य प्रहस्तपराक्रमो न पप्रथेतराम् । अपि तु अत्यर्थेन प्रथितो बभूव । नकारः शिरश्चालने । क्वचित्तु 'विपप्रथे' इति पाठः । तत्र तु विशेषेण पप्रथेतरामिति । रुद्ध एव धनंजयादग्नेरुद्भवो यस्य स नीलनामा वानरेश्वरस्तस्य प्रतापेन रुद्धोऽवरुद्धः । कथंभूतस्य तस्य । भूयः पुनरपि समरं कृत्वा प्रवर्त्य परश्शतान् शताधिकान् विपक्षान् रिपून् यम-

गृहं नयतः प्रापयतः। शतात्परे परश्शताः शताधिकाः ॥ पक्षे—तस्य भीष्मस्य। धनंजयोऽर्जुनः तस्मादुद्भवेन प्रतापेन रुद्धोऽपीति ॥

प्रतिदिशमरिवीरानाशु विद्रावयित्वा
समरभुवि चरन्तं नायकं वाहिनीनाम्।
प्रसभमभिपपात प्रांशुधामाग्निजन्मा
फणिपतिमिव तीव्रं चण्डवेगः शिखण्डी ॥ ४७ ॥

प्रतिदिशमपि दिशि दिशि आशु शीघ्रमरिवीरान् शत्रून् विद्रावयित्वा समरभुवि चरन्तं भ्रममाणं वाहिनीनां नायकं प्रहस्तं राक्षसं सेनापतिमभिपपात संमुखं पतति स्म। कः। अग्निजन्मा नीलः। सेनापतिरित्यर्थः। कीदृशः। प्रांशु उच्चं धाम तेजो यस्य सः। चण्डो वेगो यस्य। अतिवेगवानित्यर्थः। तीव्रं फणिपतिं सर्पं शिखण्डी मयूर इव ॥ पक्षे—शिखण्डी द्रुपदपुत्रः पाञ्चालः तं वाहिनीनां नायकं सेनापतिं भीष्ममभिपपात संमुखं जगामेति। अग्नेर्यज्ञानलाज्जन्म यस्य सः। चण्डवेगः पतगराट् तीव्रमुग्रं फणिपतिमिव ॥

असह्यतेजाः प्रहरन्प्रसह्य मनोजवः स्यन्दनदीर्णभूमिः।
असौ विसर्पन्समरे समन्तान्न तच्छराणामभवच्छरव्यम् ॥ ४८ ॥

असह्यं सोढुमशक्यं तेजो यस्य सः असह्यतेजाः असौ नीलो नाम वानरपतिः तस्य प्रहस्तस्य शराणां शरव्यं वेध्यं नाभूत्। तच्छरलक्ष्यो न बभूवेत्यर्थः। प्रसह्य प्रहरन् प्रहारं कुर्वन्। परान् इति शेषः। मन इव जवो वेगो यस्य स मनोजवः। स्यन्दनेन रथेन दीर्णा भूमिर्येन सः समरे समन्ततो विसर्पन् गच्छन् ॥ पक्षे—असौ शिखण्डी तच्छराणां भीष्मशराणां शरव्यं नाभूत्। मनोजवेन वेगशालिना स्यन्दनेन रथेन दीर्णा भूमिर्येन। शेषं समानम् ॥

संख्ये संमुखतां यता रचयता रामान्वयस्य प्रियं
सद्यः संमदहृष्टलोमविलसद्वक्षःशिलां बिभ्रता।
अग्रे धाम शिखण्डिनः प्रथयता भ्राजिष्णुना जिष्णुना
नीलेनाम्बुमुचेव दावदहनः सेनापतिः पातितः ॥ ४९ ॥

संख्ये संग्रामे संमुखतां सांमुख्यं यता गच्छता रामान्वयस्य रामवंशस्य प्रियं रचयता नीलेन वानरेण सेनापतिः प्रहस्तो निपातितः। कीदृशेन। शिलां बिभ्रता बृहत्पाषाणखण्डं धारयता। संमदेन हर्षेण हृष्टं लोम यत्र एवंविधं विलसद्वक्षो यत्रेति यथा स्यात्। भिन्नं वा क्रियाविशेषणद्वयम्। शिखण्डिनः चूडायुक्तस्य युवराजस्याङ्गदस्याभिमुख्ये धाम तेजः प्रथयता विस्तारयता भ्राजिष्णुना दीप्तियुक्तेन जिष्णुना जयनशीलेन अम्बुमुचा मेघेन। दावदहनो दावानलः इव। तेनापि कथंभूतेन। नीलेन। तथा—शिखण्डिनो मयूरस्य धाम तेजः शुक्रमग्रे प्रथमतः प्रथयता ॥ पक्षे—शि-

खण्डिनः पाञ्चालस्य धाम तेजोऽग्रे अर्थाद्भीष्मस्य प्रथयता प्रकाशयता। जिष्णुनार्जुनेन। दुर्योधनसेनापतिः भीष्मो निपातितः। शिखण्डिनं पुरस्कृत्य अर्जुनेन भीष्मो निपातितः। संमदेन हृष्टं लोम यत्र। एवं विलसद्वक्षःशिलां बिभ्रता। शिलावदुत्कटं वक्षो हृदयं वक्षःशिलेति। रामोऽभिरामो योऽन्वयो वंशः तस्य प्रियं रचयता। 'तारान्वयस्य' इति पाठे तारान्वयस्याङ्गदस्य। पक्षे—तारान्वयः सोमवंशः॥

रणाङ्गणगतः प्राणांस्तावदेव बभार सः।
यावत्तीव्रकरो नासीदाग्नेयपथगोचरः॥ ९०॥

स प्रहस्तः तावदेव प्राणान् बभार दधौ। रणाङ्गणे गतः संग्रामभूमौ स्थितः। यावदाग्नेयस्याग्निपुत्रस्य नीलस्य पथगोचरो नासीत्। नीलेन यावन्न दृष्टः। तीव्रः करो हस्तो यस्य स प्रहस्तः॥ पक्षे—स भीष्मः तीव्रकर आदित्यः आग्नेयपथगोचरः आग्नेय्या आगतः आग्नेयः। 'तत आगतः' इत्यर्थे ण्यण्। आग्नेयश्चासौ पन्थाश्चेत्याग्नेयपथः। 'समासान्ते [नस्तद्धिते]' इति टिलोपे रूपम्। तत्र गोचर इति। आग्नेयदिग्वर्ती न भूतः दक्षिणायनं न भूतमित्यर्थः। आग्नेयपथादुदीचीं प्रति गन्तुमुद्यतो न यावदिति भावः। तावच्छरशय्यां गतः स आसीत्तावदुत्तरायणं वृत्तम्॥

एवं दशाहानिधृतप्रतिज्ञः कपिध्वजेनाहितयुद्धभीष्मः।
पतत्रिभिस्तीक्ष्णमुखैः परीतः स वीरशय्यां चिरमध्यशेत॥ ९१॥

स प्रहस्तः चिरं वीराणां सुभटानां शय्यां शयनमध्यशेत अधिशयितवान्। तत्र शयितो वीरनिद्रां गत इत्यर्थः। एवं पूर्वोक्तेन प्रकारेण दशाहानि दश दिनानि व्याप्य धृता प्रतिज्ञा येन स तथा। कपिध्वजेन कपिश्रेष्ठेन नीलेनाहितो भीष्मो भयानकः पतत्रिभिः पक्षिभिः परीतो व्याप्तः तीक्ष्णानि मुखानि येषां ते तथा॥ पक्षे—आहितो युद्धो येन एवंभूतो भीष्मो गाङ्गेयः स वीरशय्यामशेत। 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मत्वम्। कपिध्वजेनार्जुनेन पतत्रिभिर्बाणैस्तीक्ष्णैः परीतः व्याप्तः। एवमनेन प्रकारेण दशाहानि व्याप्य कृतप्रतिज्ञ इति॥

ततो जिगीषुः प्रतिपक्षमाजौ लङ्केश्वरः प्रागिव देवराजम्।
दध्रे धनुस्तुङ्गकिरीटमौलिराकल्परत्नद्युतिशोभिकर्णः॥ ९२॥

लङ्केश्वरो रावणः धनुर्दध्रे दधौ। आजौ संग्रामे प्रतिपक्षं रामं जिगीषुः जेतुमिच्छुः पूर्वम्। देवराजमिव शक्रमिव। स किंभूतः। तुङ्गानि किरीटानि मौलिषु यस्य। आकल्पः प्रसाधनं रत्नानां द्युतिभिः शोभिनौ कर्णौ यस्य सः॥ पक्षे—कर्णो राधेयो धनुर्दध्रे। प्रतिपक्षमर्जुनं जिगीषुः। लङ्केश्वरः पूर्वं देवराजमिव। आकल्परत्नद्युतिभिः शोभितुं शीलं यस्येति तद्धनुः॥

स्वामिना जनितसत्क्रियेण सा दिङ्मुखान्तरविसारितेजसा।
दक्षिणा दिगिव कुम्भजन्मना नाथवत्यजनि वैरिवाहिनी॥ ९३॥

सा वैरिवाहिनी शत्रुसेना रावणसैन्यं स्वामिना रावणेन नाथवत्यजनि जाता । किंभूतेन । जनितसत्कारेणेत्यर्थः । दिङ्मुखान्तरे दिगन्तावकाशे विसरणशीलं तेजो यस्य सः । कुम्भजन्मना अगस्त्येन दक्षिणा दिगिव ॥ पक्षे—तेन स्वामिना कर्णेन । वैरिवाहिनी दुर्योधनसेना । स्वामिना दुर्योधनेन जनितसत्क्रियेणेति वा योज्यम् ॥

सजीवितग्रहणविधौ कृतोद्यमः क्षमापतेः प्रसभमजातविद्विषः ।
ससंभ्रमोच्छलितपयोधिडम्बरैः स मण्डलैः परमण्डलमभ्यवर्तत ॥९४॥

स रावणः रामसैन्यमभ्यवर्तत संमुखमाजगाम । क्षमापतेः रामस्य जीवग्रहणार्थे कृतोद्यमः । क्षमापतेः किंभूतस्य । न जातो विद्विट् शत्रुर्यस्य सः अजातशत्रुः । प्रसभं हठात् । कैः । मण्डलैः सैन्यैः । किंभूतैः । ससंभ्रममुच्छलितः समुद्रस्येव डम्बरः प्रपञ्चो येषां तैरिति । ससंभ्रमोच्छलितपयोधितुल्यो डम्बरो येषां तैरिति वा ॥ पक्षे—स कर्णः अजातविद्विषो युधिष्ठिरस्य क्षमापतेः राज्ञः सह जीवितेन वर्तते इति सजीवितस्तस्य ग्रहणविधौ ग्रहणप्रकारे कृतोद्यम इति ॥

स संगरे नरेन्द्रस्य विजयं प्रति संदधे ।
वसन्ते कामदेवस्य शीतरश्मेरिवोदयः ॥ ९४ ॥

स रावणः रामस्य नरेन्द्रस्य विजयं प्रति विजयं लक्ष्यीकृत्य संगरे संग्रामे संदधे संदधाति स्म । शीतरश्मेरुदय इव । यथा—शीतरश्मेश्चन्द्रस्य उदयो वसन्ते कामदेवस्य विजयं संदधाति । कामदेवस्य कन्दर्पस्येव एतत्काव्यकर्तृनृपतेर्वा ॥ पक्षे—स कर्णो नरेन्द्रस्य युधिष्ठिरस्येति ॥

इति श्रीहलधरणीप्रसूतकादम्बकुलतिलकचक्रवर्तिश्रीकामदेवप्रोत्साहितकविराजपण्डितविरचिते राघवपाण्डवीये महाकाव्ये कामदेवाङ्के शशधरविरचिते राघवपाण्डवीयप्रकाशे च प्रहस्तभीष्मवधो नामाष्टमः सर्गः ।

## नवमः सर्गः ।

सा सेना युद्धयात्रोत्सुकसुभटमुखाध्मातशङ्खानुमूर्छ-
न्नानानिःशाणभेरीमुरजरवरयाक्रान्तलोकान्तराला ।
वातव्याधूतधौतध्वजपटपटलीचुम्ब्यमानाम्बुवाहा
वाहव्यूहक्षतक्ष्मातलबहलरजोनिर्भरा निर्बभासे ॥ १ ॥

सा उभयसेना निर्बभासे निःशेषेण शुशुभे । किंभूता । युद्धयात्रायामुत्सुका ये सुभटाः तेषां मुखैराध्मातानां पवनपूरितानां शङ्खानामनु पश्चान्मूर्छिता उच्छ्रायमाधिक्यं गच्छता निःशाणानां वाद्यविशेषाणां भेरीमुरजानां च रवेण शब्देन रयाक्रान्तं शीघ्रमाक्रान्तं लोकानामन्तरालं यया यत्र वा सा तथा । वातेन पवनेन व्याधूतानां विशेषेण कम्पितानां धौतानां निर्मलानां ध्वजपटानां पटल्या पङ्क्त्या चुम्ब्यमानाः स्पृश्य-

माना अम्बुवाहा मेघा यया यत्र वा सा तथा । वाहानामश्वानां व्यूहेन समूहेन क्षतस्य क्ष्मातलस्य बहलैः प्रचुरैः रजोभिः धूलिभिर्निर्भरा व्याप्तेति ॥

तदनु सा भरताग्र्यवरूथिनी धृतमहायुधपत्तिनिरन्तरा ।
समररङ्गतले समदोच्चलद्गजघटैर्जघटे परसैनिकैः ॥ २ ॥

तदनु ततः पश्चात् अग्रे भवोऽग्र्यो भरतस्याग्र्यो ज्येष्ठो रामः तस्य वरूथिनी सेना रावणसैनिकैः सह समररङ्गतले जघटे मिलिता । समर एव रङ्गो नर्तनभूमिः तस्य तले स्वरूपे । कीदृशी । समदा मदजलसहिता । उच्चलन्ती गजघटा यत्र । धृतानि महायुधानि यैस्तैः पत्तिभिः निरन्तरा निरवकाशा ॥ पक्षे—भरतानां भरतकुलोत्पन्नानामग्र्यः श्रेष्ठो युधिष्ठिरः । परस्य दुर्योधनस्य । शेषं समानम् ॥

पणवानकशङ्खसिंहनादैर्बधिरीभूतनभोदिगन्तरालम् ।
इतरेतरसक्तवैरिवीरं समरं संभृतसंभ्रमं बभूव ॥ ३ ॥

उभयबलयोः समरं संग्रामो बभूव । कीदृशम् । बधिरीभूतं नभ आकाशं दिशामन्तरालं च यत्र । कैः । पणवानां वाद्यविशेषाणामानकानां दुन्दुभीनां शङ्खानां सिंहनादैः पुरुषसिंहानां च नादैः शब्दैरिति । यद्वा पणवादिभिः समुद्भूतध्वनिरेव विवक्षितः सिंहनाद इव नादः । इतरेतरमन्योन्यं सक्ता मिलिता वैरिणो वीरा यत्र । संभृतः संभ्रम आदरो यत्र । तुल्यमुभयत्र ॥

महाहवे महितमनोरथं द्विषं महीपतेः प्रतिमुखमिन्द्रजिद्भुवम् ।
न्यवारयद्द्रुतमभिपत्य गोपतेः शरीरजो भुजधृततुङ्गगोत्रधूः ॥ ४ ॥

महाहवे महासमरे गोपतेरादित्यस्य तनूजः सुग्रीवः द्विषं शत्रुं निवारयामास । किं कृत्वा । द्रुतं शीघ्रमभिपतित्वा । आगत्येत्यर्थः । इन्द्रजितो मेघनादस्य भुवं जनिस्थानम् । रावणमित्यर्थः । महीपतेः रामस्य प्रतिमुखम् । संमुखमित्यर्थः । महितमनोरथं महितो मन इव रथः स्यन्दनो यस्य तम् । स कीदृशः । भुजेन धृता तुङ्गा उच्छ्रिता पर्वतस्य धूर्येन सः । करकलितपर्वतशृङ्ग इत्यर्थः । समासान्तविधेरनित्यत्वात् ॥ पक्षे—गोपतेः सहस्राक्षस्य इन्द्रस्य शरीरजोऽर्जुनः द्विषं शत्रुं न्यवारयत् । महीपतेर्दुर्योधनस्य प्रतिमुखम् । धृता तुङ्गा गोत्रस्य कुलस्य धूर्येन । इन्द्रं जयतीति इन्द्रजित् एवंभूता भूरुत्पत्तिर्यस्य । इन्द्रादधिक इत्यर्थः ॥

हरिप्रणेतारमुदूढबाणं महीगतं भानुमिव स्फुरन्तम् ।
भित्त्वा स वीरानितरानरौत्सीदाकाशकुक्षिंभरिभिः पृषत्कैः ॥ ५ ॥

स रावणः इतरानन्यान्वीरान्योधानरौत्सीत् अरुधत् । किं कृत्वा । आकाशकुक्षिंभरिभिर्गगनोदरपूरकैः पृषत्कैर्बाणैः हरीणां वानराणां प्रणेतारं सुग्रीवमुदूढबाणं गृहीतत्र-

१. 'गुरुम्' कलि०. २. 'नितराम्' कलि०.

क्षविशेषं भित्त्वा विदार्य स्फुरन्तं दीप्तं महीगतं पृथ्वीतलगतं भानुमिव पृषत्कैररौत्सीत् ॥ पक्षे—स कर्णः तमर्जुनं भित्त्वा । इतरान्द्रुपदादीन् । हरिः श्रीकृष्णः प्रणेता सारथिर्यस्य । उदूढो बाणः शरो येन ॥

किरीटिनः स्यन्दनकेतुमौलिं क्रान्त्वा नदन्तं कपिसैन्यनाथम् ।
दृष्ट्वा विपक्षस्य विनेतुमिच्छोर्नेत्राण्यमर्षादरुणत्वमापुः ॥ ६ ॥

विपक्षस्य रावणस्य नेत्राणि चक्षूंषि अरुणत्वं लौहित्यमापुः प्रापुः । विनेतुमर्थात्तमेव सुग्रीवमेवापनेतुमिच्छोः इच्छावतः । किरीटयुक्तस्य । किं कृत्वा । स्यन्दनस्य रथस्य केतोर्ध्वजस्य मौलिमग्रं क्रान्त्वा आक्रम्य ॥ पक्षे—विपक्षस्य दुर्योधनस्य नेत्राणि अरुणत्वमापुः । अत्र बहुवचनं भ्रातॄणामभिप्रायेण उपलक्षणार्थम् । किरीटिनोऽर्जुनस्य स्यन्दनकेतुमौलिं ध्वजाग्रं क्रान्त्वा स्थितं नदन्तं कपिसैन्यनाथं हनूमन्तं दृष्ट्वेति ॥

व्याक्षिप्ताराातिरक्षोबलपतिरभितः संयुगं वर्तयित्वा
किंचिद्दोर्दण्डकण्ड्वाः कृतशमनविधिर्मारुतेर्विक्रमेण ।
वाञ्छाभङ्गे किरीटापनय इव कृते गोपतेर्नन्दनेन
प्राप प्राप्ते क्षपायास्तिमिरमुचि मुखे सानुयात्रो निवेशम् ॥ ७ ॥

स रावणो निवेशं शिबिरं प्राप । रणात्स्वगृहं जगामेत्यर्थः । सह अनुयात्रेणानुचरेण वर्तते सानुचर इत्यर्थः । संयुगं संग्रामं वर्तयित्वा । विशेषेण क्षिप्ता अरातयो येन एवंभूतं यद्रक्षसां बलं सैन्यं तस्य पतिरीश्वरः । अभितः समन्तात् । मारुतेर्हनूमतो विक्रमेण दोर्दण्डस्य भुजदण्डस्य कण्ड्वाः कण्डूतेः किंचित्कृतशमनविधिः कृतशान्तिविधानः । क्षपाया रात्रेः मुखे उपक्रमे प्राप्ते सति । तिमिरमन्धकारं मुञ्चतीति तिमिरमुक् तस्मिंस्तिमिरमुचीति । गोपतेरादित्यस्य नन्दनेन सुग्रीवेण वाञ्छाभङ्गे जयेच्छाभङ्गे कृते सति । किरीटापनय इवेति । यथा किरीटे मुकुटे अपनीते कश्चिदिति ॥ पक्षे—स कर्णः । 'निवेशः शिबिरे षण्ढे' इत्यमरः । बलपतिः सेनापतिः । व्याक्षिप्ता अरातेः रक्षा रक्षणं येन । मारुतेर्भीमस्य । गोपतेरिन्द्रस्य नन्दनेनार्जुनेन । शेषं तुल्यम् ॥

रचितं नरदेवजन्मनाजौ मुकुटस्येव मनोरथस्य भङ्गम् ।
परिभावयतो न शर्म राज्ञो निशि जज्ञे धृतराष्ट्रनन्दनस्य ॥ ८ ॥

निशि रात्रौ राज्ञो रावणस्य शर्म सुखं न जज्ञे । किंभूतस्य । मनोरथस्य भङ्गं परिभावयतश्चिन्तयतः । नरदेवजन्मना रामेणाजौ संग्रामे रचितं कृतम् । मुकुटस्येवेति किरीटस्यापीत्यर्थः । अन्यच्च कीदृशस्य । न धृतं राष्ट्रस्य देशस्य नन्दनमुत्साहो येन । अकारप्रश्लेषात् । राष्ट्रोपप्लवप्रदस्येत्यर्थः ॥ पक्षे—धृतराष्ट्रनन्दनस्य राज्ञो दुर्योधनस्य । नरदेवजन्मनार्जुनेन । शेषं समानम् ॥

आगामियुद्धे विजयानुबन्धि संकल्प्य संसप्तकयोधवृन्दम्।
राजा रजन्या विरतौ रणाय निजानुजोद्बोधनमाचचार ॥ ९ ॥

राजा रावणः निजानुजस्य कुम्भकर्णस्योद्बोधनं जागरणं चकार आचरति स्म। रजन्या रात्रेर्विरतौ विरामे सति रणाय समराय संसप्तकयोधवृन्दं संग्रामादनिवर्तिवीरसमूहं संकल्प्य संमथ्य आकाङ्क्ष्येति। किंभूतं तत्। आगामिनि युद्धे भाविनि युद्धे विजयानुबन्धि जयबन्धशीलम्। 'संसप्तकास्तु समरे संग्रामादनिवर्तिनः' इत्यमरः॥ पक्षे—राजा दुर्योधनो निजानुजस्य दुःशासनस्य उद्बोधनमुत्साहनमाचचार। संसप्तकयोधवृन्दं सुशर्मादिराजसमूहं संकल्प्य। शेषं समानम्॥

प्रातर्भूयः प्रवृत्ते समरमहमहारम्भहम्भानिनादे
संध्यारागे भटानामरिरुधिरनिभे रञ्जयत्यायुधानि।
वीरैर्वैरानुबन्धात्प्रतिभटघटनाकाङ्क्षया रुद्धमार्गा-
वेकीभूतावभूतां रणरभसजितोदन्वदोघौ बलौघौ ॥ १० ॥

बलयोः तयोः सेनयोर्द्वयोः ओघौ समूहावेकीभूतौ मिलितावभूतां वृत्तौ। प्रातःकाले भूयः पुनरपि समरमहस्य संग्रामोत्सवस्य यो महारम्भः तस्य हम्भा वाद्यविशेषस्तस्य यो निनादः शब्दः तस्मिन् प्रवृत्ते सति। संध्यारागे अरिरुधिरनिभे तत्सदृशे भटानां योधानामायुधानि रञ्जयति सति। कीदृशौ तौ। वीरैर्योधैरस्य शात्रवस्यानुबन्धिनः प्रतिभटस्य विरोधिनो घटनायाः प्राप्तेराकाङ्क्षायां रुद्धो मार्गो याभ्यां तौ। रणरभसेन संग्रामजवेन जित उदन्वतः समुद्रस्य ओघो वारिप्रवाहो याभ्यां तौ॥

नरकभुवमथाग्रे वाहिनीनां यियासुं
पटुपटहनिनादध्वस्तनिद्रं दिनादौ।
पतिरमररिपूणां सोदरं भर्तृभक्तेः
परिचरणविधिज्ञं प्राहिणोत्संगराय ॥ ११ ॥

अथानन्तरममररिपूणां देवशत्रूणां पतिः स्वामी रावणः सोदरं भ्रातरं कुम्भकर्णं संगराय समराय प्राहिणोत् प्रेषयामास। वाहिनीनां सेनानामग्रे यियासुमग्रे गन्तुमिच्छुम्। नरकभुवं नरकाश्रयम्। 'भूर्भूमिः स्थानमाश्रयः' इति विश्वः। दिनादौ दिनोपक्रमे पटूनां पटहानां निनादेव ध्वस्ता निद्रा यस्य तम्। भर्तृभक्तेः स्वामिभक्तेः परिचरणस्य विधिज्ञं विधानज्ञम्॥ पक्षे—पती राजा दुर्योधनः अमररिपूणामसुराणां सहोदरं भगदत्तं संगराय प्राहिणोत्। नरकभुवं नरकासुरात्मजम्। यियासुं गन्तुमिच्छुम्। शेषं तुल्यम्॥

---

१. 'रम्भा', 'भम्भा' इति पाठः.

स प्रतिश्रुतविरोधिशासनो वीरपानमदघूर्णितेक्षणः ।
उच्चचाल परमण्डलं प्रति प्रांशुकाय पिहितोरुदिङ्मुखः ॥ १२ ॥

स कुम्भकर्णः परस्य शत्रोर्मण्डलं सैन्यं प्रतिलक्ष्योच्चचाल चलति स्म । जगामेत्यर्थः । कीदृशः । प्रांशुना जानुपर्यन्तलम्बेन बाहुना पिहितमुरु दिङ्मुखं येन स तथा । शरीरमहत्वेनेत्यर्थः । प्रत्येकं श्रुतं प्रतिश्रुतमङ्गीकृतं वा विरोधिनां शत्रूणां शासनमाज्ञा येन स तथा । 'संप्रति' इति पाठे संप्रतीदानीं श्रुतं विरोधिनां शासनं येनेति । वीरपानेन मदेन घूर्णिते अक्षिणी चक्षुषी यस्य सः । 'वीरपानं तु यत्पानं वृत्ते भाविनि वा रणे' इत्यमरः ॥ पक्षे—स भगदत्तः । शेषं समानम् ॥

तं सुप्रतीकेन सुरद्विपेन समं समीकाजिरमापतन्तम् ।
किरीटकोटिस्खलितार्करश्मि[1] द्रष्टुं न शेकुर्युधि वानरेन्द्राः ॥ १३ ॥

वानरेन्द्राः सुग्रीवादयः तं कुम्भकर्णं द्रष्टुं न शेकुः न शक्ताः । कुत्र । युधि । कीदृशम् । सुप्रतीकेन शोभनशरीरेण सुप्रतीकनाम्ना वा सुरद्विपेन देवदन्तिना समं सह समीकाजिरं संग्रामाङ्गणमापतन्तमागच्छन्तम् । किरीटस्य मुकुटस्य कोटौ अग्रे स्खलितोऽर्करश्मिर्येन तम् ॥ पक्षे—तं भगदत्तं नरेन्द्रा अन्ये राजानो द्रष्टुमेव न शेकुः । सुप्रतीकनाम्ना हस्तिना सुरद्विपेन समं तुल्यं यथा स्यादेवं समीकाजिरमापतन्तं सुप्रतीकेन समं सहितं वा ॥

संनद्धेभगदत्तशङ्खनिनदत्रस्यत्त्रिलोके बले
　तास्यद्दिक्करिकुम्भकर्णपृतनाप्रारब्धकोलाहले ।
तीक्ष्णद्रोणपतत्त्रिपीतसुभटप्रत्यग्ररक्तासवं
　प्रावर्तिष्ट दिवोऽतिथीकृतमहायोधं महायोधनम् ॥ १४ ॥

महायोधनं महासंग्रामः प्रावर्तिष्ट प्रवृत्तम् । बले सैन्ये एवं सति । इति विशिनष्टि—संनद्धेत्यादि । संनद्धा युद्धाय कृतोद्यमा ये इभगा इभान् गच्छन्ति इति इभगा हस्तिगता हस्तिपका योधास्तैर्दत्तैः शङ्खनिनादैः शङ्खशब्दैः त्रस्यत्त्रिलोकं लोकत्रयं यत्र तादृशे । तथा ताम्यन्तो दिक्करिणो यस्यां सा एवंभूतया कुम्भकर्णपृतनया सेनया प्रारब्धः कोलाहलो यत्र तादृशे । किंभूतं तत् महायोधनम् । तीक्ष्णैः द्रोणपतत्त्रिभिः जरत्काकैः पीतं सुभटानां प्रत्यग्रमभिनवं रक्तं रुधिरमेवासवो यत्र तत् । दिवः स्वर्गस्यातिथीकृता महायोधा यत्र तत् ॥ पक्षे—बले उभयसैन्ये संनद्धे सति महायोधनं प्रावर्तिष्टेति । कीदृशे । भगदत्तः प्राग्ज्योतिषेश्वरो राजविशेषः तस्य शङ्खनिनादेन त्रस्यत्त्रिलोकं यत्र तादृशे । तथा ताम्यन्तो दिक्करिकुम्भा यस्यां सा एवंभूतया कर्णस्य राधेयस्य पृतनया प्रारब्धः कोलाहलो यत्रैवंविधे । महायोधनं कीदृशम् । तीक्ष्णा निशिता ये द्रोणस्या-

---

१. 'बिम्बं' कलि०.

चार्यस्य पतत्रिणो बाणाः तैः पीतं सुभटानां रक्तासवं यत्र तादृशम् । 'द्रोणः काके कृपीपतौ' इति विश्वः ॥

हेलानिक्षिप्तपृथ्वीभरसरलभुजङ्गेन्द्रभोगानुकारी-
प्रौढोदञ्चत्करेण प्रलयपरिणतश्यामजीमूतभासा ।
व्यारुग्णक्षोणिखण्डस्फुटितमहिगृहं कुर्वता पादचारे
संक्षुण्णा तेन सर्वा क्षितिपतिपृतना कुम्भिनाम्भोजिनीव ॥ १५ ॥

तेन कुम्भकर्णेन क्षितिपतेः रामस्य पृतना सेना सर्वा संक्षुण्णा सम्यक् क्षुण्णा खण्डिता । तेन कथंभूतेन । हेलेत्यादि । हेलया लीलया निक्षिप्ता उत्क्षिप्ता या पृथ्वी तस्या भरेण गौरवेण सरलस्य अवक्रस्य भुजङ्गेन्द्रभोगस्य शेषशरीरस्य अनुकारी अनुकरणशीलः तत्सदृशः प्रौढो बलवान् उदञ्चन् करो यस्य स तथा । प्रलये परिणतः वर्षुकः श्यामो यो जीमूतः मेघस्तद्वद्भा दीप्तिर्यस्य तेन तथा । व्यारुग्णा विशेषेण आरुग्णा भुग्ना या क्षोणी मही तस्याः खण्डने स्फुटितं चूर्णितमहिगृहं पातालं कुर्वता पादचारे पादयोश्चारे क्रमणे कुम्भिना दन्तिना अम्भोजिनी पद्मिनीवेति ॥ पक्षे—तेन कुम्भिना सुप्रतीकनाम्ना भगदत्तहस्तिना क्षितिपतिपृतना पाण्डवसेना संक्षुण्णा । केव । अम्भोजिनीव । अप्रयासेनेति भावः । हेलानिक्षिप्तपृथ्वीभरेण सरलो यो भुजङ्गेन्द्रभोगस्तदनुकारी । प्रौढ उदञ्चन् ऊर्ध्वं गच्छन् करः स्थूलहस्तो यस्य तथा । तुल्यमन्यत् ॥

करधृतकरवाल शाणदन्ताग्रकुन्त
गुरुतरमदवेगात्सोढगाढप्रहारम् ।
अविकलगलगर्जारब्धपर्जन्यघोषं
धृतिरतिबलमेनं पश्यतां नश्यति स्म ॥ १६ ॥

अतिबलं महाबलमेनं कुम्भकर्णं पश्यतां योधानां धृतिः धैर्यं नश्यति स्म । नष्टमित्यर्थः । तं दृष्ट्वैव सर्वे योधाः पलायिता इति भावः । किंभूतम् । करेण हस्तेन धृतः करवालः खड्गो येन तम् । शाणस्तीक्ष्णो दन्ताग्रमेव कुन्तो यस्य तम् । गुरुतरो महान् यो मदवेगः गर्वातिशयस्तस्मात्सोढो गाढः प्रहारो येन तम् । अविकलमतिशयेन या गलगर्जा कण्ठनादः तया आरब्धो मेघस्य घोषो येन तम् ॥ पक्षे—एनं भगदत्तहस्तिनं पश्यतां धृतिः नश्यति स्म । करेण स्थूलहस्तेन गृहीतः प्रतीच्छितः करवालो येन । गुरुतरो यो मदवेगः मदजलवेगः तस्मात्सोढेति ॥

पादक्षोदैर्दशनदलनैः पुष्करस्य प्रहारै-
[2]र्हस्तोत्क्षिप्तैः परिघमुसलैः केवलैर्हस्तघातैः ।

1. 'शात' कलि०. 2. 'हस्तक्षिप्तैः' कलि०.

भ्रामं भ्रामं प्रधनपृथिवीमण्डले चण्डवेगः
शीर्णव्यूहं प्रतिबलमसौ नाशयामास तूर्णम् ॥ १७ ॥

असौ कुम्भकर्णः प्रधनपृथिवीमण्डले संग्रामभूमौ भ्रामं भ्रामं भ्रमित्वा प्रतिबलं विपक्षबलं रामसैन्यं नाशयामास । कीदृशम् । शीर्णो विघटितो व्यूहो यत्र तम् । 'व्यूहो ना बलविन्यासे निर्माणनिकुरम्बयोः' इति विश्वः । स कीदृशः । चण्डो वेगो यस्य सः । कैः । पादक्षोदैः चरणचूर्णैः, दशनदलनैः दन्ताघातैः, पुष्करस्य प्रहारैः, हस्तोत्क्षिप्तैः परिघैः मुसलैश्च, केवलैरस्त्रशून्यैर्हस्ताघातैश्चपेटैः ॥ पक्षे—भगदत्तहस्ती प्रतिबलं पाण्डवसैन्यं पुष्करस्य स्थूलहस्ताग्रस्य प्रहारैः केवलैर्हस्ताघातैश्चेति । तुल्यमन्यत् । 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले । व्योम्नि खड्गे च पद्मे च तीर्थौषधिविशेषयोः॥' इत्यमरः॥

भ्रमद्गजानीकमपास्तपत्ति नश्यद्धरिस्यन्दनवेपितोर्वि ।
बभूव तत्कुञ्जरवेगभिन्नं पयोरुहां पुञ्जमिवारिसैन्यम् ॥ १८ ॥

तदरिसैन्यं शत्रुसैन्यमेवंभूतं बभूव । कीदृशम् । तत्कुञ्जरवेगभग्नं स कुम्भकर्ण एव कुञ्जरः तस्य वेगेन भग्नम् । किमिव । पयोरुहां पद्मानां पुञ्जमिव । कीदृशं तत् । भ्रमत् गजानीकं गजसमूहो यत्र तथा । अपास्ताः पत्तयः पदातयो यत्र । नश्यन्तो हरयो वानरा यत्र हरयोऽश्वा वा । स्यन्दनेन वेपिता कम्पिता उर्वी पृथ्वी यत्र ॥ पक्षे—तस्य भगदत्तस्य कुञ्जरः तस्य वेगेन भग्नमिति । नश्यन्तो हरयोऽश्वा यत्र । अरिसैन्यं पाण्डवबलम् । तुल्यमन्यत् ॥

सुग्रीवस्तदभिमुखं निपत्यभीमः संग्रामं स्वभुजबलोचितं विधाय ।
द्राग्दैवाद्विषमदशां गतोऽपि तस्मादात्मानं कथमपि मोचयांचकार ॥ १९ ॥

सुग्रीवः कपीश्वरः तस्मात्कुम्भकर्णात्कथमपि आत्मानं मोचयांचकार त्याजयति स्म । विषमदशामवस्थां गतोऽपि सन् तदभिमुखं तस्य कुम्भकर्णस्याभिमुखं संमुखं निपत्य । भीमो भयानकः । स्वभुजबलोचितं स्वकीयभुजसामर्थ्यसमुचितं संग्रामं कृत्वा । द्राक् झटिति । सुग्रीवः कुम्भकर्णेनाभिभूय धृतः पश्चात्तमादाय परावृत्तः तत्कर्णनासां छित्त्वा ततः परागतः ॥ पक्षे—शोभना ग्रीवा यस्य स सुग्रीवः भीमसेनः । तस्माद्भगदत्तगजात् । दैवाद्भाग्यवशाद्विषमदशां गतोऽपीति । शेषं तुल्यम् ॥

स कोपितो मारुतिना मनस्वी महास्त्रजालेन रणे रिपूणाम् ।
व्यूहं बृहद्बाहुबलो बिभेद प्राग्ज्योतिषेशस्त्रिपुरं यथोग्रः ॥ २० ॥

स कुम्भकर्णः रिपूणां रामादीनां व्यूहं समूहं रामसैन्यं बिभेद विदारयामास । केन । महास्त्रजालेन समूहेन । किंभूतः । उग्रस्तीक्ष्णः । मारुतिना हनूमता कोपितः । मनस्वी मानवान् । रणे संग्रामे बृहद्बाह्वोर्बलं यस्य स बृहद्बाहुबलः । मारुतिना कथंभूतेन । प्राग्ज्योतिषा प्राक् प्रथमतः ज्योतिस्तेजो यस्य तादृशेनेति अस्त्रजालविशेषणं

वा । यथा ईशः शिवस्त्रिपुरं दैत्यविशेषमिति ॥ पक्षे—प्राग्ज्योतिषेशो भगदत्तः । मारुतिना भीमेन कोपितः । यथा उग्रो महादेवः त्रिपुरमिति । शेषं तुल्यम् ॥

संसप्तकानां द्विषतां वधाय निबद्धकक्षः प्रतिपक्षभिन्नम् ।
दूरं प्रसर्पद्विजयः स्वसैन्यं दृष्ट्वा तमायात्तरसाभिरामः ॥ २१ ॥

रामो दाशरथिः तरसा वेगेन तमभि तं कुम्भकर्णं लक्ष्यीकृत्य आयात् आजगाम । किं कृत्वा । स्वसैन्यं प्रतिपक्षेण शत्रुणा भिन्नं विदारितं दृष्ट्वा । कीदृशम् । दूरं प्रसर्पत् पलायमानम् । स किंभूतः । संसप्तकानां संग्रामादनिवर्तिनां द्विषतां शत्रूणां वधाय निबद्धकक्षः । 'कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे' इति विश्वः । तथा विजयः विशिष्टजयवान् ॥ पक्षे—विजयोऽर्जुनः । तं भगदत्तम् । अभिरामः सुन्दरः । शेषं समानम् । 'संसप्तकास्तु समरे संग्रामादनिवर्तिनः' इत्यमरः ॥

अथ सुररिपुराजपुत्रयोस्त्रिभुवनविस्मयनीयरंहसोः ।
समजनि समरोत्सवस्तदानीं ज्वलदमरास्त्रनिरन्तराम्बरान्तः ॥ २२ ॥

अथेत्यनन्तरं सुररिपुराजपुत्रयोः कुम्भकर्णरामयोः भगदत्तार्जुनयोर्वा समरोत्सवः समजनि संवृत्तः । तदानीं तस्मिन्काले ज्वलन्ति यान्यमरास्त्राणि दिव्यास्त्राणि तैर्निरन्तरालः(?) पूरितः अम्बरान्तः आकाशमध्यं यत्र स तथा । तयोः किंभूतयोः । त्रिभुवने लोकत्रये विस्मयनीयमाश्चर्यहेतुकं रंहो वेगो ययोः ॥

अत्रान्तरे मुक्तमनेन रौद्रं शूलं यथा वैष्णवमस्त्रमुग्रम् ।
हरिर्मरुत्प्रीतिकरो न्यगृह्णाद्यशोमयी स्रक्तदभूदमुष्य ॥ २३ ॥

मरुतां देवानां प्रीतिकरो हरिः सुग्रीवः अनेन कुम्भकर्णेन रक्षसा मुक्तं त्यक्तं रौद्रं रुद्रो देवता यस्य रुद्रदेवताकं त्रिशूलं न्यगृह्णात् जग्राह । यथा वैष्णवं विष्णुदैवतमुग्रम् । दुःसहमित्यर्थः । अमुष्य हरेर्वानरस्य तदस्त्रं यशोमयी स्रक् अभूत् । यशःपुष्पमाला बभूवेति ॥ पक्षे—अनेन भगदत्तेन मुक्तं शूलं हरिः श्रीकृष्णः । तच्छूलममुष्य हरेर्यशोमयी स्रक् अभूदिति ॥

तस्याथ[2] नरसिंहस्य शिलीमुखनखावलिः ।
रिपुकुञ्जरगात्रेषु निपपात निरन्तरम् ॥ २४ ॥

अथानन्तरं तस्य नरसिंहस्य शिलीमुखा बाणा एव नखास्तेषामावलिः श्रेणी रिपुकुञ्जरस्य रिपुश्रेष्ठस्य कुम्भकर्णस्य गात्रेषु निरन्तरं निपपात अपतदिति । 'सिंहे कुञ्जरनागाद्याः स्युः प्रशस्तार्थवाचकाः' इत्यमरः ॥ पक्षे—नरोऽर्जुन एव सिंहस्तस्य शिलीमुखनखावलिः । अन्यस्यापि नरसिंहस्य हरेः नखा एव बाणा रिपुकुञ्जरगात्रेषु पतिताः रिपोर्भगदत्तस्य यः कुञ्जरः सुप्रतीकस्तस्य गात्रेषु निपपातेति ॥

---

१. 'कर्मणोः' कलि०. २. 'तस्य वानरसिंहस्य' कलि०.

[१]न्यञ्चद्भूचक्रभारोद्वहनपरिगतायासदिक्कुम्भिकुम्भं
सद्यस्त्रस्तामरस्त्रीकरपुटपिहितोत्पक्ष्मचक्षुःसरोजम् ।
अन्योन्योत्कर्षवार्ताकृतकलहकथं खेचरैर्लोकपालाः
संप्राप्तं मेनिरे तं प्रतिभयमुभयोः संयुगान्तं युगान्तम् ॥ २५ ॥

उभयोः श्रीरामकुम्भकर्णयोः भगदत्तार्जुनयोर्वा तं संयुगान्तं लोकपाला युगान्तं प्रलयकालं संप्राप्तं मेनिरे मन्यन्ते स्म । प्रतिभयं यथा स्यात् । तं कीदृशम् । न्यञ्चदधो गच्छन् यद्भूचक्रं भूगोलस्तद्भारेण गौरवस्योद्वहनेन परिगतायासाः प्राप्तपरिश्रमा दिक्करिकुम्भा यत्र तम् । सद्यस्तत्कालं त्रस्ताभिरमरस्त्रीभिः करपुटैः पिहितानि उत्पक्ष्माणि उत्कृष्टलोमानि चक्षूंष्येव सरोजानि यत्र । यदि रामस्य जयस्तदैव शुभमस्माकम्, नो चेदशुभमतिशायितमिति भावः । खेचरैराकाशस्थैर्गन्धर्वप्रभृतिभिरन्योन्यस्य परस्परस्योत्कृष्टवार्तायां कृता कलहकथा यत्र तम् ॥

विहाय पूर्वं चतुरङ्गभङ्गं नरप्रवीरेण विरोधिवर्यः ।
मत्तः करी केसरिणेव मौलौ जघ्ने नखेनेव शिलीमुखेन ॥ २६ ॥

नराणां प्रवीरेण श्रेष्ठेन रामेण विरोधिवर्यः शत्रुश्रेष्ठः कुम्भकर्णो मौलौ शिरसि शिलीमुखेन बाणेन जघ्ने हतः । 'मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकः' इति विश्वप्रकाशः । पूर्वं प्रथमं चतुरङ्गस्य हस्त्यश्वरथपादातस्य भङ्गं विहाय परित्यज्य । मत्तः करी हस्ती केसरिणा सिंहेन नखेनेवेति ॥ पक्षे—नरप्रवीरेणार्जुनेन मत्तः करी भगदत्तहस्ती सुप्रतीकः मौलौ शिरसि शिलीमुखेन जघ्ने । कीदृशः करी । विरोधिवर्यः । केसरिणेव नखेनेति । केसरिणा सिंहेन हस्ती हन्यते ॥

स जिष्णुना संगररङ्गमध्ये विपक्षवीरः क्षिपता महास्त्रम् ।
खरः पुरस्तादिव कुम्भकर्णो रामेण जघ्ने रणपण्डितेन ॥ २७ ॥

स कुम्भकर्णः जिष्णुना जयनशीलेन महास्त्रं क्षिपता रणपण्डितेन रामेण जघ्ने हतः । संगररङ्गस्य मध्ये । विपक्षेषु वीरः । पुरस्तात्पूर्वं खरो राक्षसविशेष इव ॥ पक्षे—स विपक्षवीरो भगदत्तः खरस्तीक्ष्णः जिष्णुनार्जुनेन जघ्ने । रामेण कुम्भकर्ण इव । शेषं समानम् ॥

नरवरशरकृत्तं तच्छिरः प्राक्शरीरा-
दपतदुरुकिरीटोद्भासिदूरस्रुतासृक् ।
दवदहनशिखाभिर्दह्यमानं महाद्रेः
शिखरमिव सधातुस्यन्दमिन्द्रास्त्ररुग्णम् ॥ २८ ॥

---

१. 'अथायं कामरूपेशः कुपितो हरिकर्मणा । यत्नेन महता भूयो युयुधे राजसूनुना ॥' इत्ययं श्लोक इतः प्रागधिको दृश्यते. २. 'मुखमुखैरः' कलि०.

नरवरस्य नरश्रेष्ठस्य श्रीरामस्यास्त्रेण कृत्तं तच्छिरः कुम्भकर्णमस्तकं प्रथमतः शरीरादपतत् पतितम् । शरीरात्प्रागिति वा । प्रथमं शिरः पश्चाच्छरीरमपतदिति । तदस्त्रापेक्षया प्रागिति वा । कीदृशम् । उरु महत्किरीटं तेनोद्भासितुं शीलं यस्य । तथा दूरमत्यर्थं स्रुतमस्रग्रुधिरं यत्र । महाद्रेः शिखरमिव । अग्नेः शिखाभिर्दह्यमानमिन्द्रास्त्रेण वज्रेण रुग्णं छिन्नम् । सह धातोर्गैरिकादेः स्यन्दनेन वर्तते तत्सधातुस्यन्दम् ॥ पक्षे—तच्छिरो भगदत्तशिरः नरवरस्यार्जुनस्य शरेण छिन्नम् । शेषं समानम् ॥

कण्ठच्छेदादुपरि विसरच्छोणिताम्भश्छटाना-
मासारेण क्षणमरुणयन्नन्तरिक्षस्य कुक्षिम् ।
तत्कायोऽपि प्रसभमपतद्वीरयात्रानिमित्तं
क्षोणीदेव्या इव विरचयन्गौरवेण प्रणामम् ॥ २९ ॥

प्रसभं हठात् तस्य कुम्भकर्णस्य भगदत्तस्य वा कायः तत्कायः अपतत् पतितः । वीरयात्रानिमित्तं संग्रामयात्रार्थं क्षोणीदेव्याः पृथिव्याः गौरवेणादरेण गुरुतया वा प्रणामं विरचयन्निव कुर्वन्निव । तत्कायः किं कुर्वन् । अन्तरिक्षस्य कुक्षिमभ्यन्तरमासारेण धारासंपातेन अरुणयन्नरुणीकुर्वन् । कण्ठच्छेदादुपरि विसरत् विस्तृतीभवत् यच्छोणितमयाम्भस्तच्छटानां परम्पराणामासारेणेति संबन्धः ॥

तस्य वीरवरिष्ठस्य भ्रूभङ्गि पतितं शिरः ।
बभौ संततिवात्सल्याद्धात्र्येवाङ्के निवेशितम् ॥ ३० ॥

तस्य कुम्भकर्णस्य भगदत्तस्य वा । वीरवरिष्ठस्य शूरश्रेष्ठस्य । पतितं शिरो बभौ शुशुभे । भ्रूभङ्गि भ्रूभङ्गयुक्तम् । संततिवात्सल्यात्संततिस्नेहात् धात्र्या पृथिव्या अङ्के निवेशितमिव । पृथ्वी जननी तुल्यैवेति ॥

सदैवतैर्वैरिनिपातहृष्टैः प्राशंसि वीरैर्नरदेववर्यः ।
दर्पोद्धतं शूर्पकमाजिभूमौ जित्वेव राजन्यककामदेवः ॥ ३१ ॥

नरवीरो रामोऽर्जुनो वा सदैवतैर्देवसहितैः शूरैः प्राशंसि प्रशंसितः । वैरिणां निपातेन हृष्टैः । आजिभूमौ संग्रामभूमौ दर्पेणोद्धतं दर्पिष्ठं शूर्पकं राजविशेषं जित्वा राजन्यकः क्षत्रियः कामदेव इव । एतत्काव्यकर्ता महीपतिरिवेति ॥

इति श्रीहलधरणीप्रसूतकादम्बकुलतिलकचक्रवर्तिवीरश्रीकामदेवप्रोत्साहितकविराजपण्डितविरचिते राघवपाण्डवीये महाकाव्ये कामदेवाङ्के शशधरविरचिते राघवपाण्डवीयप्रकाशे च कुम्भकर्णभगदत्तवधो नाम नवमः सर्गः ।

---

१. 'दूरयात्रा' कलि०. २. 'शम्बर' कलि०; 'सूर्यक' काश्मी०.

दशमः सर्गः ।

ततो भृशं व्याकुलितान्तरात्मा स्वपक्षघातेन विपक्षनाथः ।
प्रायुङ्क्त वीरान्पुनरेव योद्धुमापत्सु मुह्यन्ति न मानभाजः ॥ १ ॥

विपक्षनाथो रावणः दुर्योधनो वा पुनरेव वीरान् योधान् योद्धुं प्रायुङ्क्त प्रयुक्तवान् । स्वपक्षस्य स्वसैन्यस्य घातेन विनाशेन भृशमत्यर्थं व्याकुलितः अन्तरात्मा यस्य सः । मानभाजः मानिनः आपत्सु न मुह्यन्ति न मोहमायान्ति ॥

ते राज्ञो धृतराष्ट्रस्य कुमाराः कुपिता भृशम् ।
रक्षःपुरोगमाश्चेलुर्गूढशासनकारिणः ॥ २ ॥

राज्ञो रावणस्य कुमाराश्चेलुः चलिताः । भृशं क्रुद्धाः । राज्ञः कथंभूतस्य । धृतराष्ट्रस्य धृतं राष्ट्रं येन । किंभूताः । रक्षःपुरोगमाः राक्षसा अग्रगामिनो येषां ते । गूढं गुप्तं यच्छासनमाज्ञा तत्कारिणः ॥ पक्षे—राज्ञो धृतराष्ट्रस्य कुमाराः दुःशासनादयः । रक्षः-पुरोगमाः अलंबुषादयः अग्रगामिनो येषां ते ॥

घण्टाटङ्कारघोरोत्[1]तुरुककरिघटासंकटक्षोणिपीठं
घाटीभिर्घोटकानां झटिति खरखुरोद्धूतधूलीवितानम् ।
सान्द्राणां स्यन्दनानां ध्वजपटपटलीलीढदिक्चक्रवालं
सैन्यं संनद्धमासीत्पटुसुभटभुजामण्डलोद्घूर्णखड्गम् ॥ ३ ॥

सैन्यं रामरावणयोः युधिष्ठिरदुर्योधनयोर्वा संनद्धमर्थात् युद्धायासीत् बभूव । कीदृशं तत् । घण्टानां टङ्कारेण शब्देन घोरः उद्गतस्तुरुर्वाद्यविशेषो यत्र एवंभूतया करिघटया हस्तिसमूहेन संकटं निरन्तरं क्षोणिपीठं पृथ्वीमण्डलं यत्र तत् । घोटकानां घाटीभिः समूहैः झटिति शीघ्रं खरैस्तीक्ष्णैः खुरैरुद्धूतं धूलीवितानं यत्रेति । सान्द्राणां निबिडानां स्यन्दनानां ध्वजपटानां पटलीभिः लीढमाच्छादितं दिक्चक्रवालं यत्र तत् । पटवो ये सुभटास्तेषां भुजमण्डलेन उद्घूर्णा उत्क्षिप्ताः खड्गा असयो यत्र ॥

आमूलादजिरस्यान्तादाचार्येण प्रवर्तितम् ।
पद्मं परबलानां तत्पश्यतां विस्मयोऽभवत् ॥ ४ ॥

परस्य शत्रोर्बलानां तत्पद्मं संख्याविशेषं पश्यतां निरीक्षकानां(णां) विस्मय आश्चर्यमभवत् । अजिरस्य संग्रामस्य आमूलात् मूलादारभ्य आ अन्तादन्तपर्यन्तम् आचार्येण कुलस्वामिना प्रवर्तितम् ॥ पक्षे—आचार्येण द्रोणेन प्रवर्तितं पद्मं व्यूहविशेषम् । शेषं समानम् ॥

ततो युगान्तार्णवधीरघोषा व्याधूतनानायुधदुर्निरीक्ष्याः ।
अभ्युद्ययुर्भीममुखा नरेन्द्रसेनाधिनाथाः परसैन्यवीरान् ॥ ५ ॥

---

1. 'रोत्तुरुककरिकघ' इति पाठः; 'रोड्डमरकरिघ' कलि०.

अनन्तरं नरेन्द्रस्य रामस्य सेनाया अधिनाथा अधिपतयः नरेन्द्रसेनाधिनाथाः परेषां शत्रूणां सैन्यस्य वीरान् राक्षसभटान् अभ्युद्ययुः अभिगतवन्तः। कीदृशाः। युगान्तार्णवानामिव धीरो घोषः शब्दो येषां ते। व्याधूतैः आकम्पितैः नानायुधैः पर्वतशृङ्गवृक्षादिभिः दुर्निरीक्ष्याः। तथा भीमानि भयानकानि मुखानि येषां ते ॥ पक्षे—नरेन्द्रस्य युधिष्ठिरस्य सेनाधिपाः परस्य दुर्योधनस्य सैन्यवीरान्। नानायुधैः शरादिभिः। भीममुखाः भीमप्रभृतयः ॥

नानायानभयानकं गुरुधनुर्ज्याघोषघोरं नद-
द्रक्षोराजकुमाररक्षितबहुस्कन्धं द्विषां तद्बलम्।
पद्मव्यूहरजोभरैः सर इव व्यापिञ्जरं कुञ्जरै-
रावव्रे पवनात्मजप्रभृतिभिर्वीरैर्विगाहोद्यतैः ॥ ६ ॥

द्विषां शत्रूणां तत्सैन्यं पवनात्मजप्रभृतिभिः हनूमदादिभिः शूरैरावव्रे आवृतम्। विगाहे विगाहने उद्यतैः कृतोद्यमैः। किंभूतम्। नानायानैः रथादिभिर्गमनविशेषैर्वा भयानकम्। गुरुभिरतिशयितैर्धनुर्ज्याघोषैः घोरं भयानकम्। तथा—नदद्भिः कृतसिंहनादैः रक्षोराजस्य रावणस्य कुमारैः रक्षिता बहवः स्कन्धा यत्र तत्। पद्मं संख्याविशेषस्तस्य व्यूहस्य धूलीभरैः व्यापिञ्जरं कपिशम्। हस्तिभिः सर इवेति ॥ पक्षे—पवनात्मजप्रभृतिभिः भीमादिभिः वीरैः। गुरोः द्रोणस्य धनुर्ज्याघोषेण घोरम्। तथा नदन्ति रक्षांसि यत्र तत्। राजकुमारैर्धृतराष्ट्रपुत्रैः रक्षितबहुस्कन्धम्। द्विषां दुर्योधनादीनां तद्बलमिति। तुल्यमन्यत् ॥

महीमहाभारनिरासहेतुमाकल्पमाकल्पमनल्पकीर्तेः।
सुराङ्गनासङ्गफलाय[1] काले संग्रामयज्ञं बलिनो वितेनुः ॥ ७ ॥

बलिनो बलिष्ठा उभयबलयोधाः काले समये सुराङ्गनानां सङ्गफलाय संगमप्राप्तये संग्रामयज्ञं वितेनुः वितन्वन्ति स्म। कीदृशम्। मह्याः पृथिव्याः महाभारस्य यो निरासोऽपयानं तस्य हेतुम् अनल्पा या कीर्तिस्तस्या आकल्पं कल्पपर्यन्तमाकल्पं प्रसाधनम्। 'संगमलाभहेतुम्' इति पाठे सुराङ्गनानां संगमलाभे प्राप्तौ हेतुं कारणमिति ॥

द्विषां सुशर्मापनयैककर्ता समृद्धगोपालबलप्रणोदी।
देवान्तकः प्राप्य हरेः कुमारं विपक्षकम्पार्थमरुद्ध सैन्यैः ॥ ८ ॥

देवान्तको रावणपुत्रो हरेः कुमारमङ्गदमरुद्ध रुद्धवान्। सैन्यैः सैनिकैः प्राप्य गत्वा। अर्थात्संग्रामभूमौ। विपक्षस्य शत्रोः कम्पार्थं त्रासनिमित्तम्। किंविशिष्टः। द्विषां शत्रूणां यच्छोभनं शर्म सुखं तस्य यदपनयनं तस्यैकः कर्ता कारकः। समृद्धमुचितं यद्गोपालस्य पृथ्वीपालस्य बलं सैन्यं तस्य प्रणोदी नोदनशीलः ॥ पक्षे—सुशर्मा त्रैगर्तराजः

1. 'सङ्गमलाभहेतुं' कलि०.

पार्थमर्जुनमरुद्ध। द्विषामपनयैककर्ता अपकारकारी। हरेरिन्द्रस्य कुमारं विपक्षकमिति। स्वार्थे कन्। विपक्षमित्यर्थः। देवान्तको देववैरी असुर इत्यर्थः॥

समापतन्तः प्रसभं समन्तादपि द्विषच्चक्रविभेददक्षाः।
व्यूहं न भेत्तुं व्यषहन्त वीराः पद्मं मयूखा इव शीतरश्मेः॥ ९॥

वीरा योधाः हनूमत्प्रभृतयो भीमप्रभृतयो वा तं व्यूहं शत्रुसमूहं पद्म(चक्र)व्यूहं वा भेत्तुं न व्यषहन्त न समर्था बभूवुः। कीदृशाः। प्रसभं हठात् समन्ततः सर्वतो द्विषतां चक्रस्य समूहस्य विभेदे दक्षाः अतिकुशला अपि। शीतरश्मेश्चन्द्रस्य मयूखाः किरणाः पद्ममिवेति॥

तमुद्यतस्यन्दनसिन्धुराजं व्यूहं द्विषां दुष्करभेदमन्यैः।[1]
दृष्ट्वा सपत्राकरणाय तस्य न्ययुङ्क्त राजा पुरुहूतपौत्रम्॥ १०॥

राजा रामो वानरराजः सुग्रीवो वा [तं] पुरुहूतपौत्रमङ्गदं न्ययुङ्क्त नियुक्तवान्। किं कृत्वा। द्विषतां व्यूहं दृष्ट्वा। कीदृशम्। अन्यैस्तदतिरिक्तैर्दुष्करो भेदो विदारणं यस्य। उद्यताः स्यन्दना वेगिनः सिन्धुराजाः समुद्रा यत्र। उद्यतः प्रवृत्तः स्यन्दनानां रथानां सिन्धुराणां हस्तिनामाजः वेगो यत्रेति वा। किमर्थम्। व्यूहस्य शत्रुसमूहस्य सपत्राकरणाय नाशाय। 'सपत्रनिष्पत्रादतिव्यथने' इति॥ पक्षे—राजा युधिष्ठिरः पुरुहूतपौत्रमभिमन्युं न्ययुङ्क्त। अन्यैर्दुष्करभेदं व्यूहं रचनाविशेषं दृष्ट्वा। कीदृशम्। उद्यतः स्यन्दनो यस्यैवंभूतः सिन्धुराजो जयद्रथो यस्य। शेषं समानम्॥

स संनिदेशं पितृसोदरस्य संस्थाप्य मालामिव मौलिदेशे।
तूर्णं रथेनेव मनोरथेन प्रत्यर्थिनां स्कन्धमभिप्रतस्थे॥ ११॥

सोऽङ्गदः प्रत्यर्थिनां शत्रूणां स्कन्धं सैन्याग्रमभिप्रतस्थे जगाम। रथेनेव रथसदृशेन मनोरथेन शीघ्रं पितृसोदरस्य सुग्रीवस्य संनिदेशमाज्ञां मालामिव मौलौ शिरसि निधाय॥ पक्षे—सोऽभिमन्युः प्रत्यर्थिनां जयद्रथादीनां स्कन्धमभिप्रतस्थे। पितृसोदरस्य युधिष्ठिरस्य रथेन यथा मनोरथेन। शेषं समानम्॥

स बाणवंशोच्चशरासनस्फुरत्कराग्ररंहःकृतमार्गमग्रतः।
जवाज्जगाहे परमण्डलं बली सुरापगापूर इवाम्भसां निधिम्॥१२॥

सोऽङ्गदः बली समर्थः परमण्डलं शत्रुसैन्यं जगाहे विलोडयति स्म। जवाद्वेगात्। किंभूतम्। बाणैः शरैर्वंशानामुच्चैर्महद्भिः शरासनैर्धनुर्भिः स्फुरत्कराग्रस्य रंहसा वेगेन कृतो मार्गो यत्र तम्। अग्रतः अग्रे। 'अग्रादिभ्यस्तस्युपसंख्यानम्' इति तसिः। सुरापगापूर इवेति। यथा अम्भसां निधिं समुद्रं सुरापगायाः पूरः प्रवाहो विगाहत इति॥ पक्षे—सोऽभिमन्युः परमण्डलं दुर्योधनसैन्यम्। बाणवंशैर्बाणसमूहैरुच्चं शरासनं यस्य सः। स्फुरत्कराग्रस्य रंहसा वेगेन कृतो मार्गो यत्र॥ शेषं तुल्यम्॥

---

१. 'समुद्यत' काश्मी०; 'तमुद्धत' कलि०.

तमाशु यान्तं रिपुचक्रमर्दनं तदानुगन्तुं व्यषहन्त नान्ये।
द्राक्सिन्धुराजेन निरुद्धमार्गाः पुरा हनूमन्तमिवात्मवर्ग्याः ॥ १३॥

तदा रिपुचक्रस्य शत्रुसमूहस्य मर्दनं विनाशकं तमङ्गदमाशु शीघ्रं यान्तमन्ये वानरा अनु पश्चाद्गन्तुं न व्यषहन्त न समर्था बभूवुः। पुरा हनूमन्तमिव। यथा सीतान्वेषणे आत्मवर्ग्या अन्ये नीलादयः पश्चाद्गन्तुं न शेकुः। आशु शीघ्रं यान्तं लङ्कां प्रति यान्तं द्राक् झटिति सिन्धुराजेन समुद्रेण निरुद्धो मार्गो येषां ते॥ पक्षे—अन्ये भीमादयस्त-मभिमन्युमाशु बलात् यान्तमर्थात् व्यूहाभ्यन्तरं गच्छन्तं रिपोश्चक्रव्यूहस्य मर्दनकर्तारम्। अत्र हेतुमाह—द्राक् सिन्धुराजेन जयद्रथेन निरुद्धो मार्गो येषाम्। यदा चक्रव्यूहं भित्त्वाभ्यन्तरं प्रविष्टोऽभिमन्युस्तदा भीमादयो जयद्रथेन रुद्धास्तमनुगन्तुं न शेकुः-इति भारते॥

परिभ्रमत्कुञ्जरनक्रचक्रं व्याविद्धवाजिव्रजवीचिमालम्।
विचिक्षिपे तेन विपक्षसैन्यं मन्थाचलेनेव महार्णवाम्भः॥ १४॥

तेनाङ्गदेनाभिमन्युना वा विपक्षस्य रावणस्य दुर्योधनस्य वा बलं सैन्यं विचिक्षिपे विक्षिप्तम्। यथा मन्थाचलेन मन्दरेणार्णवाम्भः समुद्रजलं विक्षिप्तं तद्वत्। कथंभूतम्—परिभ्रमन्तो ये कुञ्जरास्त एव नक्रास्तेषां चक्रं समूहो यत्र। तथा व्याविद्धा ये वाजिव्रजा अश्वसमूहास्त एव कल्लोलश्रेणयो यत्र॥

वीरान्बहून्बाहुबलेन मुख्यान्निघ्नन्तमेतं रणवेगनिघ्नम्।
न वीक्षितुं स प्रभवन्त्यमित्रा नैदाघमर्कं नभसीव भान्तम्॥१५॥

बहूननेकान्मुख्यान् वीरान् योधान् बाहुबलेन भुजसामर्थ्येन निघ्नन्तं व्यापादयन्तमेतमङ्गदमभिमन्युं वा वीक्षितुममित्राः शत्रवो न प्रभवन्ति स्म न शक्ता बभूवुः। रणवेगेन निघ्नमायत्तं तं नभसि गगने नैदाघमर्कमिव। निघ्नः परवशः॥

मातङ्गैरिव गण्डशैलवलिताः[1] सिन्दूरसान्द्रत्विषः
कीर्णा भूषणभीषणैर्भटभुजैर्वेल्लद्भुजंगप्रभैः।
व्याकृष्टध्वजकाननाः शरधनुश्चक्रासिनक्राकुलाः
संरुद्धध्वजिनीपथा रुधिरजाः प्रोहुर्महासिन्धवः॥ १६॥

महासिन्धवो महानद्यः प्रोहुः वहन्ति स्म। कीदृश्यः। संरुद्धोऽवरुद्धः ध्वजिनीपथः सेनामार्गो याभिस्ताः। रुधिरजाः लोहितजाताः। मातङ्गैर्हस्तिभिः गण्डशैलवलिता इव। सिन्दूरवत् सान्द्रास्त्विषो यासां ताः। सिन्दूरैः शृङ्गारितसान्तराकुम्भस्थलयुतैः। सान्द्रा अस्फुटास्त्विषो दीप्तयः। भटानां योधानां भुजैर्भूषणैरलंकरणैर्भीषणैर्भयानकैः कीर्णा व्याप्ताः। वेल्लन्तश्चलन्तो ये भुजङ्गास्तत्प्रभास्तत्सदृशाः। विशेषत आकृष्टाः ध्वजा एव

1. 'ललिताः' कलि०.

काननानि वनानि याभिः। शराश्च धनूंषि च चक्राणि च असयश्च खड्गा नक्रास्तैराकुला व्याप्ताः। अन्या अपि महानद्य एवं भवन्ति॥

विरोधिनां निकरमपोढलक्ष्मणं वितन्वता प्रसभमनेन वैरिणः।
परश्शताः समरतले निपातिताः प्रफुल्लभूरुह इव चण्डवायुना॥१७॥

अनेनाङ्गदेनाभिमन्युना वा समरतले संग्रामाङ्गणे परश्शताः शतात्परे अनेके वा वैरिणः शत्रवो निपातिताः। लक्ष्यसंख्या रिपवो हता इति यावत्। प्रसभं हठात्। कीदृशेन। विरोधिनां समूहं वितन्वता विस्तारयता। विक्षिप्तमितस्ततो गतं वा। किंभूतम्। अपोढः अपास्तो लक्ष्मणो रामस्य भ्राता येन तम्॥ पक्षे—अपोढो लक्ष्मणो दुर्योधनपुत्रो यत्र। यथा प्रचण्डेन वायुना प्रफुल्लवृक्षाणि पात्यन्ते॥

वीरवर्गैकनिर्घातं निपातितबृहद्बलम्।
द्विषन्नरान्तकः प्राप तं दुःशासनसंभवः॥ १८॥

नरान्तको रावणपुत्रस्तं द्विषं शत्रुमङ्गदं प्राप। वीरवर्गे शूरवर्गे एको निर्घातः प्रहारो यस्य तम्। निपातितं बृहन्महद्बलं सैन्यं येन तम्। दुष्टं शासनं यस्य स दुःशासनो रावणस्तस्मात्संभव उत्पत्तिर्यस्य स तथा॥ पक्षे—दुःशासनो दुर्योधनभ्राता तस्मात्संभवो यस्य स दौःशासनिस्तमभिमन्युं प्राप। निपातितो बृहद्बलो नाम सूर्यवंश्यो राजविशेषो येन। द्विषन्तो ये नरास्तेषामन्तको विनाशकः॥

यशोनिधानस्य निदानभूतं जगत्त्रयीविस्मयनीयकीर्ति।
सुराङ्गनालोचनलोभहेतु तयोरभूत्संगरकर्म भीमम्॥ १९॥

तयोरङ्गददेवा(नरा)न्तकयोः अभिमन्युदुःशासनपुत्रयोर्वा भीमं भयानकं संगरकर्म समरव्यापारोऽभूत् वृत्तम्। यश एव निधानं तस्य निदानमादिकारणभूतम्। जगतां त्रयी जगत्त्रयी त्रिभुवनं तस्य विस्मयनीया कीर्तिर्यस्य यत्र वा तत्। सुराङ्गनानां लोचनलोभस्य हेतुः कारणम्॥

मिथः समानं कृतसंप्रहारौ दिव्यैर्जनैर्व्याहृतसाधुवादौ।
जगत्प्रतिष्ठापितशुद्धकीर्ती स्वस्थावभूतामचिरादुभौ तौ॥ २०॥

अचिरादाशु शीघ्रं तावुभावङ्गददेवा(नरा)न्तकौ स्वस्थावभूताम्। अङ्गदः स्वस्थः स्वस्थितः ज्ञातिमिलितो वा बभूव। देवान्तकः स्वस्थः स्वर्गस्थ इति। 'खर्परे शरि' इति वा विसर्जनीयलोपः। किंभूतौ। मिथः परस्परं तुल्यं कृतः संप्रहारो याभ्यां तौ। दिव्यैर्जनैः व्याहृतः साधुवादो ययोस्तौ। जगति प्रतिष्ठापिता शुद्धा कीर्तिर्याभ्यां तौ॥ पक्षे—उभावभिमन्युदौःशासनी स्वस्थावभूताम्। अन्योन्याभिघातेन स्वर्गगामिनौ बभूवतुरिति॥

तदा सौभद्रमाकर्ण्य कुमारं निहतं परैः[1] ।

शुशोच राजा चित्तेन व्याकुलेन दशाननः ॥ २१ ॥

तदा असौ दशाननो रावणः चित्तेन शुशोच कष्टं चकार । किं कृत्वा । भद्रं कुशलं कुमारं पुत्रं देवा(नरा)न्तकं परैः शत्रुभिर्निहतमाकर्ण्य श्रुत्वा विशेषत आकुलेन ॥ पक्षे—राजा युधिष्ठिरः सौभद्रं सुभद्रायाः पुत्रमभिमन्युम् । दशाया अर्थात्कष्टाया अननं प्राणनं यस्य यतो वा स तथा । शेषं समानम् । 'व्यानतेन' इति पाठे विशेषत आनतेन नम्रेण । शोकाविष्टेनेति यावत् ॥

विनीयमानस्य सुहृद्वचोभिरशान्तशोकानलधूमितस्य[2] ।

निबद्धवैरस्य विरोधिवर्गैर्न स्वास्थ्यमासीत्पितुरस्य चित्ते ॥ २२ ॥

अस्य देवा(नरा)न्तकस्य पितुः रावणस्य, अस्याभिमन्योः पितुरर्जुनस्य वा चित्ते स्वास्थ्यं नासीत् चित्तं स्वस्थितं न बभूव । किंभूतस्य । सुहृदां वचोभिर्विनीयमानस्य कृतमन्युसंमार्जनस्य शिक्ष्यमाणस्य वा अशान्तेन शोकानलेन शोकाग्निना धूमितस्य समालीढस्य विरोधिवर्गैः शत्रुवर्गैः रामादिभिः दुर्योधनादिभिर्वा सह निबद्धवैरस्य निबद्धं वैरं शात्रवं येन तादृशस्य ॥

प्रधानहेतुभूतस्य निजात्मजनिपातने ।

पराक्रमं न मम्मृषे वृद्धक्षत्रात्मजस्य सः ॥ २३ ॥

स रावणः वृद्धो यः क्षत्रो दशरथः तस्यात्मजः पुत्रो रामः तस्य पराक्रमं न मम्मृषे । न सोढवानित्यर्थः । किंभूतस्य । निजात्मजस्य निजपुत्रस्य देवा(नरा)न्तकस्य निपातने मारणे प्रधानहेतुभूतस्य प्रधानकारणभूतस्य ॥ पक्षे—सोऽर्जुनः वृद्धक्षत्रो नाम राजविशेषो जयद्रथपिता तत्पुत्रो जयद्रथ एव तस्य पराक्रमं न मम्मृषे । निजात्मजोऽभिमन्युः तस्य वधे प्रधानकारणभूतस्येति । व्यूहद्वारे तेन भीमादयो निरुद्धाः, तेनाभिमन्योर्विनाशो वृत्तः—इति भारते ॥

औद्धत्यपश्चात्कृतसिन्धुराजे पुनः प्रतिद्वन्द्विनि वैरिचक्रे ।

रणाङ्गणं प्राप नरेन्द्रसेना प्रातर्दिवं भानुमतः प्रभेव ॥ २४ ॥

नरेन्द्रसेना रामसेना रणाङ्गणं प्राप संग्रामाजिरमाजगाम । भानुमत आदित्यस्य प्रभा दीप्तिः प्रातर्दिवमाकाशं यथा प्राप्नोति । वैरिचक्रे राक्षससमूहे पुनः प्रतिद्वन्द्विनि प्रतिपक्षे सतीति । कीदृशे । औद्धत्येन पश्चात्कृतः सिन्धुराजः समुद्रो येन तादृशे ॥ पक्षे—नरेन्द्रसेना युधिष्ठिरसेना । वैरिचक्रे दुर्योधनस्य सैन्ये । औद्धत्येन उत्कटत्वेन पश्चात्कृतः सिन्धुराजो जयद्रथो येन । पश्चात्सूचीव्यूहे जयद्रथं कृत्वाग्रे शकटव्यूहं विन्यस्य स्थिते इत्यर्थः ॥

---

१. 'शरैः' काश्मी०. २. 'धूपितस्य' कलि०.

अथातिकायस्य जयद्रथस्य वधाय वेगेन कृतप्रतिज्ञः ।
धनुर्विधुन्वन्विजयस्थवीयः परान्स राजावरजोऽभ्ययुङ्क्त ॥ २५ ॥

अथेत्यनन्तरं राजा रामस्तस्यावरजो लक्ष्मणः स परान् शत्रून् राक्षसान् अभ्ययुङ्क्त अभियुक्तवान् । तेषामभियोगं चकार । धनुर्विधुन्वन् चालयन् । कीदृशम् । विजये विशिष्टे जये स्थवीयः स्थिरतरम् । कीदृशः । अतिकायस्य रावणपुत्रस्य वधाय कृता प्रतिज्ञा येन । जयन् रथो यस्य सः । वेगेन हठात् ॥ पक्षे—अनन्तरं विजयोऽर्जुनः राजावरजो युधिष्ठिरावरजः अतिकायस्यातिशयितदेहस्य जयद्रथस्य वधाय कृता प्रतिज्ञा येनेति । स्थवीयः स्थिरतरं धनुर्विधुन्वन् ॥

गुरुणा कृतवर्मणा स योधिप्रतिपक्षेण सुदक्षिणेन भूयः ।
स विधाय महाहवं मनस्वी परसेनाम्बुधिमध्यमाजगाहे ॥ २६ ॥

स लक्ष्मणः परस्य शत्रोः सेनाम्बुधिमध्यं सैन्यसमुद्रस्य मध्यमाजगाहे व्यलोडयत् । स्मेति पादपूरणे । योधिना कृतयुद्धेन प्रतिपक्षेण शत्रुणा सह महाहवं महासंग्रामं विधाय कृत्वा । कीदृशेन । गुरुणा बृहत्तरेण । कृतवर्मणा कृतसंनाहेन । सुदक्षिणेन दक्षिणदिग्वर्तिना । मनस्वी मानवान् ॥ पक्षे—सोऽर्जुनः गुरुणा द्रोणेन कृतवर्मणा राजविशेषेण योधिना प्रतिपक्षेण सह महाहवं विधाय सुदक्षिणेनात्यर्थं सरलेन गुरुणेति । 'दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम् ॥' इति मेदिनिकरः ॥

अकलितलघुपातं संप्रविष्टेन दूरा-
दलघु विकिरतोच्चैर्विश्वतो विक्रमाग्निम् ।
रणभुवि परचक्रं व्याकुलं तेन तेने
त्रिपुरमिव पुरस्तात्पावकेन स्मरारेः ॥ २७ ॥

तेन लक्ष्मणेन परचक्रं परसमूहं व्याकुलं तेने विस्तारितम् । त्रस्तमिति यावत् । किंभूतेन । अकलितमनाकलितं यथा स्यात्संप्रविष्टेन सम्यक्प्रविष्टेन संप्रवेशनं यस्य तेन । कुत्र । रणभुवि संग्रामभूमौ । विश्वतः सर्वतो दूरादत्यर्थमलघु यथा स्याद्विक्रमाग्निं विक्रम एवाग्निस्तमुच्चैर्विकिरता विक्षिपता । त्रिपुरमिव । यथा पुरस्तात्पूर्वं स्मरारेः शिवस्य सायकेन त्रिपुरं व्याकुलं तेने चक्रे ॥ पक्षे—तेनार्जुनेन । शेषं तुल्यम् ॥

विन्दानुविन्दप्रतियोधिभेत्ता प्रणीतसंसप्तकजीवमोक्षः ।
सुदर्शनोद्योगहरः स सद्यश्चकार दुर्योधनमानभङ्गम् ॥ २८ ॥

स लक्ष्मणः दुर्योधनस्य रावणस्य दुःखेन योधनं यस्य स तथा योधबलाद्रावण इति ।

---

१. 'सरामावरजः' इति पाठे भारतपक्षे—रामावरजेन बलभद्रानुजेन श्रीकृष्णेन सहित इत्यर्थः.

मानस्य चित्तसमुन्नतेर्भङ्गं चकार कृतवान्। कीदृशः। विन्दानुविन्दयोः प्रतियोधिनोर्विपक्षयोर्भेत्ता विदारकः। 'विदॢ लाभे' इत्यतः 'अनुपसर्गाल्लिम्पविन्द–' इत्यादिना शप्रत्यये 'शे मुचादीनाम्' इति नुमि विन्द इति रूपम्। प्रणीतः कृतः संसप्तकानां समरादनिवर्तिनां योधानां जीवमोक्षो येन सः। शोभनं दर्शनं यस्य सः सुदर्शनः स चासावुद्योगहरश्चेति सुदर्शनोद्योगहरः॥ पक्षे—सोऽर्जुनः सद्यस्तत्क्षणं दुर्योधनस्य धृतराष्ट्रपुत्रस्य मानभङ्गं चकार। विन्दानुविन्दाववन्तीराजविशेषौ प्रतियोधिनौ तयोर्भेत्ता व्यापादकः। संसप्तकः सुशर्मादिः। सुदर्शनः श्रीकृष्णचक्रं तस्योद्योगहरः कृतयुद्धोद्योगनिर्वेद इति॥

तिरोहितार्कांशुचयैस्तदीयैर्निवार्यमाणे विशिखैर्विपक्षे।
श्रमं विनीयोर्जितविक्रमस्था रयेण चक्रुर्हरयोऽस्य हर्षम्॥ २९॥

अस्य लक्ष्मणस्य हरयो वानराः हर्षं चक्रुः कृतवन्तः। तदीयैर्लक्ष्मणसंबन्धिभिर्विशिखैर्बाणैर्विपक्षे निवार्यमाणे निवारिते सति। तिरोहिताः पिहिता अर्कस्यादित्यस्यांशुचयास्तेजःसमूहा यैस्ते तथा। रयेण वेगेन श्रमं विनीय ऊर्जितविक्रमस्था अतिशयितविक्रमस्थाः॥ पक्षे—अस्य अर्जुनस्य हरयोऽश्वाः हर्षं चक्रुः हृष्टा बभूवुः। श्रमं विनीय परिश्रमं त्यक्त्वा। रयेण ऊर्जितविक्रमवर्तिनः। तदीयैरर्जुनसंबन्धिभिर्विशिखैः शरैर्विपक्षे विदार्यमाणे सति। तिरोहितार्कांशुचयैः संछन्नादित्यकिरणैः॥

यया जघान दुर्दर्शं वीराणामृषभं हरिम्।
तयैव जघ्ने गदया रणे मत्तः श्रुतायुधः॥ ३०॥

स राक्षसो मत्तो यया गदया वीराणामृषभं श्रेष्ठं हरिं सुग्रीवं जघान हतवान्। तयैव गदया राक्षसो रणे हतः। स कीदृशः। श्रुतायुधः प्रसिद्धास्त्रः। तं कथंभूतम्। दुर्दर्शमदर्शनीयम्। महाबलम्। पक्षे—श्रुतायुधो मत्तो भ्रान्तः यया गदया वीराणामृषभं दुर्दर्शं कृच्छ्रदर्शनीयं हरिं श्रीकृष्णं जघान तयैव गदया जघ्ने हत इति। श्रुतायुधो नाम कश्चिद्देवादेव लब्धवरः यतः 'अनया गदया यं युध्यमानं शत्रुं हनिष्यसि स निश्चितं मरिष्यति, अयुद्धमानाय चेदिमां त्यजसि तदा त्वामेवेयं गदा हनिष्यतीति। ततश्चास्मिन्व्यूहे किल कृष्णमनया हनिष्याम्यतः सर्वे मरिष्यन्तीति मनसि कृत्वा भ्रान्तेनायुध्यमानाय मुक्ता सा परावृत्य तस्मिन्नेव पतिता स मृतः—इति भारते॥

अथ संगररङ्गमभ्युपेतौ क्षपयामासतुरोजसा विपक्षम्।
पवमानशरीरजश्च भीमो युयुधानश्च पतिर्वरूथिनीनाम्॥ ३१॥

अथेत्यनन्तरं पवमानस्य वायोः पुत्रो हनूमान् भीमश्च (भीमो भयानको नीलनामा च) वरूथिनीनां पतिः सेनानां पतिर्वानरेश्वरः युयुधानो युध्यमानस्तावेतौ ओजसा बलेन संग्रामाङ्गणमभ्युपेतौ तन्मध्यगौ विपक्षं शत्रुं क्षपयामासतुः क्षीणं चक्रतुः॥ पक्षे—वायुपुत्रो भीमः, युयुधानः सात्यकिः, वरूथिनीनां पतिः स्वामी संगररङ्गमभ्युपेतौ व्यूहाभ्यन्तरं प्रविष्टौ। अर्जुनस्य व्यूहाभ्यन्तरं प्रविष्टस्य प्रवृत्तिप्राप्तये व्यूहं प्रविष्टौ॥

एकेन भग्नाङ्घ्रिपरंहसोच्चैरलं बलध्वंसकृता परेण ।
ताभ्यां निरासेऽयुतवैरिवृन्दं यथान्धकारं शशिभास्कराभ्याम् ॥ ३२ ॥

ताभ्यां हनूमद्गीमा(न्नीला)भ्यां वानराभ्यामेकेनायुतवैरिवृन्दं निरासे अयुतसंख्यं दशसहस्रसंख्यं निरस्तम् । कीदृशेन । भग्नः अङ्घ्रिपो वृक्षो येन एवंभूतो रंहो वेगो यस्य तेन । ताभ्यां मध्ये परेणान्येन भीमेन भीम(नील)नाम्ना वानरसेनापतिना ॥ किंविशिष्टेन । अलमत्यर्थमुच्चैर्बलस्य ध्वंसकृता विनाशकेन । यथा चन्द्रार्काभ्यामन्धकारं निरस्यते ॥ पक्षे—भीमयुयुधानाभ्याम् । अन्यत्समानम् ॥

दधज्जिगीषाधृतिमाञ्जनेयः कृतावमानोऽपि स वृष्णिवीरः ।
त्वाष्ट्रस्य वज्रीव रणे त्रिमूर्ध्नश्चिच्छेद भूरिश्रवसः शिरोधिम् ॥ ३३ ॥

आञ्जनेयो हनूमान् त्वाष्ट्रस्य त्वष्टुः ब्रह्मणः पुत्रस्य त्रिशिरसः भूरिश्रवसः बहुकर्णस्य शिरोधिं कृकाटिकां छिन्नवान् । जेतुमिच्छा जिगीषा तया धैर्यं दधत् । कृतावमानोऽपि कृतापराधोऽपि वृष्णिरेव वीरः वज्रीव इन्द्र इव ॥ पक्षे—स वृष्णिवीरः युयुधानः भूरिश्रवसः सोमकस्य शिरो धीयतेऽत्रेति शिरोधिः । कृतावमानोऽपि भूरिश्रवसा पादेन ताडितोऽपि । त्रिमूर्ध्नः शिरोधिमाञ्जनेय इव । इन्द्रेण त्वाष्ट्रो हतः ॥

प्राप्य भङ्गमिननन्दनाद्यशःपूरिताखिलजगन्महोदरात् ।
नील एव पुनरुद्बभौ मणिः शाणघृष्ट इव भीमविक्रमः ॥ ३४ ॥

पुनरपि नील एव यूथाधिप उद्बभौ शुशुभे । महोदरात् इननन्दनात् इनस्य स्वामिनो रावणस्य नन्दनः पुत्रस्तस्माद्रक्षोविशेषात् भङ्गं प्राप्य । कीदृशः । यशसा पूरितमखिलं जगद्येन सः । भीमो भयानकः विक्रमो यस्य सः । शाणघृष्टो मणिरिव ॥ पक्षे—भीमस्य विक्रमः पुनरुद्बभौ । इननन्दनात्सूर्यपुत्रात्कर्णाद्भङ्गं प्राप्य । कीदृशात् । यशसा पूरितमखिलं जगतः महत् उदरमभ्यन्तरं येन तादृशात् । शाणघृष्टो नीलमणिरिव ॥

अथ रिपुवधपुष्यद्भूमिपार्थः प्रसर्प-
त्प्रतिबलजलराशौ सायकैः साधिताध्वा ।
त्वरितगति सुमित्रानन्दनः संप्रपेदे
तपन इव समीपं सिन्धुराजस्य शत्रोः ॥ ३५ ॥

अथानन्तरं त्वरितगति यथा स्यात् सुमित्रानन्दनः लक्ष्मणः शत्रोः समीपं संप्रपेदे प्रपन्नः । किंभूतः । रिपोर्वधेन पुष्यन् भूमिपस्य भूमिपालस्य रामस्यार्थो यस्मात्स तथा । प्रसर्पति गच्छति प्रतिबले रिपुसैन्ये जलराशाविव तत्सदृशे सायकैः शरैः साधितोऽध्वा वर्त्म येन स तथा । तपन इव । सिन्धुराजस्य समुद्रस्य समीपं तपनः सूर्यः प्राप्नोति ॥ पक्षे—पार्थोऽर्जुनः शत्रोः सिन्धुराजस्य जयद्रथस्य समीपं प्रपेदे । रिपुवधेन पुष्यन्ती

भूमिर्यत्र कर्मणि तद्यथा स्यादेवम्। तपनः सूर्य इव । शोभनानि यानि मित्राणि तेषामानन्दः आनन्दजनकः ॥

विद्युल्लेखाविलसितमिव व्योम्नि संदर्शयद्भि-
र्निर्विच्छेदप्रसरशलभश्रेणिशोभां वहद्भिः ।
जज्ञे जन्यं सममथ तयोरर्धमार्गे फलानां
संघट्टोद्यद्धुतवहशिखालीढपक्षैः पृषत्कैः ॥ ३६ ॥

अथानन्तरं तयोर्लक्ष्मणातिकाययोः समं तुल्यं जन्यं संग्रामो जज्ञे जायते स्म । कैः । पृषत्कैः बाणैः । कीदृशैः । विद्युल्लेखाया विलसितमिव व्योम्नि संदर्शयद्भिः प्रकाशयद्भिः । अतितेजस्वित्वादस्थिरत्वात्साम्यम् । विच्छेदशून्यो निर्विच्छेद एव प्रसरो गमनं यस्यैवंभूतस्य शलभस्य पतङ्गस्य श्रेण्याः परम्परायाः शोभां वहद्भिः । तत्सदृशैः इत्यर्थः । अर्धवर्त्मनि फलानां संघट्टादुत्थितस्याग्नेः शिखाभिरालीढः आक्रान्तः पक्षो वाजो येषां ते तथा ॥ पक्षे—तयोरर्जुनजयद्रथयोः। तुल्यमन्यत्। 'जनके जननीये वा जन्यं निर्वादयुद्धयोः' इति विश्वः ॥

गगनातिविलङ्घनातिवेगाद्धरिचक्रेण तिरोहिते पतङ्गे ।
रजनीमुखशङ्कया जजृम्भे निजकालागमसत्त्वरो विपक्षः ॥ ३७ ॥

विपक्षः अतिकायो जजृम्भे विकसितः। सोत्साहो जात इत्यर्थः। निजकालस्यात्मीयस्य समयस्य रात्रेरागमने सत्वरः। अर्थाद्युद्धाय राक्षसा हि रात्रौ प्रबला भवन्तीति। अतिवेगात् गगनातिविलङ्घिना आकाशलङ्घनशीलेन हरिचक्रेण वानरसमूहेन पतङ्गे सूर्ये तिरोहिते सति रजनीमुखस्य रात्र्युपक्रमस्य शङ्कया ॥ पक्षे—विपक्षो जयद्रथो निजकालस्यात्मीयसमयस्यागमने सत्वर इति । हरिचक्रेण पतङ्गे सूर्येऽन्तर्हिते सति रजनीमुखशङ्कयेति । शेषं तुल्यम् ॥

ततो महन्मन्त्रवदस्त्रमुग्रं संधाय संध्यामुखसीम्नि शत्रोः ।
मूर्धानमुद्दिश्य समीकमूर्ध्नि प्रायोजि पृथ्वीश्वरसोदरेण ॥ ३८ ॥

अनन्तरं पृथ्वीश्वरस्य श्रीरामस्य सोदरेण लक्ष्मणेन शत्रोरतिकायस्य मूर्धानमुद्दिश्य महदस्त्रं महास्त्रं मन्त्रवन्मन्त्रयुक्तम् । दैवमित्यर्थः । उग्रं प्रचण्डं संधाय अर्थाद्धनुषि प्रायोजि प्रायुङ्क्त । क्षिप्तमित्यर्थः । कुत्र समीकमूर्ध्नि संग्रामशिरसि । उपक्रान्त इत्यर्थः । संध्यामुखसीम्नि इति समयकथनम् ॥ पक्षे—पृथ्वीश्वरस्य युधिष्ठिरस्य सोदरेणार्जुनेन शत्रोर्जयद्रथस्य । शेषं संमितम् ॥

अमुनास्य मुरद्विषेव राहोः क्षपिते मूर्ध्नि विहाय जीवलोकम् ।
प्रचलन्नमितः कबन्धभावं न रणे कस्य भयं करोति कायः ॥ ३९ ॥

---

१. 'संघर्षो' कलि०. २. 'पृथ्वीपति' कलि०.

अमुना लक्ष्मणेन अस्यातिकायस्य रक्षसो मूर्ध्नि शिरसि क्षपिते सति अतिकायो राक्षसः रणे कस्य भयंकरो न जातः । अपि तु सर्वस्यैवेति । किंभूतः । जीवलोकं विहाय प्रचलन् कबन्धभावं कबन्धत्वं गमितः । मुरद्विषेव । यथा मुरद्विषा श्रीकृष्णेन राहोः शिरसि छिन्ने सति स भयंकरोऽभूत् ॥ पक्षे—अस्य जयद्रथस्य कायः शरीरमतिभयंकरः कस्य न बभूव । अपि तु सर्वस्यैव । अस्य जयद्रथस्यातिकायः अतिकायः अतिशयितशरीरं वा । अमुनार्जुनेनास्य मूर्ध्नि क्षपिते सति ॥

तदाननेनोत्पतता तदानीमसृक्स्नुता चित्रकिरीटभासा ।
व्यरोचताखण्डलचापरेखा[2] सीमन्तितप्रान्तमिवान्तरिक्षम् ॥ ४० ॥

तदानीं तस्मिन्काले तदाननेन तयोरतिकायजयद्रथयोराननेन मुखेन उत्पतता ऊर्ध्वं गच्छता अन्तरिक्षं गगनं व्यरोचत शोभते स्म । कथंभूतमिव । आखण्डलस्य शक्रस्य चापरेखया धनुर्लेखया सीमन्तितः प्रान्तो यस्येत्येवंभूतमिव । कीदृशेन । असृक्स्नुता रुधिरोक्षितेन । स्रवद्रुधिरेणेत्यर्थः । तृतीयान्तं पदम् । तथा चित्रा नानारूपा किरीटस्य मुकुटस्य भा दीप्तिर्यत्र यस्य वा तेन ॥

कृत्तं लसत्कुण्डलमुत्तमाङ्गं शत्रोर्विवल्गत्कपिलक्ष्मणास्त्रैः ।
रणक्षितेः पातितमङ्कदेशे तेने पितुः प्राणभयं निजस्य ॥ ४१ ॥

शत्रोरतिकायस्य कपिसहितस्य लक्ष्मणस्यास्त्रैः कृत्तं छिन्नमुत्तमाङ्गं शिरः कर्तृ निजस्य पितुः रावणस्य प्राणभयं वितेने चकार । तद्दृष्ट्वा तस्य पितुः प्राणभयं जातम् । विशेषाद्रणक्षितेः संग्रामभूम्याः अङ्कदेशे पातितम् । लसत्कुण्डलं यत्रेति ॥ पक्षे—तस्य जयद्रथस्य । निजस्य पितुः वृद्धक्षत्रस्य । प्राणभयं वितेने । उत्पतितं दृष्ट्वा सोऽपि मृतः । कपिलक्ष्मणा कपिचिह्नेनार्जुनेनास्त्रैः कृत्तमिति । रणक्षितेः संग्रामभूमितः पितुः वृद्धक्षत्रस्याङ्कदेशे हस्तैः(ऽस्त्रैः) पातितम् । अन्यथा तस्यैव हन्तुरर्जुनस्य वधः स्यात् ॥

तदनु कदनभूमेः खेचरैः स्तूयमानः
प्रसभमवनिभर्तुः सोदरो निर्जगाम ।
युधि समधिकधौतां कीर्तिमुद्धृत्य पृथ्वीं
प्रलयजलधिमध्याच्छ्रीवराहः पुरेव ॥ ४२ ॥

अवनिभर्तुः रामस्य युधिष्ठिरस्य वा सोदरो लक्ष्मणोऽर्जुनो वा कदनभूमेः संग्रामभुवो निर्जगाम बहिर्गतः स्वशिबिरमागतः । किंभूतः । प्रसभमत्यर्थं खेचरैराकाशस्थैः देवैः स्तूयमानः । तदनु तत्पश्चात् । शत्रुवधादनन्तरमित्यर्थः । युधि समधिकमत्यर्थं धौतां निर्मलां कीर्तिमुद्धृत्य । श्रीवराह इवेति । यथा प्रलयजलधिमध्यात्प्रलयकाले समुद्राभ्यन्तरादादिवराहो वराहरूपी भगवान् श्रीकृष्णः पृथ्वीमुद्धृतवानिति ॥

---

१. 'शरीरं कस्य भयं न करोति' इत्येव व्याख्यानं चारु. २. 'लेखा' कलि०.

निशाकरेणेव नरेश्वरेण प्रणीतभास्वज्जयमङ्गलश्रीः।
रराज राजावरजो जनानां मुदं वितन्वन्निव कामदेवः ॥ ४३ ॥

राज्ञो रामस्य युधिष्ठिरस्य वा अवरजो लक्ष्मणोऽर्जुनो वा रराज शुशुभे। नरेश्वरेण श्रीरामेण युधिष्ठिरेण वा प्रणीता जयस्य मङ्गलश्रीः मङ्गलसंपद्यस्य येन वेति। जनानां मुदं वितन्वन् कामदेवः कन्दर्प इव। एतत्काव्यकर्ता कामदेवो राजविशेष इव वा। सोऽपि निशाकरेण चन्द्रमसा प्रणीतभास्वज्जयमङ्गलश्रीर्भवतीति ॥

इति हलधरणीप्रसूतकादम्बकुलतिलकचक्रवर्तिवीरश्रीकामदेवप्रोत्साहितकविराजपण्डित-विरचिते कामदेवाङ्के राघवपाण्डवीये महाकाव्ये शशिधरविरचिते राघवपाण्डवीय प्रकाशे च लङ्काकाण्डीयद्रोणपर्वस्थयुद्धवर्णनो नाम दशमः सर्गः ॥

---

एकादशः सर्गः।

अथ परिभवरोषात्प्रेषितास्तेन राज्ञा
रजनिचरचमूभिः संगताः सैन्यनाथाः।
त्वरिततरमरौत्सुर्धर्मराजस्य सैन्यं
भुवमिव तिमिराणां राशयो वासरान्ते ॥ १ ॥

अथानन्तरं रजनिचराणां राक्षसानां चमूभिः संगता युक्ताः सैन्यनाथाः सैनिकाः पराभवेण रोषात् तेन रावणेन प्रेरिता धर्मराजस्य धर्मप्रधानस्य राज्ञः श्रीरामस्य सेनां त्वरितं शीघ्रमरौत्सुः रुन्धन्ति स्म। वासरान्ते संध्यायां तिमिरराशयः अन्धकारसमूहाः पृथ्वीमण्डलमिव ॥ पक्षे—तेन राज्ञा दुर्योधनेन जयद्रथवधजनितरोषात् सैन्यनाथाः द्रोणकर्णादयः धर्मराजस्य युधिष्ठिरस्य सेनां वासरान्ते अरौत्सुः। रजनिचरचमूभिः संगताः युधिष्ठिरपक्षपातिनः ॥

व्यूहावुभौ संमुखतामुपेतौ मिथो बलाङ्गानि बभञ्जतुस्तौ।
सद्यो जगन्तीव युगान्तकाले परापरावम्बुनिधी प्रसक्तौ ॥ २ ॥

तावुभौ व्यूहौ श्रीरामरावणयोः कौरवपाण्डवयोर्वा सैन्यसमूहौ मिथोऽन्योन्यं सैन्याङ्गानि हस्त्यश्वरथपदातिरूपाणि सद्यस्तत्कालं बभञ्जतुः विमर्दयतः स्म। संमुखतामुपगतौ। युगान्तकाले प्रसक्तौ संगतौ पूर्वपश्चिमावम्बुनिधी समुद्रौ जगन्ति लोकानिव ॥

अविरलरणधूलिध्वान्तरुद्धेऽन्तरिक्षे
ज्वलितदशदिगन्ता तीव्रहेतिप्रदीपैः।
द्रुतकवलितरोधःकन्दरोदारधीर-
ध्वनिरजनि रणश्रीः सेनयोः संप्रवृत्ते ॥ ३ ॥

श्रीरामरावणसेनयोः पाण्डवकौरवसेनयोर्वा रणश्रीः संग्रामसंपत् शोभा वा अजनि

जनिता । कस्मिन्सति । अन्तरिक्षे एवं संप्रवृत्ते सति । कीदृशे । अविरला निबिडा या रणधूलिः सैव ध्वान्तं तमस्तेन रुद्धे व्याप्ते । सा कीदृशी । ज्वलिताः प्रदीप्ताः दश दिगन्ता यया सा तथा । कैः । तीव्रा निशिता या हेतयोऽस्त्राणि ता एव प्रदीपास्तैः । द्रुतं शीघ्रं कवलितो रोधःकन्दरो येन एवंभूत उदार उद्भटो धीरो ध्वनिर्यत्र सा तथा । द्यावापृथिव्योरन्तरालं रोधः इति ॥

रणे रिपूणां बलभिद्विजेता गुरुप्रभावाद्भृशदुर्निरीक्ष्यः ।
महास्त्रधारानिकरैः प्रवीरानपेतसंग्रामतृषश्चकार ॥ ४ ॥

बलभिद्विजेता बलभिद इन्द्रस्य विजेता मेघनादो रणे संग्रामे रिपूणां शत्रूणां प्रवीरान्प्रकृष्टयोधान् अपेतसंग्रामतृषः अपेता गता संग्रामतृट् येषां ते येभ्यो वा तादृशान् चकार कृतवान् महास्त्राणां धारानिकरैर्धारासमूहैः रणमूर्धनि बहून् योधान् जघानेति गुरुणा अतिशयितेन प्रभावेण दुर्निरीक्ष्यः ॥ पक्षे—रिपूणां विजेता जयनशीलः बलभित् बलभिन्नामराजविशेषः[1] गुरोर्द्रोणस्य प्रभावाद्भृशमत्यर्थं दुर्निरीक्ष्यः । प्रवीरान् पाण्डवपक्षपातिनः शत्रुयोधान् । बलं सैन्यं रिपूणां सामर्थ्यं वा भिनत्तीति बलभित् ॥

भिन्नाङ्गदं त्रस्तबलाधिनाथं भ्राम्यद्गजं विह्वलदश्विपुत्रम् ।
अभीमसंरम्भमनेन भग्नं रराज नाजौ नरदेवसैन्यम् ॥ ५ ॥

नरदेवसैन्यं श्रीरामसैन्यमनेनेन्द्रजिता मेघनादेन भग्नं भङ्गं प्रापितमाजौ संग्रामे न रराज न शुशुभे । किंभूतम् । भिन्नो विदारितोऽङ्गदो वालिपुत्रो यत्र । त्रस्तो बलाधिनाथो यूथपः सुग्रीवो यत्र । भ्राम्यन्गजो नाम वानरविशेषो यत्र । विह्वलन्तावश्विपुत्रौ मैन्दद्विविदौ वानरविशेषौ यत्र । न विद्यते भीमस्य वानरविशेषस्य संरम्भो यत्र ॥ पक्षे—युधिष्ठिरसैन्यमनेन बलभिदा [गुरुणा] । अङ्गदो भुजालंकारविशेषः । बलाधिनाथो धृष्टद्युम्नः । गजा हस्तिनः । अश्विपुत्रौ नकुलसहदेवौ । भीमो वृकोदरः ॥

तथा तदीये ज्वलति प्रतापे ज्ञात्वा महो ब्राह्ममभेद्यमन्यैः ।
विष्णोर्जगत्क्षेमकरोऽवतारः स्वपक्षपीडां कथमप्यसोढ ॥ ६ ॥

विष्णोरवतारः श्रीरामः जगतां क्षेमं कल्याणं करोतीति जगत्क्षेमकरः स्वसैन्यस्य पीडां विमर्दं कथमपि कष्टमसोढ सहते स्म । तदीये इन्द्रजित्संबन्धिनि प्रतापे ज्वलति सति ब्राह्मं ब्रह्मवराल्लब्धं महस्तेजः अन्यैरभेद्यं ज्ञात्वा ॥ पक्षे—विष्णोरवतारः श्रीकृष्णः स्वपक्षस्य आत्मीयपक्षपातिनः पीडां कथमप्यसोढ । [ब्राह्मं द्रोणसंबन्धि ।] तदीये बलभितः [द्रोणस्य] संबन्धिनि प्रतापे ज्वलति सतीति ॥

---

१. गुरुरिति सविसर्गपदमाश्रित्य बलभिदिति गुरोर्द्रोणस्य विशेषणं मन्येत तदातीव वरम् । रामायणपक्षे तु 'गुरुप्रभावात्' इति समस्तमेव वाङ्गीकर्तव्यम् । 'यमकश्लेषचित्रेषु विसर्गसदसत्त्वयोः । न विशेषः' इत्युक्तेः.

स्वशक्तिजृम्भाभिरिवौषधीभिर्निवारितारातिमहास्त्रपीडः।
उज्जीवयन्राजबलं त्रिलोकीं विस्मापयामास हरेः कुमारः॥ ७॥

हरेः कुमारो हनूमान् त्रिलोकीं लोकत्रयं विस्मापयामास विस्मितं चकार। राजबलं रामसैन्यमुज्जीवयन् जीवितं कुर्वन्। किंभूतः। निवारिता निराकृता अरेर्महास्त्रस्य पीडा व्यथा येन स तथा। काभिः। औषधीभिरमृतसंजीविनीभिः। स्वशक्तिजृम्भाभिर्दीप्तिभिरिव। पर्वतौषधीरानीय॥ पक्षे—हरेः कुमारोऽर्जुनो राजबलं युधिष्ठिरसैन्यं जीवयन्। काभिः। स्वशक्तिजृम्भाभिः निजप्रतापप्रपञ्चैः। 'विकासे जृम्भने जृम्भा' इति विश्वः। औषधीभिरिवेति॥

वीरेषु वैरात्परचक्रमध्यं विशत्स्वनालोचितकालमेव।
ततः क्षपायुद्धमवर्ततोल्काकरालदीपक्षपितान्धकारम्॥ ८॥

ततस्तदनन्तरं क्षपायुद्धं क्षपायां रात्रौ युद्धमवर्तत वृत्तम्। किंभूतम्। वैरात्परचक्रमध्यं विशत्सु वीरेषु सत्सु। कथम्। अनालोचितः कालो यत्र तत् इत्थं यथा स्यादिति। उल्का एव करालदीपास्तैः क्षपितमन्धकारं यत्र। उभयत्र समानम्॥

तत्रातिमात्रं रविनन्दनस्य तेजो दिदीपे परवाहिनीषु।
निषिद्धनासत्यसुतोद्यमस्य रक्षोवधाय स्वयमुद्यतस्य॥ ९॥

तत्र रात्रियुद्धे रवेरादित्यस्य नन्दनः पुत्रः सुग्रीवस्तस्य तेजो दिदीपे दीप्तं बभूव। तेजः पराक्रमः। अतिमात्रमत्यर्थम्। परवाहिनीषु राक्षससेनासु। किंभूतस्य। निषिद्धो नासत्यसुतस्य सुषेणस्योद्यमो येन। रक्षोवधाय स्वयमुद्यतस्य। सुषेणं नाम वानरं निवार्य युद्धायात्मनोद्यतस्येत्यर्थः॥ पक्षे—रविनन्दनस्य कर्णस्य। परवाहिनीषु पाण्डवसेनासु। किंभूतस्य। निषिद्धो नासत्यसुतयोर्नकुलसहदेवयोरुद्यमो येन स तथा। युद्धायेति शेषः। रक्षोवधाय घटोत्कचवधाय॥

तमभ्यधावत्क्षतशत्रु रक्षोघटोत्कचस्फीतविटङ्कमौलिः।
चलाचलाकारकरीन्द्रपालीकुम्भप्रणुन्नाम्बुदसंहतिश्रीः॥ १०॥

तं रविनन्दनं सुग्रीवमभि लक्ष्यीकृत्य राक्षसघटा राक्षससमूहः अभ्यधावत्। क्षतशत्रु यथा स्यादेवम्। उत्कचा ऊर्ध्वकेशाः तैः स्फीतो विटङ्को यत्र तादृशो मौलिर्यस्याः। चलो गन्ता योऽचलः पर्वतस्तस्यैवाकारो येषामेवं करीन्द्रा हस्तिश्रेष्ठास्तेषां पाली श्रेणी तस्याः कुम्भेन प्रणुन्नाया अम्बुदसंहतेः श्रीर्यया सा। 'पालिः कर्णतलाग्रेऽस्रावङ्के पङ्क्तौ च योषिति। यूकायामपि पाली स्याज्जातश्मश्रुस्त्रियामपि॥' इति विश्वः॥ पक्षे—तं रविनन्दनं कर्णमभि घटोत्कचो रक्षोऽधावत्। कीदृशं रक्षः। क्षताः खण्डिताः शत्रवो येन तदेवं क्षतशत्रु। स्फीतो विटङ्कः किरीटो यत्र। एवं मौलिर्यस्य। चलाचलाकारः गन्तृपर्वतसदृशः करीन्द्रपाली कुम्भप्रणुन्नश्च अम्बुदसंहतिश्रीश्चेति

त्रिभिः कर्मधारयः । चलाचलाकारकरीन्द्रपाल्याः कुम्भप्रणुन्नाम्बुदसंहतिसदृशी श्रीः कान्तिर्यस्येति वा ॥

भ्रान्तान्तर्गिरिनक्रचक्रमचिरादुद्घूर्णितैरर्णवै-
राघ्राताहितजीवितैः प्रहरणैराक्रान्तरोदो[1]ऽन्तरम् ।
ध्वस्तद्वाःस्थविरिञ्चिलोकमपुनर्व्यावृत्तिनिष्ठैर्भटै-
र्गीर्वाणा ददृशुः सविस्मयधियो दूरात्तयोः संगरम् ॥ ११ ॥

तयोः सुग्रीवेन्द्रजितोः (सुग्रीवकुम्भयोः) घटोत्कचकर्णयोर्वा संगरं संग्रामं गीर्वाणा देवा ददृशुः पश्यन्ति स्म दूरात् । सविस्मया साश्चर्या धीर्बुद्धिर्येषां ते । किंभूतम् । अचिराच्छीघ्रमेव उद्घूर्णितैरर्णवैः समुद्रैः कृत्वा भ्रान्तम् अन्तर्वासिनां गिरीणां नक्राणां च चक्रं यत्र । तथा—आघ्रातानि लीढानि अहितानां रिपूणां जीवितानि यैः । एवम्—प्रहरणैः अस्त्रैराक्रान्तो(न्तं) रोध(द)सोः द्यावापृथिव्योरन्तरं यत्र तत् । ध्वस्तो द्वाःस्थो यत्र । एवंभूतो विरिञ्चिलोको ब्रह्मलोको यत्र । कैरेवं कृतम् । भटैर्योधैः । कथंभूतैः । पुनर्विशेषेण आवृत्तिः परावर्तनमपुनर्व्यावृत्तिरपुनरागमनं तत्र निष्ठा येषां ते तथा ॥

ताभ्यामन्योन्यसैन्ये समरभुवि मुहुर्नोद्यमाने महास्त्रैः
सद्यो भारावतारात्क्षि[2]तिरपि सुतरां भोगिभर्तुर्बभूव ।
वीरैर्वीरा[3]न्विभङ्क्त्वाप्यहमहमिकया गाहमानैः समन्ता-
दाक्रान्तोद्यानहर्म्यस्थलमणिभवना द्यौर्ननामातिभारात् ॥ १२ ॥

ताभ्यां सुग्रीवेन्द्रजिद्भ्यां (सुग्रीव-कुम्भाभ्यां) घटोत्कचकर्णाभ्यां वान्योन्यं परस्परं रामरावणयोः कुरुपाण्डवयोर्वा बले मथ्यमाने सति क्षितिरपि पृथिव्यपि सद्यस्तत्कालं भारावतारात् भारावरोपणात्सुतरामत्यर्थं गुर्वी बभूव । कस्येत्याह—भोगिभर्तुः शेषस्य । नागराजस्येत्यर्थः । अतिभारात् द्यौः स्वर्गोऽपि ननाम । समन्तात् सर्वतः वीरैर्योधैराक्रान्तोद्यानहर्म्यस्थलमणिभवनेति पृथ्वीविशेषणं वा । आक्रान्तानि उद्यानहर्म्याणि मणिमयभवनानि च यस्याः सा । किंभूतैः । वीरान् विभङ्क्त्वा अपि अहमहमिकया अहंपूर्वमहंपूर्वमित्याकारेण गाहमानैः । पृथ्वीं दिवं चेत्यर्थात् । 'द्वाराणि भङ्क्त्वा' इति पाठान्तरे तत्र द्वाराणि व्यूहद्वाराणि गाहमानैरित्यर्थः । भङ्क्त्वा वीरानित्यर्थः । द्वाराणि भङ्क्त्वा वेति ॥

---

१. 'रोधो' काश्मीर०. २ 'क्षितिरतिसुवहा' इति पाठे 'भारावताराद्भारावरोपणादत्यन्तं सुवहा लघुत्वेन बभूव' इति प्रेमचन्द्रव्याख्यानमेव वरम् । एवं च 'क्षितिरपि सुधरा' इति पाठोऽपि शब्दघटितोऽपि मनोरमः । 'भारावतारादत्यन्तं गुर्वी' इति व्याख्यानं तु न मनोरमम्. ३. 'द्वाराणि भङ्क्त्वा' इति पाठे द्वाराणि स्वर्गद्वाराणीत्यर्थः.

चरन्धरित्र्यामुत तूर्णमम्बरे पुरोऽथ पश्चादथ पार्श्वयोर्द्वयोः।
बलानि भिन्दन्बहुहेतिसंचयैर्न राक्षसेन्द्रो निरचीयतापरैः ॥ १३ ॥

स राक्षसेन्द्रो मेघनादो (कुम्भो) घटोत्कचो वा अपरैर्वानरभटैर्योधैर्वा न निरचीयत नाज्ञायत। किं कुर्वन्। बहुभिः हेतिसंचयैः अस्त्रसमूहैः बलानि उभयसैन्यानि भिन्दन् विदारयन्। चरन्निति धरित्र्यां पृथिव्यां चरन् गच्छन्। ततोऽनन्तरं पक्षान्तरे तूर्णं शीघ्रमम्बरे गगने चरन्। 'उत प्रश्ने वितर्के च' इति मेदिनीकरः। अथानन्तरं पुरोऽग्रे चरन् पश्चादपि चरन् ॥

तदनु रविसुतेन प्रस्फुरच्छक्तिरुच्चै-
र्बृहदवयवभारैः क्षुण्णदिग्दन्तिकुम्भः।
रजनिचरचमूपः संयुगान्ते युगान्ते
गिरिरिव पवनेन क्ष्मातले पातितोऽभूत् ॥ १४ ॥

ततः पश्चात् रविसुतेन सुग्रीवेण कर्णेन वा रजनिचरचमूपः राक्षससेनापतिः कुम्भनामा घटोत्कचो वा राक्षसः क्ष्मातले पृथिव्यां पातितोऽभूत् वृत्तः। संयुगे संग्रामे। रजनिचरश्चासौ चमूपश्चेति कुम्भघटोत्कचयोरुभयोः पक्षे समासः। किंभूतः। प्रस्फुरन्ती शक्तिरस्त्रविशेषो यस्य। घटोत्कचपक्षे देहलग्नैव शक्तिः एकघ्न्या शक्त्या कर्णेन हतः। उच्चैरत्यर्थं बृहतोऽवयवस्य हस्तपादादेः भारेण क्षुण्णा दिग्दन्तिनो यथा स्यादेवम् कुम्भपक्षे। घटोत्कचपक्षे—बृहदवयवभारेण क्षुण्णा दिग्दन्तिनां कुम्भाः कुम्भस्थलानि येन। 'कुम्भो राश्यन्तरे हस्तिमूर्धाग्रे राक्षसान्तरे' इति मेदिनीकरः। युगान्ते प्रलये पवनपातितो गिरिरिवेति ॥

तस्मिंस्तदोपेयुषि दीर्घनिद्रां बभूव शोकाकुलितः स्वपक्षः।
विरोधिवर्गः सुतरां जहर्ष न कोऽपि सर्वप्रियतामुपैति ॥ १५ ॥

तस्मिन्कुम्भे घटोत्कचे वा तदा तस्मिन्काले दीर्घनिद्रां मरणमुपेयुष्युपगते सति स्वपक्ष उभयोरात्मीयवर्गः शोकाकुलितो बभूव। विरोधिवर्गस्तयोरित्यर्थात्। वानरसमूहः कौरवसमूहो वा सुतरामतिशयेन जहर्ष ननर्त। कोऽपि न सर्वप्रियत्वमुपैति। गच्छतीति यावत् ॥

तदनु किल निकुम्भः कोष्ठशूलं यथोग्रं
निधिमिव सलिलानामुद्धतं कुम्भजन्मा।
रणभुवि परसैन्यं शून्यतामाशु निन्ये
भुवनदहनदाहारम्भतीव्रास्त्रतेजाः ॥ १६ ॥

तत्पश्चान्निकुम्भः कुम्भकर्णपुत्रः भारते निकुम्भो राजविशेषो(षः, कुम्भजन्मा द्रो-

णाचार्यो) वा रणभुवि समरे रिपुसैन्यमुभयत्र शून्यतां योधादिशून्यत्वमाशु शीघ्रमनयत् । किंभूतः । भुवनदहनस्य दाहारम्भे दाहोपक्रमे तीव्रमन्त्रतेजो यस्य स तथा ॥ उग्रं भयंकरं कोष्ठशूलमुदरशूलं निकुम्भ औषधिविशेषो यथा निकरोति इति । यथा कुम्भजन्मा अगस्त्यः सलिलानां निधिं समुद्रं शून्यतां जलशून्यत्वं नीतवानिति । 'निकुम्भः कुम्भकर्णस्य तनये दन्तिकौषधे' इति मेदिनीकरः[१] ॥

बाणार्णवौघैर्गमितेषु भूयोऽनेकेषु नाकं बलनायकेषु ।
युधः पलायन्त युधिष्ठिरस्य सैन्यानि कुम्भोद्भवभीतियोगात् ॥ १७ ॥

युधि संग्रामे स्थिरस्य रामभद्रस्य सैन्याः सैनिका युधः संग्रामात् पलायन्त पलायिताः । निकुम्भादुद्भवो यस्यास्तादृश्या भीतेः योगात् संबन्धात् । 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इत्यमरः । अनेकेषु बलनायकेषु यूथाधिपेषु बाणार्णवौघैः बाणसमुद्रसमूहैः नाकं स्वर्गं गमितेषु सत्सु । विनाशितेषु इत्यर्थः । 'नैकेषु' इति क्वचित्पाठः । नकारः शिरश्चालने । अपि त्वनेकेष्वित्यर्थः ॥ पक्षे—युधिष्ठिरस्य धर्मनन्दनस्य । निकु[३]म्भो राजविशेषः । बाणा एव अर्णवौघाः समुद्रप्रवाहाः । भूयः पुनरपीति ॥

ततः कुमारव्यसनोग्रवार्तां गुरोर्विदित्वा सुकरं निपातम् ।
हरिर्मरुन्नन्दन उद्यतात्मा समादधे तन्निधनाय यत्नम् ॥ १८ ॥

मरुन्नन्दनो वायुपुत्रो हरिर्वानरो हनूमान् तन्निधनाय निकुम्भवधाय यत्नं समादधेऽकरोत् । किं त्वि(कृत्वे)त्याह—कुमारस्य रावण(कुम्भकर्ण)पुत्रस्य यद्व्यसनं वधस्तेनोग्रा वार्ता प्रवृत्तिः तां विदित्वा । (किम् । गुरोर्निपातं सुकरम् ।) ततो गुरो रावणस्य निपातं वधं सुकरं विदित्वा ज्ञात्वा । उद्यत आत्मा यस्य स तथा । 'कुमारव्यसनश्रवात्तद्गुरोर्विदित्वा' इति क्वापि पाठः । तत्र कुमारस्य रावण(कुम्भकर्ण)पुत्रस्य व्यसनं तस्य श्रवात् श्रवणात् तद्गुरोस्तस्य पितुः रावणस्येत्यर्थात् ॥ पक्षे—हरिः श्रीकृष्णस्तन्निधनाय निकुम्भनामकभारतयोधराजविशेषस्य (तस्य कुम्भोद्भवस्य द्रोणस्य) निधनाय । कुमारो घटोत्कचः (अश्वत्थामा) तद्व्यसनोग्रवार्तां (विदित्वा) गुरोर्द्रोणस्य निपातं सुकरं विदित्वा । मरुन्नन्दनो भीमः उद्यतात्मा प्रकाशितात्मा । यद्यनयोरेकघ्न्या शक्त्या न कर्णो घटोत्कचं निहन्यात्तदानयार्जुनं निहन्यादिति हर्षहेतुं प्रकाशितवानिति भावः । 'व्यसनश्रवात्' इति पाठे कुमारस्याश्वत्थाम्नो व्यसनश्रवात्तद्गुरोस्तत्पितुः द्रोणस्य निपातं सुकरं विदित्वा । यदायं द्रोणोऽश्वत्थाम्नो विनाशं श्रोष्यति तदा शस्त्रत्यागं करिष्यति तदास्य निपातनं सुकरमिति भीमप्रकाशितम् ॥

---

१. निकुम्भकुम्भजन्मनोर्द्वयोरप्येकैकमुपमानोपमेयत्वेन श्लेषसंकीर्णोपमानोपमेयभावः. २. एकेषु प्रधानेषु । सैन्याः पलायन्त न, अपि तु पलायन्तैव । अयमेव मुख्यः पाठः । अनेकशब्दस्य बहुवचनान्तत्वे भाष्यविरोधात्. ३. वस्तुतस्तु—'कुम्भोद्भवाद्द्रोणाचार्याद्भीतिसंबन्धे युधिष्ठिरस्य सैन्यानि पलायन्त' इत्येवार्थः.

कृतास्त्रसंतानविघातवार्तामनीश्वरः सोढुमसौ समन्युः ।
प्राणच्छिदः शत्रुबलस्य मध्ये नेता बलानां विससर्ज हेतिम् ॥१९॥

असौ निकुम्भो बलानां नेता सैन्याधिपः प्राणच्छिदः प्राणापहारकस्य शत्रुबलस्य रामसैन्यस्य मध्ये हेतिमस्त्रं विससर्ज तत्याज । कीदृशम् । कृतस्य क्षिप्तस्य अस्त्रसंतानस्य अस्त्रसमूहस्य विघातवार्तां सोढुं विषहितुमनीश्वरोऽप्रभुः । अत एव समन्युः सक्रोध इति ॥ पक्षे—असौ बलानां नेता द्रोणः प्राणापहारकस्य शत्रुबलस्य मध्ये समराङ्गणे हेतिं विससर्ज अस्त्रत्यागं कृतवानिति । कृतमस्त्रं येन एवंभूतस्य संतानस्य पुत्रस्य अश्वत्थाम्नो विघातवार्तां मारणप्रवृत्तिं श्रोतुमनीश्वरः । समन्युः सशोकः । अश्वत्थामा हत इति युधिष्ठिरवाक्यानन्तरमनेनास्त्रत्यागः कृत इति भारते । बलानां नेता धृष्टद्युम्नः। संतानं घटोत्कच इत्यपि योजना ॥

धृष्टद्युम्नः सपदि पवमानोद्भवस्तीव्रकर्मा
निर्मुक्तास्त्रप्रकरमभितस्तं सवैरोऽभिपत्य ।
कुर्वन्कायात्पृथगथ शिरः कौरवान्क्षोभयित्वा
संग्रामाग्रे त्रिदिवपदवीपान्थमेनं व्यधत्त ॥ २० ॥

सपदि तत्कालं पवमानोद्भवो वायुपुत्रो हनूमान् एनं निकुम्भं त्रिदिवस्य स्वर्गस्य पदव्याः पद्धतेर्वर्त्मनः पान्थं पथिकं व्यधत्त । स्वर्गवर्त्मचारिणं चकारेत्यर्थः । विनाशितवानिति यावत् । कीदृशः । धृष्टमुद्धतं द्युम्नं तेजो यस्य धृष्टद्युम्नः । 'दीनश्च दुर्गते भीते,' 'द्युम्नं वित्ते बलेऽपि च' इति मेदिनीकरः । तीव्रं कर्म यस्य स तीव्रकर्मा । किं कृत्वा । निःशेषेण मुक्तस्त्यक्तः अस्त्रप्रकरो येन तम् । अभितः सर्वतोऽभिपत्य सह वैरेण वर्तत इति तस्य निकुम्भस्य शिरः कायात् पृथक् कुर्वन् छिन्दन् । संग्रामाग्रे कौ पृथिव्यां रवान् रवयुक्तान् कृतनादान् क्षोभयित्वा ॥ पक्षे—धृष्टद्युम्नो द्रुपदनन्दनः । तं द्रोणम् । पवमानोद्भवः वह्नेरुत्पन्नः । कौरवान् दुर्योधनादीन् । शेषं तुल्यम् ॥

सा युद्धधीरापि निरस्तधैर्या विभ्रष्टनानायुधयोधवाहा ।
दशेव पुंसां प्रतिकूलदैवात्सेना परेषामभवत्पराची ॥ २१ ॥

परेषां शत्रूणां राक्षसानां कौरवाणां वा सेना पराची पराङ्मुखी बभूव । किंभूता । युद्धे धीरा धैर्यवत्यपि निरस्तं धैर्यं यया सा । विशेषेण भ्रष्टाः नानायुधानि च योधाश्चाश्वा यत्र । यद्वा विभ्रष्टाः पलायिताः नानायुधा नानास्त्रयुक्ता योधानां वाहा अश्वादयो यत्र । यद्वा विभ्रष्टानि नानायुधानि येषामेवं योधा वाहाश्च यत्रेति । प्रतिकूलदैवाद्यथा दशावस्था पुंसां परावर्तत इति ॥

---

१. 'संनद्धवैरापि' कलि०.

पितुर्निपातादनुबद्धवैरः पत्युर्बलानां तनयः खरस्य ।
रोषेण मूर्छन्मकराक्ष उच्चैर्युगक्षये वार्धिरिवोच्चचाल ॥ २२ ॥

पितुः खरस्य रक्षोविशेषस्य तनयः पुत्रो राक्षसः मकराक्षो नाम बलानां पत्युः पितुः खरस्य निपाताद्वधात् अनुबद्धं वैरं येन । रामेण सहेति शेषः । तथा रोषेण मूर्छन् । क इव । युगक्षये कल्पान्ते वार्धिः समुद्र इवोच्चचाल ॥ पक्षे—खरस्य तीव्रस्य पितुः द्रोणस्य निपातादनुबद्धवैरः बलानां पत्युः द्रोणस्य तनयः अश्वत्थामा । रोषेण मूर्छती मकरस्येवाक्षिणी यस्य स मूर्छन्मकराक्षः । शेषं तुल्यम् ॥

अभीतिभाजा विहिताभियोगस्तेन क्षणात्क्षोणिपतेर्बलौघः ।
नारायणास्त्राभिहतो बभूव राहोरधःकाय इवापचेष्टः ॥ २३ ॥

तेन मकराक्षेण रक्षोविशेषेण क्षोणीपतेः रामस्य बलौघः सैन्यसमवायः (अभिहतः) अपचेष्टो बभूव । चेष्टारहितो जात इत्यर्थः । कीदृशेन । अभीतिभाजा निर्भयेन । किंभूतः । विहितोऽभियोग आस्कन्दो यस्य सः । नारायणास्त्रेणाभिहतो राहोः कबन्धोऽपचेष्टो बभूवेति ॥ पक्षे—तेनाश्वत्थाम्ना । नारायणो देवतास्येति एवंभूतेनास्त्रेण । क्षोणीपतेः युधिष्ठिरस्य बलौघः क्षणादपचेष्टो बभूवेति । द्रोणे हते अश्वत्थाम्ना समागत्य नारायणास्त्रं क्षिप्तम् । तद्दृष्ट्वा 'अस्त्रमिदं निरस्त्रं न हन्ति' इति कृष्णेनोक्ते सर्वोऽपि युधिष्ठिरबलौघः अस्त्रं त्यक्त्वा युद्धचेष्टारहितो बभूवेति भारते ॥

तदुन्मुक्तनिराबाधबाणवाडववह्निभिः ।
क्षोणीपालबलाम्भोधिः क्षणात्क्षयमनीयत ॥ २४ ॥

क्षोणीपालो रामो युधिष्ठिरो वा तस्य बलाम्भोधिः सैन्यसमूहः क्षणात्क्षयं विनाशमनीयत नीतः । तेन मकराक्षेण अश्वत्थाम्ना वा मुक्ता ये निराबाधा बाधशून्या बाणास्त एव वाडववह्नयो वाडवानलास्तैः । अन्यैरपि समुद्रो युगान्ते वडवानलैः क्षयं नीयते । 'बाणवानरवह्निभिः' इति पाठे वानराणां वह्निभिर्दाहकैरित्यर्थः ॥ पक्षे—नरस्य पुरुषस्य दाहकैः क्रव्यादैः । तेन मकराक्षेण उन्मुक्ता ये निराबाधा बाणास्तान् वाति गच्छतीति तन्मुक्तनिराबाधबाणवा इति क्षोणीपालबलाम्भोधिविशेषणम् ॥

मुक्तायुधमहायोधा संभ्रान्तपवनात्मजा ।
रामावरजवाचा सा पर्यवस्थापिता चमूः ॥ २५ ॥

सा चमूः श्रीरामसेना युधिष्ठिरसेना वा रामस्यावरजो रामावरजः लक्ष्मणस्तस्य वाचा रामस्य बलभद्रस्यावरजः श्रीकृष्णस्तस्य वा वाचा पर्यवस्थापिता । संग्रामाङ्गणावस्थिता कृतेत्यर्थः । मुक्तान्यायुधानि यैरेवंभूता योधा यत्र सा । भयाद्वा संग्रामार्थं मुक्तानीति

---

१. 'दनुबन्धि वैरः' कलि०. २. भारतविरोधात् 'क्षयम्' इत्यस्य स्थाने 'क्षणम्' इति पठित्वा 'व्यापारविकलत्वम्' इति व्याख्यानं प्रेमचन्द्रकृतमेव वरम्.

शेषः । महा अयोधा इत्यकारप्रश्लेषे कृते भयात्रस्तं त्यक्तं मुक्तम्, मां न जहि, मयास्त्रं त्यक्तमिति । तद्व्यतिरेकेणायोधनेन संग्रामार्थमिति भावः । संभ्रान्त्याः पवनात्मजो हनूमान् भीमसेनो वा यत्र ॥

श्रीकण्ठकण्ठमचिरादिव कालकूटः
पूर्वं पयोनिधिमिवौर्वमुनेः प्रकोपः ।
आसाद्य मानवतनुं पुरुषं पुराणं
तस्य प्रतापमहिमा प्रशशाम तीव्रः ॥ २६ ॥

तस्य मकराक्षस्याश्वत्थाम्नो वा तीव्रः प्रतापस्य महिमा प्रशशाम शान्तो बभूव । किं कृत्वा । मानवतनुं मनुष्यशरीरं रामरूपिणं कृष्णं वा आसाद्य प्राप्य । कालकूट इव यथा श्रीकण्ठकण्ठं शिवकण्ठं प्राप्य प्रशशाम । यथा वा और्वमुनेः प्रकोपः क्रोधः । स हि वाडवानलरूपेण परिणतः समुद्राभ्यन्तरे निलीन इति पौराणिकी कथा ॥

प्रतापमाग्नेयमिवास्त्रमस्य रुद्ध्वा जितारिं नरदेवसूनुम् ।
तं वीरलक्ष्मीर्जुषते स्म नक्तं शृङ्गारलक्ष्मीरिव कामदेवम् ॥ २७ ॥

तं नरदेवपुत्रं रामं युधिष्ठिरं वा वीरलक्ष्मीर्जयलक्ष्मीर्जुषते स्म असेवत । कीदृशम् । अस्य मकराक्षस्य अश्वत्थाम्नो वा प्रतापमाग्नेयमस्त्रं तत्संनिभं तदस्त्रं वा रुद्ध्वा जितोऽरिः शत्रुर्येन तम् । यथा नक्तं शृङ्गारलक्ष्मीः कामदेवं कन्दर्पमिव एतत्काव्यकर्तारं राजानं कामदेवनामानं वाजुषत ॥

इति हलधरणीप्रसूतकादम्बकुलतिलकचक्रवर्तिवीरश्रीकामदेवप्रोत्साहितकविराजपण्डित-
विरचिते कामदेवाङ्के राघवपाण्डवीये महाकाव्ये शशिधरविरचितराघवपाण्डवीय-
टीकायां च निकुम्भकुम्भघटोत्कचद्रोणवधो नाम एकादशः सर्गः ।

---

## द्वादशः सर्गः ।

अथ गोसारमङ्गानां जिष्णोर्जेतारमाहवे ।
[1]संभाव्य योजयामास सदशास्यो जनेश्वरः ॥ १ ॥

अथानन्तरं स दशास्यो रावणो जिष्णोरिन्द्रस्य जेतारमिन्द्रजितं मेघनादनामानं पुत्रमाहवे समरे योजयामास नियुक्तवान् । किं कृत्वा अङ्गानां सेनाङ्गानां हस्त्यश्वरथपदातीनां गोसारं संभाव्य । जनानामीश्वरः ॥ पक्षे—जनेश्वरो दुर्योधनः सदशास्यः सता सज्जनेन अशास्यः अशासनीयः । अनुपदेश्य इत्यर्थः । अङ्गानां देशविशेषाणां गोसारमङ्गराजं कर्णं योजयामास । जिष्णोरर्जुनस्य जेतारं संभाव्य योजयामासेत्यर्थः 'जिष्णुः स्याद्वासवेऽर्जुने' इति विश्वः ॥

---

१. 'संभाव्योद्योजयामास' कलि०.

सशक्रचापच्छवि मेघनादो धुन्वन्धनुर्ज्याशरसङ्गिकर्णः ।
रणाय भर्तुर्जयकारणाय जवेन जैत्रं रथमारुरोह ॥ २ ॥

मेघनाद इन्द्रजित् वेगेन जैत्रं जयनशीलं रथमारुरोह । धनुर्धुन्वन् चालयन् । शक्रचापस्येव छविर्यस्य तत् । स किंभूतः । ज्याशरयोर्धनुर्गुणबाणयोः सङ्गी कर्णौ यस्य । आकर्णकृष्टज्याक इत्यर्थः । रणाय संग्रामाय भर्तुः रावणस्य जयार्थमिति ॥ पक्षे—स कर्णो राधेयः मेघस्येव नादो यस्य स तथा । ज्याशरसङ्गि धनुर्विधुन्वन् । भर्तुर्दुर्योधनस्य जयार्थम् ॥

उत्सर्पन्कलकलघोषभीषणाभिर्व्यालोलध्वजपटलीढदिक्तटीभिः ।
संग्रामप्रमदभरादसंभ्रमाभिर्वीराणामथ समनाहि वाहिनीभिः ॥ ३ ॥

अथानन्तरमुभयवाहिनीभिरुभयवीराणां योधानां वाहिनीभिः समनाहि संनद्धम् । संपूर्वात् 'णह बन्धे' इत्यतो धातोर्भावे लुङ् । उत्सर्पता उद्गच्छता कलकलघोषेण वीरध्वनिना भीषणाभिरिति वाहिनीविशेषणम् । विशेषेणालोलैश्चञ्चलैर्ध्वजपटैर्लीढा स्पृष्टा दिक्तटी याभिस्ताः । संग्रामे प्रमदस्य हर्षस्य भरादतिशयादसंभ्रमाभिर्भयशून्याभिः ॥

समिद्धराधेयभुजप्रतापे द्विषद्बले दिग्विषयं प्रपन्ने ।
चमूभृता वह्निभवेन गुप्ता नरेन्द्रसेना त्वरते स्म योद्धुम् ॥ ४ ॥

नरेन्द्रस्य श्रीरामस्य सेना योद्धुं त्वरते स्म त्वरां चकार । द्विषतां शत्रूणां बले दिग्विषयं प्रपन्ने दृष्टे सतीति । कीदृशे । समिद्धरायां संग्रामभूमौ आधेय आरोपणीयो भुजप्रतापो यस्य । सा किंभूता । वह्निभवेन नीलेन चमूभृता सेनापतिना गुप्ता रक्षिता ॥ पक्षे—नरेन्द्रसेना युधिष्ठिरसेना समिद्ध उपचितो राधेयस्य कर्णस्य भुजप्रतापो यस्य तादृशे द्विषद्बले । वह्निभवेन धृष्टद्युम्नेन । शेषं तुल्यम् ॥

रभसव[1]लितनानाहेतिबालप्रवाले
प्रतिमुखमुपनीते मृत्युना मन्युना च ।
द्रुतमिव वनराजी निर्गते निम्नगाभ्यां
रणभुवि जघटाते ते उभे राजसैन्ये[2] ॥ ५ ॥

ते उभे राजसेने रामरावणसैन्ये कुरुपाण्डवसैन्ये वा संग्रामभूमौ जघटाते संसक्ते बभूवतुः । द्रुतं शीघ्रं निर्गते निःसृते निम्नगाभ्यां नदीभ्यां लक्षिते वनराजी इव परस्परं जघटाते । रभसेन वलिता नानाहेतयो नानास्त्राणि ता एव बालप्रवाला नवकिसलया यैस्ते । तथा मृत्युना यमेन मन्युना रोषेण प्रतिमुखं संमुखमुपनीते ॥

---

१. 'चलित' कलि०. २. 'सेने' कश्मी०.

आहूतामरलोकवारवनितं दिग्व्यापिभेरीरवै-
र्दूराकृष्टकबन्धवृन्दमचिरात्सान्द्रैरसृक्सिन्धुभिः।
संबाधीकृतनाकनायकपुरं संसप्तकश्रेणिभि-
र्दन्तादन्ति कचाकचि द्रुतमभूद्युद्धं तलातल्यपि॥ ६॥

तयोरुभयोः सेनयोः युद्धमभूत्। आहूता आह्वायिता अमरलोकस्य वारवनिता उर्वशीप्रभृतयो यत्र। कैः। दिशां विचरणशीलैः भेरीरवैः शब्दैः। तथा असृक्सिन्धुभिः रुधिरनदीभिः अचिराकृष्टं दूरादेवाकर्षितं कबन्धानां वृन्दं यत्र। दन्तैर्दन्तैः प्रहृत्य यद्भवति तद्दन्तादन्ति। युद्धं वृत्तम्। 'तत्र तेनेदम्' इति समासे 'इच् कर्मव्यतिहारे' इति च समासान्तः। 'अन्येषामपि दृश्यते' इति दीर्घः। 'यस्येति च' इत्यकारलोपः। 'तिष्ठद्गुप्रभृतीनि च' इत्यव्ययीभावसंज्ञायाम् 'अव्ययीभावश्च' इत्यव्ययत्वम्। 'अव्ययादाप्सुपः' इति सुलुक्। एवं कचैः कचैः प्रहृत्य युद्धं वृत्तं कचाकचि। तलैः तलैः प्रहृत्य युद्धं वृत्तं तलातलि। तलश्चपेटः। संसप्तकानां युद्धादनिवर्तिनां श्रेणिभिः संबाधं संकीर्णीकृतं नाकनायकपुरमिन्द्रपुरं यत्र। तेषां स्वर्गातिथीभूतत्वात्॥

विधाय निःस्पन्दमिवारिवृन्दं स्वतीव्रधामप्रभवैः प्रतापैः।
विवेश वीरः स निवेशभूमिं द्वीपान्तरं सूर्य इवोपसंध्यम्॥ ७॥

स वीरो मेघनादः निवेशभूमिं शिबिरं विवेश। उपसंध्यं संध्यासमीपे द्वीपान्तरं सूर्य इव। किं कृत्वा। अरिवृन्दं निःस्पन्दं निश्चलं विधाय। कैः। प्रतापैः। कथंभूतैः। स्वं यत्तीव्रं धाम ततः प्रभवो येषां तादृशैः॥ पक्षे—स कर्णो वीरः निवेशभूमिं शिबिरं विवेश। शेषं तुल्यम्। 'निवेशः पुंसि विन्यासे शिबिरोद्वाहयोरपि' इति विश्वः॥

प्रगे सहस्रांशुरिवोज्ज्वलप्रभः सवेगसज्यीकृतभीमकार्मुकः।
रथेन भूयः समराय निर्ययौ विपक्षवाञ्छानुगशल्यसारथिः॥ ८॥

स इन्द्रजित् प्रगे प्रातःकाले समराय निर्जगाम। सूर्य इव। उज्ज्वला प्रभा तेजो यस्य स तथा। समानमेवोभयत्र। स किंभूतः। वेगेन त्वरया सज्यीकृतं भीमं भयानकं कार्मुकं धनुर्येन। केन। रथेन। भूयः पुनरपि विपक्षे वाञ्छया अनुगामी शल्योऽस्त्रविशेषो यस्य एवंभूतः सारथिर्यस्य स तथा॥ पक्षे—स कर्णः निर्ययौ। विपक्षवाञ्छानुगतः शल्यो मद्राधिपः सारथिर्यस्य। कर्णस्य रथे पश्चाच्छल्यः सारथिः कृतः॥

निर्यतीषु परितो वरूथिनीष्वाहवाय परिपाकदारुणः।
श्रूयते स्म चकितैश्चमूचरैः कर्णशल्यपरुषोक्तिविस्तरः॥ ९॥

---

१. 'प्रभवः' कलि०.

चकितैः सभयैश्चमूचरैः सैनिकैः कर्णशल्यपरुषोक्तिविस्तरः कर्णयोः शल्योऽस्त्रविशेष इव उक्तेर्विस्तरः प्रपञ्चः श्रूयते स्म । किंभूतः । परिपाके परिणामे दारुणः परितः सर्वत एव वरूथिनीषु सेनासु आहवाय निर्गच्छन्तीषु ॥ पक्षे—कर्णशल्ययोः राधेयमद्राधिपयोः परुषवचनविस्तरः परिपाकदारुण इति कर्णविनाशहेतुः । शेषं तुल्यम् ॥

अनुकूलजुषा सोऽथ वीरः सारथिना युतः ।
अंशुमानरुणेनेव नीयमानरथो बभौ ॥ १० ॥

स वीर इन्द्रजिद्बभौ शुशुभे । अनुकूलकारिणा सारथिना नीयमानरथः । समरभूमाविति शेषः। अथ प्रातःकालानन्तरमंशुमानिव सूर्य इव । अरुणेनेवेति। अरुणेनेत्यर्थः ॥ पक्षे—अनन्तरं कालानन्तरमनुकूलजुषा सारथिना शल्येन नीयमानरथः स वीरः कर्णः । शेषं तुल्यम् ॥

दिग्भित्तिप्रतिघट्टनोद्भवमहाघोषैर्जगद्भीषय-
न्बाणासारसृजा धनुर्जलमुचा तन्वन्नसृङ्निम्नगाः ।
नानावीरविमर्दवर्तितभुजाकण्डूविनोदः क्षणा-
दभ्यर्णे प्रलयार्णवप्रतिनिधिः पृथ्वीपतेः प्राप सः ॥ ११ ॥

स इन्द्रजित् पृथ्वीपतेः रामस्याभ्यर्णे समीपं प्राप । किंभूतः । प्रलयार्णवप्रतिनिधिः प्रलयकालीनसमुद्रसदृशः । सोऽपि युगान्ते पृथ्वीधरस्य समीपं प्राप्नोति । नानावीराणां विमर्दवर्तितो भुजयोः कण्डूाः विनोदोऽपनयनं येन स तथा । दिशो भित्तय इव दिग्भित्तयः तासां प्रतिघट्टनेन संघट्टनेन उद्भवो येषामेवंभूतैर्महाघोषैर्महारवैः जगत्सर्वं संसारं भीषयन् । बाणानामासारं बाणा एवासारा इति वा तान् सृजतीति बाणासारसृक् तादृशेन धनुर्जलमुचा मेघसदृशेन धनुषा असृङ्निम्नगाः रुधिरनदीस्तन्वन् विस्तारयन् ॥ पक्षे—स कर्णः पृथ्वीपतेर्युधिष्ठिरस्य क्षणादचिरात् । शेषं समानम् ॥

कुर्वाणौ बाणवर्षैर्वियति दिविषदां स्वैरयात्रान्तरायं
हुंकारैः कर्षयन्तौ बहुलमदनदीनिर्गमं दिग्गजानाम् ।
सद्यः प्रत्यर्थिवर्गैरपि गुणविवशैः स्तूयमानप्रकर्षौ
प्रायुध्येतां प्रवीरौ सुभटजनदृशां लक्ष्यभूतावुभौ तौ ॥ १२ ॥

तावुभौ प्रवीरौ लक्ष्मणेन्द्रजितौ कर्णार्जुनौ वा प्रायुध्येतां प्रकर्षेण युद्धमकुर्वाताम् । कीदृशौ । सुभटजनदृशां वीरचक्षुषां लक्ष्यभूतौ कदाचिच्छिक्षावशात् कदाचिददृष्टौ । कथंभूतौ । दिविषदो देवास्तेषां वियति गगने स्वैरयात्रायाः स्वेच्छागमनस्यान्तरायं विघ्नं

---

१. 'द्भट' कलि०. २. अस्य श्लोकस्यात्र प्रक्षेपः प्रमादजः । किंतु 'धृतप्रसादेन ततो नृपेण–' (१२।१६) इत्युत्तरं पाठाङ्गीकारे कथासामञ्जस्यम्.

कुर्वाणौ सायकवृष्टिभिः । बाणवर्षैरित्यर्थः । दिग्गजानां हुंकारैर्बहलमदनवा निर्गमं बहिर्गमनं कर्षयन्तौ । सद्यस्तत्कालं प्रत्यर्थिवर्गैरपि शत्रुसमूहैरपि गुणविवशैर्गुणपराधीनैः स्तूयमानः प्रकर्षो युद्धोद्रेको ययोस्तौ ॥

स वाक्छरैराहितमर्मघातनश्चकार पीडां महतीं महीपतेः ।
क्षणेन सीताक्षपणव्यलीकात्कृषीवलस्येव महानवग्रहः ॥ १३ ॥

स इन्द्रजिन्महीपतेः श्रीरामस्य महतीं पीडां चकार कृतवान् । कीदृशः । वाचः शरा इव वाक्छरास्तैराहितं मर्मघातनं यत्र(येन) । कुत इत्याह—क्षणेनेति । सीताया मैथिल्याः क्षणेन यत्क्षपणं मारणं तदेव व्यलीकमप्रियं तस्मादिति । स किल समितौ मायामयीं सीतां निर्माय केशेषु धृत्वा आकाशे रामसमक्षं हतवानिति पुराणम् । महानवग्रह इव । यथा महानवग्रहो वृष्टिप्रबन्धः कृषीवलस्य कृषिकस्य पीडां करोति । 'अवग्रहो वृष्टिप्रबन्धे' इति निपातितः ॥ पक्षे—स कर्णो महीपतेर्युधिष्ठिरस्य पीडां चकार । अवग्रह इव कृषिकस्य । अत्र हेतुः सीताक्षपणव्यलीकादिति । सीताया हलपद्धतेर्यत्क्षपणं क्षीणत्वम् । शुष्कत्वमिति यावत् । तद्व्यलीकादप्रियत्वादिति ॥

नैर्घृण्यात्सव्यथं शत्रोर्नरदेवमुपस्थितः ।
तद्गिराफल्गुनोऽप्याप भ्राता चित्तस्य विक्रियाम् ॥ १४ ॥

भ्राता लक्ष्मणः नरदेवं समुपस्थितः प्राप्तः । किंभूतम् । शत्रोरिन्द्रजितः नैर्घृण्यान्निष्करुणत्वेन सव्यथं पीडासहितम् । तद्गिरा इन्द्रजितो वाण्या भ्राता रामश्चित्तस्य विक्रियां विकारमाप । किंभूतस्यापि । अफल्गुनोऽपि अतुच्छस्यापि ॥ पक्षे—भ्राता फल्गुनोऽपि अर्जुनोऽपि तद्गिरा कर्णवाचा चित्तस्य विक्रियां विकारमाप । नरदेवं युधिष्ठिरमुपगतः । शत्रोर्नैर्घृण्यान्निष्करुणत्वात्सव्यथमिव । फल्गुन्यां नक्षत्रे जातः फल्गुनः ॥

कृतानुशापयोरन्तः प्रतियोगिविभीषणः ।
अपनिन्ये तयोः कृष्णः कार्यज्ञो मन्युमूर्छनम् ॥ १५ ॥

विभीषणो रावणभ्राता तयो रामलक्ष्मणयोरन्तश्चित्ते मन्युमूर्छनं रोषवृद्धिमपनिन्ये अपनीतवान् । किंभूतम् । प्रतियोगि कर्तव्यप्रतिबन्धि । कीदृशयोः । कृतानुशापयोः कृतरोषयोः । स कीदृशः । कार्यज्ञः(मायाजन्य)कार्यवेत्ता । कृष्णः श्यामलः ॥ पक्षे—तयोः युधिष्ठिरार्जुनयोः अन्तरभ्यन्तरे रोषमूर्छनं कृष्णो वासुदेवः अपनिन्ये । किंभूतः । प्रतियोगिनां शत्रूणां विभीषणो भयानकः रोषापनयनेनैवाग्रे कार्यसिद्धिर्भविष्यतीति कार्यज्ञ इति ॥

धृतप्रसादेन ततो नृपेण वधाय शत्रोः प्रहितः कनीयान् ।
बलेन सार्धं बृहता बलिष्ठो रोद्धुं द्विषामुद्यममुद्यतोऽभूत् ॥ १६ ॥

---

१. 'घट्टन' कलि०. २. 'भ्राता रामः' इत्यस्य मध्ये प्रक्षेपमन्तरापि न मनोहरत्वव्याघातः. ३. 'कृतानुशययोः' कलि०.

ततस्तदनन्तरं कनीयान् भ्राता लक्ष्मणः शत्रोरिन्द्रजितो वधाय नृपेण श्रीरामेण कृतप्रसादेन प्रसन्नेन बृंहता बलेन सार्धं प्रहितः स द्विषां शत्रूणामुद्यमं युद्धोद्योगं रोद्धुमुद्यतोऽभूत् वृत्तः। बलिष्ठो बलवान्। निकुम्भिलायां हवनं कुर्वन् सन् ससैन्येन लक्ष्मणेनेन्द्रजिद्रुद्ध इति॥ पक्षे—नृपेण राज्ञा युधिष्ठिरेण। कनीयान् भ्राता अर्जुनः। शत्रोः कर्णस्य। द्विषां शत्रूणां कर्णादीनामुद्यमं रोद्धुमुद्यतोऽभूत्॥

अतुलबलहनूमत्कल्पितस्यन्दनश्री-
र्दवदहन इवासौ वैरिकक्षं विगाह्य।
प्रतिहतवृषसेनाडम्बराघूर्णमेनं
प्रसभमकृत बाह्वोर्विक्रमाणां निकर्षम्॥ १७॥

असौ लक्ष्मणः एनमिन्द्रजितं प्रसभमत्यर्थं बाह्वोर्विक्रमाणां निकर्षं कर्षणमकृत कृतवान्। कीदृशः। अतुलबलो यो हनूमान् तस्मिन् कल्पिता स्यन्दनश्रीर्गमनश्रीर्येन सः। तथा हनूमत्पृष्ठमारूढ इत्यर्थः। वैरिः शत्रुः कक्ष्यमिव वैरिकक्ष्यं विगाह्य अवगाहयित्वा दवदहन इव दवाग्निरिव प्रतिहतो निराकृतो वृषा इन्द्रो यया एवंभूतायाः सेनायाः आडम्बरस्य प्रपञ्चस्याघूर्णं घूर्णनं यस्य स तथा॥ पक्षे—असावर्जुनः एनं कर्णं भुजयोः विक्रमाणां निकर्षं कषणपाषाणपट्टमकृत। अतुलबलेन हनूमता कल्पिता स्यन्दनश्री रथशोभा यस्य। हनूमदधिष्ठानेन समन्वितरथकान्तिरर्जुन इत्यर्थः। कपिकेतनत्वात्। प्रतिहतो विनाशितो वृषसेनस्य कर्णपुत्रस्याडम्बराघूर्णो यस्य॥

अत्रान्तरे पार्ष्णिममुष्य गृह्णन्विभीषणः संयति भीमसेनः।
दुःशासनं वैरिबलं प्रमथ्य बलेन बाह्वोर्यमसाच्चकार॥ १८॥

अत्रान्तरे विभीषणो रावणभ्राता बाह्वोर्बलेन प्रमथ्य वैरिबलं शत्रुसैन्यं यमसात् यमप्रदेयं चकार। यमस्यायत्तं कृतवानित्यर्थः। 'सात्प्रदेये' इति सातिः। अमुष्य लक्ष्मणस्य पार्ष्णिं पश्चात्सैन्यं गृह्णन्। संयति संग्रामे भीमा सेना यस्य तथा। कीदृशं तत्। दुःशासनं दुष्टं शासनमाज्ञा यस्य तत्॥ पक्षे—अत्रान्तरे भीमसेनो वृकोदरः दुःशासनं दुर्योधनानुजं यमसाच्चकारेति। अमुष्यार्जुनस्य पार्ष्णिं गृह्णन्। विभीषणो भयंकरः। वैरिबलं शत्रुसैन्यं प्रमथ्येति॥

अरातिरक्तक्षरणातिरौद्रं भ्राम्यद्गदाभीषणबाहुदण्डम्।
तथा तमालोक्य रणे चरन्तं साक्षात्कृतान्तं मनुते स्म लोकः॥१९

लोको जनस्तं विभीषणं साक्षात्कृतान्तं यममेव मनुते स्म। ज्ञातवानित्यर्थः। तथा तेन प्रकारेण रणे समरे चरन्तमवलोक्य दृष्ट्वा। किंविशिष्टम्। भ्राम्यन्ती या गदा तया विभीषणो बाहुदण्डो यस्य तथा। अरातीनां रक्तक्षरणेन रक्तस्रवणेन अतिरौद्रमत्यर्थं भयंकरम्॥ पक्षे—लोकस्तं भीमं साक्षात्कृतान्तं मनुते स्म प्रत्यक्षयमं जानाति

स्म । कथंभूतम् । अरातेर्दुःशासनस्य यद्रक्तक्षरणं रक्तस्रवणं रक्तापाते जातं तेनातिरौद्रम् । शेषं समानम् ॥

तद्वैभीषणमालोक्य रणकर्म महाजनः ।
राजदारोपरोधस्य फलमाप्तममन्यत ॥ २० ॥

महाजनः राजदारोपरोधस्य फलं प्राप्तममन्यत मन्यते स्म । राज्ञो रामस्य दाराः सीता तस्या उपरोधस्य हरणस्य फलमित्यर्थः । तत् रणकर्म वैभीषणं विभीषणसंबन्धि आलोक्य ॥ पक्षे—राज्ञो युधिष्ठिरस्य दाराः द्रौपदी तस्या उपरोधस्य केशाम्बराकर्षणस्य फलमेतदिति । वै पादपूरणे । तद्भीषणं भयंकरमालोक्येति ॥

तदा सौमित्रिणा बाणैर्जिष्णुना संमुखीकृतः ।
अङ्गानामीश्वरः क्षुभ्यन्मेघनादो रुषं दधौ ॥ २१ ॥

मेघस्येव नादो यस्य स मेघनाद इन्द्रजित् रुषं रोषं दधौ धृतवान् । स कीदृशः । सौमित्रिणा लक्ष्मणेन जिष्णुना जयनशीलेन बाणैः संमुखीकृतः संमुखतां नीतः । अङ्गानां हस्त्यश्वरथपदातीनामीश्वरः । क्षुभ्यन् क्षोभं गच्छन् ॥ पक्षे—तदा तस्मिन्काले असावङ्गानामीश्वरोऽङ्गराजः कर्णो रुषं दधौ । क्षुभ्यत्संक्षुभितम् । जिष्णुना अर्जुनेन मित्रिणा मित्रयुक्तेन बाणैः संमुखीकृतः । रणस्येत्यर्थः । मेघस्येव नादो यस्येति ॥

बलभारनिरन्तरा धरित्री गगनं निर्विवरं च दिव्यलोकैः ।
रजसा पिहितं तदन्तरालं[1] न विभागो निरणीयत त्रिलोक्याः ॥ २२ ॥

त्रिलोक्याः लोकत्रयस्य विभागो विभजनं पृथक्करणं न निरणीयत न निरचीयत न निर्णीयते स्म । तदेव विवृणोति—धरिणी पृथिवी सैन्यसमूहेन निरन्तरा अवकाशशून्या । व्याप्तेत्यर्थः । गगनमपि दिव्यलोकैर्देवैर्दर्शनार्थमागतैः निर्विवरं छिद्रशून्यं निरवकाशम्, तदन्तरं द्यावापृथिव्योरन्तरालं मध्यं रजसा समुत्थितेन रेणुना पिहितमाच्छादितम् ॥

प्रथममतनुभिस्तौ जघ्नतुः सिंहनादैः
परमपि च महोल्काक्षेपरूक्षैः कटाक्षैः ।
अथ च वचनबाणैर्मर्मभेदप्रवीणै-
स्तदनु दलितकायैः सायकानां निकायैः ॥ २३ ॥

प्रथमतस्तौ लक्ष्मणेन्द्रजितौ अर्जुनराधेयौ वा अतनुभिर्बृहद्भिः सिंहनादैः परं शत्रुं जघ्नतुः । आक्ष्वेडितैर्जघ्नतुः । अपि चानन्तरं महोल्कानां क्षेपवत्प्रेरणवत् रूक्षैः कठिनैः कटाक्षैर्जघ्नतुः । अथ वानन्तरं मर्मभेदे प्रवीणैः समर्थैर्वचनबाणैर्जघ्नतुः । तदनु पश्चाद्दलितकायैर्विदारितशरीरैः सायकानां निकायैः समूहैर्जघ्नतुः ॥

1. 'दिगन्तरालं' कलि०

नभश्चरैर्मार्गणपातभीतैरभ्यर्णमुत्सृज्य विलोकयद्भिः ।
सविस्मयं [1]व्याहृतसाधुवादं तयोः समानं समरं बभूव ॥ २४ ॥

सविस्मयं यथा स्यात् नभश्चरैर्गगनचारिभिर्व्याहृतः साधुवादो यत्र तादृशं मार्गणपाताद्बाणापतनात् । अत एवाभ्यर्णे समीपमुत्सृज्य त्यक्त्वा विलोकयद्भिरिति ॥

निर्भिन्नधाराधरगर्भनिर्यत्कीलालकुल्योक्षितभूमिभागाः ।
दूरं चरन्तो विशिखास्तदीया दिशां शिरोभेदमिव व्यतन्वन् ॥ २५ ॥

तदीया लक्ष्मणेन्द्रजितोरर्जुनराधेययोर्वा संबन्धिनो विशिखा बाणा दिशां शिरोभेदमिव व्यतन्वत् अनुतिष्ठन्ति स्म । किंभूताः । निःशेषेण भिन्नानां विदारितानां धाराधराणां मेघानां गर्भान्निर्यन्ति बहिर्भवन्ति यानि कीलालानि जलानि तेषां कुल्याभिः कृत्रिमनदीभिः उक्षिताः सिक्ता भूमिभागा यैस्ते । दूरं चरन्तो गच्छन्तः ॥

दृष्टानेकपुराणवीरसमरश्रीभिः समं खेचरै-
रारब्धस्तुति नारदेन मुनिना निर्णीयमानान्तरम् ।
भेरीध्वानभवद्भयाश्रितमहादिक्कुञ्जदिक्कुञ्जरं
युद्धं वर्धितपक्षपातमुभयोः प्रैक्षन्त देवासुराः ॥ २६ ॥

देवाश्च असुराश्च ते तयोर्लक्ष्मणेन्द्रजितोः कर्णार्जुनयोर्वा युद्धं प्रैक्षन्त पश्यन्ति स्म । खेचरैरारब्धस्तुति यथा स्यात् । दृष्टा अनेकेषां पुराणानां जरठानां वीराणां समरश्रीः संग्रामलक्ष्मीः यैस्तैः समं सह नारदेन मुनिना निर्णीयमानमन्तरं निश्चीयमानमन्तरं यस्य तत्तथा । भेरीणां ध्वानेन झाङ्कारेण भवद्भयं तेनाश्रितं महादिक्कुञ्जं यैस्तादृशा दिक्कुञ्जरा यत्र ॥

विरचितमरिणा हि क्रूरबाणप्रयोक्त्रा
सहचरहरिशक्तिव्याहतारातिवाञ्छः ।
रणभुवि नृपसूनुर्मौलिरत्नापहारं
भुजग इव न सेहे स्तोकमप्याशुभङ्गम् ॥ २७ ॥

नृपसूनुर्लक्ष्मणः स्तोकमपि स्वल्पमपि भङ्गं न सेहे नासोढ । रणभुवि समरभूमौ । भुजग इव सर्प इव । यथा सर्पो मौलिरत्नस्य शिरोमणेरपहारं न सहते । हि पादपूरणे । अरिणा इन्द्रजिता कृतम् । किंभूतेन । क्रूरबाणानां प्रयोक्त्रा प्रयोजकेन । सहचराणामनुयायिनां हरीणां शक्तिभिः पराक्रमैः व्याहता अरातेर्वाञ्छा जयाकाङ्क्षा येन सः ॥ पक्षे— नृपसूनुरर्जुनः स्तोकमपि मौलिरत्नापहारं किरीटापनयनं न सेहे । आशु शीघ्रं भङ्गो यस्य तम् । अरिणा कर्णेन विरचितम् । कीदृशेन । अहिरिव क्रूरो बाणः शरः तस्य

---

१. 'शिरा' कलि०.

प्रयोक्त्रा प्रयोजकेन । कर्णेन किल स्वीयतूणस्थितो विजयनामा बाणोऽर्जुनवधाय क्षिप्त इति ॥

आशु रोषवशवर्तिनामुना ज्यानिनादकृततीव्रभर्त्सनाः ।
प्रत्यराति विशिखाः प्रतेनिरे कर्णकुण्डलविघट्टनोत्कटाः ॥ २८ ॥

अमुना लक्ष्मणेन आशु शीघ्रं रोषवशवर्तिना रुष्टेन प्रत्यराति अरातेरभिमुखतां लक्ष्यीकृत्य विशिखा बाणाः प्रतेनिरे विस्तारिताः । क्षिप्ता इत्यर्थः । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । कीदृशाः । ज्यानिनादेन धनुर्गुणशब्देन टाङ्कारेण कृता तीव्रा भर्त्सना घर्षणा यैस्ते । कर्णयोः कुण्डलविघट्टनेनोत्कटास्तीक्ष्णा इति ॥ पक्षे—अमुनार्जुनेन कर्णस्य राधेयस्य कुण्डलयोर्विघट्टनेनोत्कटास्तीक्ष्णाः । तुल्यमन्यत् ॥

ग्रस्तचक्रस्य धरया निष्पन्नस्यन्दनापदः[१] ।
रणकर्म महच्छत्रोर्नासोढ नरदेवजः ॥ २९ ॥

नरदेवजो लक्ष्मणः शत्रोरिन्द्रजितो रणकर्म महत् नासोढ न मर्षितवान् । किंभूतस्य । ग्रस्तचक्रस्य ग्रस्तसैन्यस्य । धरया भूम्या । निष्पन्ना स्यन्दनस्य गमनस्यापद्विपद्यस्य तस्येति ॥ पक्षे—नरदेवोऽर्जुनः । शत्रोः कर्णस्य । धरया पृथिव्या ग्रस्तं चक्रं यस्य ग्रस्तरथचक्रप्रान्तस्य । धरयैव निष्पन्ना स्यन्दनस्यापद्यस्य ॥

ततः प्रतीतो जगतीन्द्रसूनुः समाप्तिमिच्छन्समरार्णवस्य ।
संधाय संधां सफलीकरिष्यन्कर्णान्तसज्जं शरमुत्ससर्ज ॥ ३० ॥

जगतीन्द्रस्य पृथ्वीशस्य दशरथस्य सूनुः लक्ष्मणः शरमुत्ससर्ज त्यक्तवान् । कर्णान्तं कर्णपर्यन्तं सज्जः कर्णान्तसज्जः तं संधाय संधानं कृत्वा । धनुषीति शेषः । संधां प्रतिज्ञां सफलीकर्तुमिच्छन् । ततोऽनन्तरं प्रतीतः समरार्णवस्य संग्रामसमुद्रस्य समाप्तिमिच्छन् । 'संनद्धे संभृते सज्जः' इति प्रकाशः ॥ पक्षे—जगति प्रतीतः इन्द्रसूनुरर्जुनः कर्णस्य राधेयस्यान्तो विनाशः तदर्थं सज्जं संधायेति तुल्यमन्यत् । 'अन्तःस्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिधा' इति मेदिनीकरः । 'पृथाज्येष्ठसुते कर्णः सुवर्णालौ श्रुतावपि' ॥

उद्यताञ्जलिकेनासौ[२] नानाविक्रमशोभितः ।
विद्विषं विशिखेन[३] घ्नन्विस्मयं कस्य नाकरोत् ॥ ३१ ॥

असौ लक्ष्मणः कस्य विस्मयं नाकरोत् । अपि तु सर्वस्य । विद्विषं विशिखेन घ्नन् विदारयन् । उद्यतेनाञ्जलिकेन बाणेन नानाविक्रमेण शोभितः कान्तियुक्तः ॥ पक्षे—असावर्जुनः । शेषं समानम् ॥

---

१. 'निस्यन्दस्यन्दनापदः' इति कलिकातामुद्रितपाठे—'वानरैर्भग्नत्वान्निस्यन्देन स्यन्दनेनापद्यस्य' 'भूमिग्रस्तचक्रत्वेन निस्पन्देन' इति पक्षद्वयेऽप्यर्थः. २. 'उद्यदञ्जलि' कश्मीर०. ३. 'विशिखं' कलि०.

क्षिप्रं क्षिप्तभ्रुकुटिभुजगाभीष्मभालं पुरस्ता-
न्न्यस्तापाङ्गं विशिखशिखया साकमेवारिकण्ठे ।
नूनं तेन प्रसभमिषुणा भूषयामास भूमिं
जिष्णुर्द्वेष्टुर्मुखमशनकैर्मुक्तहुंकारमेव ॥ ३२ ॥

स जिष्णुर्जयनशीलो लक्ष्मणोऽर्जुनो वा तेनेषुणा बाणेन भूमिं भूषयामास अलंकरोति स्म । द्वेष्टुः शत्रोर्मुखं च अशनकैरुच्चैर्मुक्तो हुंकारो येन तत्तथा । प्रसभमत्यर्थम् । कीदृशम् । क्षिप्रं शीघ्रं क्षिप्तो भ्रुकुटिरेव भुजगः तेनाभीष्मो भयंकरो भालो ललाटं यत्र । पुरस्तात्प्रथमतो न्यस्तापाङ्गं न्यस्तनेत्रप्रान्तं विशिखशिखया साकं नूनं निश्चितमरिकण्ठे शत्रुकण्ठे । न्यस्तनेत्रप्रान्तमित्यर्थः । 'लूनम्' इति पाठान्तरम् । तत्र तेन विशिखेन नूनं छिन्नं द्वेष्टुर्मुखं भूमिं च भूषयामासेति ॥

अङ्गभर्तुः शिरश्छिन्नमिति गद्गदवादिनी ।
प्रपलायत संग्रामात्सा परेषां पताकिनी ॥ ३३ ॥

परेषां शत्रूणां पताकिनी सेना संग्रामात्प्रपलायत पराङ्मुखी जाता । अङ्गानां सेनाङ्गानां भर्तुः इन्द्रजितः अङ्गराजस्य कर्णस्य वा शिरश्छिन्नमिति गद्गदवादिनी शोकेन भयेन गद्गदं यथा स्यादेवं भाषणशीलेति ॥

समं सुहृद्भिर्जयिनं समेतां स भूपतिर्भ्रातरमभ्यनन्दत् ।
उपेन्द्रमग्रे प्रणतं महेन्द्रः पुरेव वैरोचनिभङ्गहृष्टः ॥ ३४ ॥

स भूपतिः रामो युधिष्ठिरो वा भ्रातरं लक्ष्मणमर्जुनं वा समं तुल्यमभ्यनन्दत् स्तौति स्म । सुहृद्भिर्मित्रैर्विभीषणादिभिः श्रीकृष्णादिभिर्वा सह समेतमागतं वा । महेन्द्र इव । यथा पुरा पूर्वं महेन्द्रः शक्रः वैरोचनेर्बलिदानवस्य भङ्गेन हृष्टः हर्षयुक्तः उपेन्द्रं विष्णुमग्रे प्रणतमभिनन्दितवानिति ॥

चमूपतिर्मारुतिरश्विनन्दनौ गदाधरः पुण्यजनेश्वरस्तथा ।
पुरःस्फुरत्कीर्तिधनंजयं प्रभोस्तमृक्षराजेन समं प्रतुष्टुवुः ॥ ३५ ॥

एते सर्वे तं लक्ष्मणं प्रतुष्टुवुः । किंभूतम् । प्रभो रामस्य पुरोऽग्रे स्फुरन्ती कीर्तिरेव धनं यस्य तम् । तथा जयं जययुक्तम् । के त इत्याह—चमूपतिः सेनापतिः नीलः, मारुतिः हनूमान्, अश्विनन्दनौ अश्विनीकुमारपुत्रौ वानरविशेषौ मैन्दद्विविदौ, गदाधरः गदायुधः, पुण्यजनेश्वरः राक्षसपतिः विभीषणः, ऋक्षराजेन समं जाम्बवता सुग्रीवेण वा सह ॥ पक्षे—प्रभोर्युधिष्ठिरस्याग्रे तं धनंजयमर्जुनं प्रतुष्टुवुः स्तुवन्ति स्म । कथम् । स्फुर-

---

१. 'क्षिप्रोत्क्षिप्तभ्रुकुटि' कलि०. २. 'भील' कलि०. ३. 'लूनं' कलि० ४. 'जिष्णोः' कलि०.

त्कीर्ति स्फुरन्ती कीर्तिर्यत्र तत् । के त इत्याह—चमूपतिः पाण्डवसेनापतिः धृष्टद्युम्नः, मारुतिः भीमः, अश्विनन्दनौ नकुलसहदेवौ, पुण्याः पवित्रा ये जनास्तेषामीश्वरः श्रीकृष्णः । कथंभूतः । गदाधरः । तं कीदृशम् । ऋक्षराजेन चन्द्रमसा तुल्यम् । 'ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृतवेधेऽन्यलिङ्गं स्यान्नक्षत्रे पुंनपुंसकम् ॥' इति मेदिनीकरः ॥

रणातिभूमिः कटकद्वये सा शोकप्रहर्षावभजत्समानम् ।
निवेशयोर्वारिजकैरवाणां निद्राप्रबोधौ युगपन्निशेव ॥ ३६ ॥

सा रणस्यातिभूमिः पराकाष्ठा कटकद्वये रामरावणयोर्दुर्योधनयुधिष्ठिरयोर्वा शोकश्च हर्षश्च तौ समानौ तुल्यकालमभजत् सिषेवे । यथा रात्रिर्युगपदेकदा वारिजानां पद्मानां कैरवाणां च निवेशयोः ॥

तदाहवे तीव्रकरस्य सूनोर्नक्तंचरेभ्यो निधनं निशम्य ।
शुशोच राजा बहुधार्तराष्ट्रः स्वदुर्नयस्यानुभवन्फलानि ॥ ३७ ॥

तदा तस्मिन्काले राजा रावणः शुशोच अशुचत् । तीव्रकरस्य उग्रतेजसः सूनोर्मेघनादस्य निधनं मरणं निशम्य । केभ्यः । नक्तंचरेभ्यः राक्षसेभ्यः । राजा कीदृशः । बहुधा आर्तं पीडितं राष्ट्रं येन सः एवं च स्वदुर्नयस्यापि फलान्यनुभवन्निति ॥ पक्षे—राजा धार्तराष्ट्रो दुर्योधनः शुशोच । तीव्रकरस्य सूर्यस्य सूनोः कर्णस्य निधनं मरणं नक्तं रात्रौ चरेभ्यः प्रणिधिभ्यः निशम्य । शेषं तुल्यम् ॥

स्वामिना दशमुखेन नोदिता दिङ्मुखानि रजसा निरुन्धती ।
प्रत्यराति विचचाल वाहिनी वारणादपरशल्यनायका[1] ॥ ३८ ॥

वाहिनी रावणवाहिनी प्रत्यराति शत्रुसंमुखं विचचाल । कीदृशी । स्वामिना दशमुखेन रावणेन नोदिता प्रेरिता । रजसा दिङ्मुखानि रुन्धती आच्छादयन्ती । वारणाद्वानरविशेषात् अपरेषां शल्यश्रेष्ठा । अतिदुःखकारिकेत्यर्थः ॥ पक्षे—दुर्योधनवाहिनी प्रत्यराति विचचाल । कथंभूता । स्वामिना दुर्योधनेन मुखेन स्वमुखेन प्रेरिता । तथा दश दिङ्मुखानि निरुन्धती । वारणात् हस्तिनः । हस्तिनमारुह्येत्यर्थः । अपरः शल्यो मद्राधिपो नायकः सेनापतिर्यस्याः सा ॥

ततः श्रितव्यूहमुखाश्चमूभृता स्थिरप्रभावा[2] नरनाथसैनिकाः ।
समभ्ययुर्हन्तुमरातिमण्डलं[3] निशान्धकारं द्युमणेरिवांशवः ॥ ३९ ॥

तत इत्यनन्तरं नरनाथसैनिकाः रामसैनिकाः युधिष्ठिरसैनिका वा अरातिमण्डलं शत्रुसमूहं हन्तुं समभ्ययुः आगच्छन्ति स्म । कीदृशाः । चमूभृता नीलेन धृष्टद्युम्नेन वा

---

१. 'धीरनाद' कलि०. २. 'स्फुरत्प्र' कलि०. ३. 'भेत्तु' कलि०.

श्रितव्यूहमुखाः श्रितं व्यूहः समूहस्तन्मुखं यत्रेति । द्युमणेः सूर्यस्यांशवः किरणा निशान्धकारमिव नाशयन्ति स्मेत्यर्थः ॥

द्रवदविरलधूलिध्वान्तरुद्धाम्बरान्तं
विघटितसुरलोकद्वारशाखाकपाटम् ।
समदविबुधनारीनेत्रदत्तानुयात्रं
त्वरितविविधयोधं युद्धमासीद्ध्वजिन्योः ॥ ४० ॥

ध्वजिन्यो रामरावणसेनयोः युधिष्ठिरदुर्योधनसेनयोर्वा युद्धमासीद्बभूव । किंविशिष्टम् । द्रवता अविरलेन निबिडेन धूलिनेव ध्वान्तेन रुद्धमम्बरान्तं यत्र । 'द्रवदविरलभूमि' इति पाठान्तरम् । तथा विघटितं सुरलोकस्य द्वारशाखयोः कपाटं यत्र । यद्वा द्वारशाखैव कपाटं विघटितं च सुरलोकस्य द्वारशाखाकपाटं यस्मिन् । समदा या विबुधनार्यः सुरस्त्रियः तासां नेत्रैर्दत्ता अनुयात्रा पश्चाद्गमनं यत्र । त्वरावन्तो विविधा अनेकविधा योधा यत्र । 'शाखा पक्षान्तरे वास्तौ वेदभागद्रुमाङ्गयोः' इति मेदिनीकरः ॥

अभिशत्रु समापतन्नितान्तं पृतनानां पतिरेधिताननश्रीः ।
रजसा पिहितांशुमद्रराज स्थगयन्व्योम गभीरवीरनादैः ॥ ४१ ॥

पृतनानां पतिः सेनापतिः रावणः रराज शुशुभे । अभिशत्रु रिपुं लक्ष्यीकृत्य समापतन् गच्छन् नितान्तमतिशयेन एधिता उपचिता आननश्रीर्मुखशोभा यस्य । रजसा रेणुना पिहितांशुमत् पिहितसूर्यं यथा स्यादेवं गभीरैर्वीराणां नादैर्गगनं स्थगयन् पिदधत् ॥ पक्षे—मद्रराजः मद्राधिपतिः शल्यः शत्रोरभिमुखं समापतन्नागच्छन् सेनानां पतिः स्वामी रजसा पिहिताः अंशवो यत्र तत् पिहितांशु इति क्रियाविशेषणम् । मद्रराजस्थगयन्नित्यत्र । 'खर्परे विसर्जनीयस्य लोपो वक्तव्यः' इति विसर्जनीयलोपः ॥

जनितशङ्खरवानरकुञ्जरक्षतजरञ्जितदिक्त्रिदिवौकसाम् ।
प्रतिभटावटशल्यमुखोद्भटा परचमूर्मनुजेश्वरमावृणोत् ॥ ४२ ॥

परचमूः रावणसेना मनुजेश्वरं राममावृणोत् आवृणोति स्म । जनिताः शङ्खानां रवाः शब्दा यत्र सा नराणां कुञ्जराणां च क्षतजेन रुधिरेण रञ्जिता दिक् यया । त्रिदिवौकसां देवानां प्रतिभटा एवावटा निम्नप्रदेशा यत्र । शल्यानामस्त्रविशेषाणां शङ्कूनां वा मुखं यस्यास्तादृशी उद्भटा प्रचण्डा च ॥ पक्षे—परचमूर्दुर्योधनसेना मनुजेश्वरं युधिष्ठिरं प्रतिभटानामवटः आस्कन्दनं यस्मादीदृशः शल्यो मद्राधिपो मुखेऽग्रे यस्यामीदृशी उद्भटा चेति ॥

---

१. 'भ्रमद' कलि० २. 'न्तरीक्षम्' कलि०.

नरेश्वरशरच्छिन्ननानावीरशिरस्ततम्।
भूभारभारसंहारि प्रधनं तत्र पप्रथे ॥ ४३ ॥

तत्र प्रधनं संग्रामः पप्रथे प्रथते स्म। किंभूतम्। भुवो भारस्य यो भारो गौरवं तत्संहर्तुं शीलं यस्य तत्। नरेश्वरस्य रामस्य शरैश्छिन्नानि नानावीराणां शिरांसि तैः ततं व्याप्तम् ॥ पक्षे—नरेश्वरो युधिष्ठिरः। शेषं तुल्यम् ॥

रथाश्वमातङ्गनिरन्तराणि हत्वा बहूनि द्विषतां बलानि।
क्षणेन धर्मप्रसवः[1] क्षितीशः शक्त्या क्षितेरुद्धरति स्म शल्यम् ॥ ४४ ॥

क्षितीशः श्रीरामः शक्त्या सामर्थ्येन क्षितेः पृथिव्याः शल्यं व्यथामुद्धरति स्म। द्विषतां शत्रूणां राक्षसानि बहूनि बलानि सैन्यानि हत्वा विनाश्य। कथंभूतानि। रथैरश्वैर्मातङ्गैः करिभिर्निरन्तराणि निरवकाशानि धर्मप्रसवो धर्मप्रधानः धर्मस्य प्रसव उत्पत्तिर्यस्माद्वा ॥ पक्षे—धर्मप्रसवो धर्मात्मजः युधिष्ठिरः। क्षणेन शक्त्या अस्त्रविशेषेण शल्यं मद्रराजमुद्धरति स्म हतवान्। शेषं तुल्यम् ॥

विननाश विरूपाक्षस्तीव्रतापनिपातितः।
यथा विपक्षः शकुनिः सहदेवनिपीडनैः ॥ ४५ ॥

विरूपाक्षो नाम राक्षसो विननाश नश्यति स्म। किंभूतः। तीव्रेत्यादि। तीव्रस्तापो यस्य स तीव्रतापो रामस्तेन निपातितः। विपक्षः शत्रुः। यथा शकुनिः मेघनिपीडनैः सह विपक्षो विगतपक्षः पतति। 'देवो मेघे सुरे पुंसि स्यान्नपुंसकमिन्द्रियम्' इति मेदिनीकरः ॥ पक्षे—शकुनिः सौबलः सहदेवस्य कुन्ती(माद्री)सुतस्य निपीडनैर्विननाश तीव्रप्रतापेन निपातितः। विपक्षः पक्षरहितः। विरूपाक्षः कुत्सितनेत्रः। विरूपाः कुत्सिता अक्षाः पाशका इति वा ॥

सुग्रीवेण दृढाङ्गदेन मथितं भीमेन विद्विट्शतं
सेनानीर्युयुधान एष जगृहे प्रौढारिहासंजयः[2]।
उक्षांचक्रतुरश्विनोश्च तनयौ क्षोणीं द्विषच्छोणितै-
र्दक्षाणामधिपेन पद्मवनवद्ध्वस्ताः परे जिष्णुना ॥ ४६ ॥

विद्विट्शतं विद्विषां शतं सुग्रीवेण वानरश्रेष्ठेन मथितं विनाशितं दृढः अङ्गदो वालिपुत्रो यस्य। भीमेन वानरविशेषेण च। यद्वा सुग्रीवेण अङ्गदेन भीमनाम्ना वानरविशेषेण च विद्विट्शतं मथितमिति योजना। एष सेनानीः नीलः युयुधानो युद्धकर्ता

---

१. 'प्रभवः' कलि०. २. 'न जहौ प्रौढारिहासंजयम्' इति पाठे प्रौढोऽरीणां विषये हासो यस्मादीदृशं जयं न जहौ न तत्याज ॥ पक्षे—प्रौढानरीन् हन्तीति प्रौढारिहा सेनानीर्धृष्टद्युम्नः सात्यकिश्च संजयं न जहौ जग्राह। पश्चाद्व्यासवाक्यान्मुमोचेति तत्त्वम्.

जगृहे अर्थाद्विद्विट्शतं न तत्याज । प्रौढारिं प्रौढशत्रुं हन्तीति प्रौढारिहा । हन्तेः क्विप् । सम्यग् जयो यस्य स संजयः । अश्विनोश्च तनयौ मेदद्विविधौ(दौ) विद्विच्छोणितैः शत्रुरुधिरैः क्षोणीं पृथिवीमुक्षांचक्रतुः सिञ्चतः स्म । ऋक्षाणामधिपेन जाम्बवता च परे शत्रवो विध्वस्ता विनाशिताः । पद्मवनमिव । जिष्णुना जयनशीलेन ॥ पक्षे—भीमेन वृकोदरेण विद्विट्शतं मथितम् । शोभना ग्रीवा यस्य तादृशेन । दृढमङ्गदं बाह्वलंकारो यस्य तादृशेन च । एष सेनानीः धृष्टद्युम्नः विद्विट्शतं जगृहे युयुधानः सात्यकिश्च प्रौढारिहा संजयः । अश्विनोस्तनयौ नकुलसहदेवौ द्विषच्छोणितैः क्षोणीमुक्षांचक्रतुः । जिष्णुना अर्जुनेन परे ध्वस्ता ऋक्षाणां तारकाणामधिपेन चन्द्रेण पद्मवनमिव कुशेशयकाननमिवेति ॥

विलयं व्रजति क्रमाद्बलौघे नृपसेनामसुयोधनां विलोक्य ।
गुरुपुत्रकृतानुबन्धभावः कृतवर्मा सुभटो विदूरमागात् ॥ ४७ ॥

सुभटो रावणः विदूरमागात् दूरावस्थितोऽभूत् । कीदृशः । कृतवर्मा कृतं वर्म संनाहो येन सः । नृपसेनां श्रीरामसेनामसुयोधनां दुर्योध्यां कष्टयोधनां विलोक्य दृष्ट्वा । कस्मिन्सति । बलौघे क्रमाद्विनाशं व्रजति सति । गुरूणां महतां पुत्राणामिन्द्रजित्प्रभृतीनां कृतोऽनुबन्धभावो येन स तथा । 'कृपानुबन्ध(द्ध)' इति पाठे गुरूणां पुत्राणां कृपयानुबन्धः(द्धः) संयुक्तो भावः स्वभावो यस्य सः ॥ पक्षे—कृतवर्मा हार्दिकः विदूरमागात् । रात्रौ सौप्तिकयुद्धं कर्तुं पाण्डवशिबिरं जगामेति भावः । गुरुपुत्रः अश्वत्थामा तस्य कृपानुबन्धेन (गुरुपुत्रकृपाचार्ययोरनुबद्धो) भावोऽभिप्रायो यस्य स तथा । न सुयोधनो दुर्योधनो यत्र एवंभूतां नृपसेनां विलोक्येति । तुल्यमन्यत् ॥

आग्नेयेन रणे धृष्टद्युम्नेनान्ये द्विषो हताः ।
वसन्ते कामदेवेन प्रोषिता इव रागिणः ॥ ४८ ॥

आग्नेयेन अग्निपुत्रेण नीलेन अन्ये द्विषः शत्रवो हताः समरे । किंभूतेन धृष्टं द्युम्नं तेजो यस्य सः । 'द्युम्नं वित्ते बलेऽपि च' इति मेदिनीकरः । रागिणः सकामाः प्रोषिताः प्रवासिनः वसन्ते कामदेवेन मनसिजेन यथा हन्यन्ते ॥ पक्षे—राजविशेषेणैतत्काव्यकर्त्रा यथा हन्यन्ते ॥ पक्षे—धृष्टद्युम्नेन द्रुपदपुत्रेणान्ये द्विषो हताः । आग्नेयेनाग्निकुण्डोत्पन्नेन । शेषं तुल्यम् ॥

इति श्रीहलधरणीप्रसूतकादम्बकुलतिलकचक्रवर्तिकामदेवप्रोत्साहितश्रीकविराजविरचिते राघवपाण्डवीये महाकाव्ये शशिधरविरचिते राघवपाण्डवीयप्रकाशे च मेघनादविरूपाक्षकर्णदुःशासनशल्यशकुनिवधो नाम

द्वादशः सर्गः ।

---

१. हतप्रायं स्वबलं विलोक्य गदामात्रसहाये दुर्योधने रणादपसृत्य व्यासह्रदं प्रविष्टे तमनालोक्य कृपाश्वत्थामकृतवर्माणस्त्रयः शिष्टा महारथा दुर्योधनान्वेषणाय विदूरं जग्मुरित्यर्थस्तु भारतसंवादप्राप्तः.

त्रयोदशः सर्गः ।

अथ स्फुरद्दक्षिणबाहुरुच्चैरङ्गारशेषानलसंनिभस्य ।
अल्पावशिष्टात्मबलस्य शत्रोर्नराधिपो निर्गममन्वियेष ॥ १ ॥

अनन्तरं नराधिपः श्रीरामः शत्रोः रावणस्य निर्गममागमनमन्वियेष इच्छति स्म । किंभूतस्य । अल्पमवशिष्टमात्मबलं स्वसैन्यं यस्य तथा । अङ्गारशेषो योऽनलो वह्निस्तत्संनिभस्य तत्तुल्यस्य । यथा वह्निर्निर्वाप्यते तद्वदयमपीति भावः । स कीदृशः । उच्चैरत्यर्थं स्फुरन् दक्षिणो बाहुर्यस्य । बाहुस्पन्दनं प्रियासमागमं सूचयतीति सामुद्रिकम् ॥ पक्षे—नराधिपो युधिष्ठिरः । शत्रोर्दुर्योधनस्य निर्गमं जलमध्याद्बहिर्निर्गमनम् ॥

रिपोरसहमानास्ते हरिमुख्या विलङ्घनम्[1] ।
रुरुधुस्तदधिष्ठानं सरोवरमिव द्विपाः ॥ २ ॥

ते हरिमुख्या वानरश्रेष्ठा रिपो रावणस्य तदधिष्ठानं लङ्कां रुरुधुः रुन्धन्ति स्म । किंभूताः । विलङ्घनं रिपुकर्तृकपराभवमसहमानाः न मृषन्तः । सरोवरमिव । यथा द्विपा हस्तिनः सरोवरं रुन्धन्ति ॥ पक्षे—हरिः श्रीकृष्णः मुख्यो येषां ते हरिमुख्याः पाण्डवाः रिपोर्दुर्योधनस्याधिष्ठानमवस्थितिस्थानं तत्सरो व्याससरो रुरुधुः । द्विपा हस्तिन इवेति । वरं श्रेष्ठं सरोवरमिति वा । स किल शिबिरमुत्सृज्य जलस्तम्भिन्या विद्यया व्याससरः प्रविश्य स्थितः इति ॥

ततः सगर्वं निरगादरातिर्विपक्षसिंहध्वनिकीर्णकर्णः ।
तदा महानाग इव स्वधाम्नः संदर्शितोत्साहमहीनलक्ष्मा ॥ ३ ॥

अनन्तरमरातिः रावणः स्वधाम्नः स्वकीयगृहात् निरगात् निर्जगाम । सगर्वं साहंकारं यथा स्यात् । विपक्षाणां शत्रूणां रामादीनां सिंहध्वनिना सिंहवद्बलगर्जितेन कीर्णौ व्याप्ताः कर्णा यस्य सः । तदा संदर्शितोत्साहं प्रकाशितोत्साहं यथा स्यात् । न हीनं लक्ष्म चिह्नं राजचिह्नं यस्य सः । महानाग इव महागज इव ॥ पक्षे—अरातिः दुर्योधनः । स्वधाम्नः स्वाश्रयात् सरोवरात् । विपक्षस्य भीमादेः सिंहध्वनिराक्ष्वेडितं तेनाकीर्णौ कर्णौ यस्य ॥

दोर्विक्षेपैरमन्दैः परिघशतमिव व्योम्नि संचारयन्तं
दृक्चारे[2] मण्डलेषु प्रतिदिशमशनैर्दर्शितानेकवक्त्रम् ।
कुर्वाणं दृष्टिपातैरनलकवलितानीव[3] सैन्यानि दूरा-
त्तं कोपादापतन्तं कथमपि ददृशुः प्रत्यनीकप्रवीराः ॥ ४ ॥

प्रत्यनीकप्रवीराः विपक्षयोधाः सुग्रीवादयस्तं रावणं कथमपि ददृशुः पश्यन्ति स्म ।

---

१. 'विलम्बनम्' कलि०. २. 'दृक्चारी' कलि०. ३. 'लितान्येव' कलि०.

किंभूतम् । दोष्णां भुजानां विक्षेपैश्चालनैः व्योम्न्याकाशे परिघशतमिव संचारयन्तम् । परिघा लोहमुद्गराः । किंभूतैः । अमन्दैर्बृहद्भिः । तं कथंभूतम् । मण्डलेषु सैन्येषु दृक्चारे दृशां चालने प्रतिदिशं दिशि दिशि अशनैरमन्दं दर्शितमनेकवक्त्रं नानामुखं येन दशमुखत्वात् । यद्वा मण्डलेषु दृक्चारे अक्षिविक्षेपे प्रतिदिशं दर्शितानेकवक्त्रमिति योज्यम् । दृक्पातैः सैन्यानि परबलानि अनलकवलितानीव वह्निग्रस्तानीव कुर्वाणं कोपाद्दापतन्तमायान्तं शत्रुसैन्यं लक्ष्यीकृत्य कोपात्क्रोधादापतन्तं सुग्रीवादयः कथमपि ददृशुः ॥ पक्षे—तं दुर्योधनं कोपाद्दूरादापतन्तं प्रवीरा भीमादयः प्रतिदिशं दृक्चारे चक्षुषः प्रतिदिशं चालनादनेकवक्त्रमिति वा । शेषं तुल्यम् ॥

तमाहवायाह्वत दूषणघ्नो वृकोदरः काल इवात्तकोपः ।
उत्तेजितश्रीर्वृ[1]षवाहनेन भर्ता भृगूणामिव कार्तवीर्यम् ॥ ५ ॥

दूषणं रक्षोविशेषं हतवान् दूषणघ्नो रामस्तं रावणमाहवाय समराय आहूतवान् । आत्तः कोपो येन सः । यम इवेति । तन्नाशकत्वादिति । किंभूतः । उदरे वृकोऽग्निर्यस्य स वृकोदरः । क इव । भृगूणां भर्ता स्वामी भार्गवः परशुरामः कार्तवीर्यमिव । यथा वृषवाहनेन उत्तेजितश्रीः रुद्रतेजाः परशुरामः कार्तवीर्यमाहूतवानिति ॥ पक्षे—वृकोदरो भीमस्तं दुर्योधनमाहूतवान् । कथंभूतः । दूषणं पुरुषदोषं हन्ति दूषणघ्नः । तथा वृषो धर्मः गरुडो वा वाहनं यस्य तेन श्रीकृष्णेन उत्तेजिता उपोद्बलिता श्रीः वीरश्रीर्यस्य भृगूणां भर्ता कार्तवीर्यमिवेति शेषं तुल्यम् ॥

मुखारविन्दैः सुरसुन्दरीणां नभो बभूवेह सहस्रचन्द्रम् ।
सहस्रगङ्गं च त[2]दोत्सुकानां विमानहंसावलिभिः सुराणाम् ॥ ६ ॥

इहास्मिन्संग्रामे रामरावणयोः कौरवपाण्डवयोर्वा नभो गगनं सहस्रचन्द्रं बभूव । कैः । सुरसुन्दरीणां मुखारविन्दैः । तदा तस्मिन्नेव समये सहस्रगङ्गं च बभूव । अर्थात् युद्धदर्शनायोत्सुकानां देवानां विमानहंसावलिभिः ॥

सरस्वतीपूततनुस्तरस्वी चिराय जायाविरही वनस्थः ।
उपेयिवान्संयुगधाम रामो हरिप्रधानैर्ददृशे सुहृद्भिः ॥ ७ ॥

रामो दाशरथिः हरिप्रधानैः सुहृद्भिर्मित्रैः ददृशे दृष्टः । संयुगधाम संग्राममस्थानमुपेयिवानुपगतः । सरस्वत्या वाण्या पूता तनुर्यस्य । तरस्वी वेगवान् । चिराय चिरकालं जायाविरही सीतावियुक्तः । अत एव वनस्थः वनवासी ॥ पक्षे—रामो बलदेवः संयुगधाम संग्रामस्थानमुपेयिवान् । हरिप्रधानैः श्रीकृष्णमुख्यैः सुहृद्भिरर्जुनादिभिर्ददृशे । सरस्वती नदीविशेषः तया पूता तनुर्यस्य । जायया रेवत्या विरही वियुक्तः व्रतस्थः तीर्थयात्रायाः प्रत्यागतत्वात् ॥

---

१. 'वृषभध्वजेन' कलि०. २. 'तदुत्सुकानां' कलि०.

जज्ञे तयोरथ ददद्भुवनाय भीतिं
स्फीताङ्गदोज्ज्वलभुजावलि तत्समीकम् ।
अन्योन्यहेतिपरिघट्टनकीर्णवह्नि-
ज्वालापरिस्फुरणतर्जितविद्युदर्चिः ॥ ८ ॥

अथानन्तरं तयोः रामरावणयोः भीमदुर्योधनयोर्वा तत्समीकं संग्रामः जज्ञे जातः । भुवनाय लोकाय भीतिं ददत् । 'नाभ्यस्ताच्छतुः' इति नुमूनिषेधः । किंभूतम् । स्फीतः सोत्साहो योऽङ्गदो नाम वालिपुत्रः तस्योज्ज्वला तेजःसहिता भुजावलिर्यत्रेति रामपक्षे ॥ रावणपक्षे तु—स्फीतोऽङ्गदोऽलंकारविशेषो यत्रैवमुज्ज्वला भुजावलिर्यत्र विंशतिबाहुत्वाद्भुजावलिरिति । भीमदुर्योधनपक्षे—स्फीताङ्गदाभ्यां बाह्वलंकाराभ्यामुज्ज्वला भुजावलिर्यत्रेति । तथा अन्योन्यं परस्परं हेतीनामस्त्राणां संघट्टनेन मिलनेन कीर्णस्य विक्षिप्तस्य वह्नेर्ज्वालानां परिस्फुरणेन तर्जिता विद्युदर्चिर्येन तम् ॥

आद्यैरायुधपातपूततनुभिर्वीरैर्विमानस्थितै-
रभ्यस्तामरसुन्दरीरतिरसैः सासूयमालोकितः ।
घोरः स्यन्दनवेगनिःसहमहीदिक्कुम्भिकुम्भीनस-
श्रेष्ठप्रार्थितशान्तिराहवविधिस्तत्रास निस्त्रासयोः ॥ ९ ॥

तत्र संगरे निस्त्रासयोः त्रासशून्ययोः रामरावणयोः भीमदुर्योधनयोर्वा समरविधिः संग्रामविधानमास बभूव । किंभूतः । आद्यैः प्रथमस्वर्गगतैर्वीरैः आयुधपातपूततनुभिः अभिमुखसंग्रामपतितैः विमानस्थैः अभ्यस्तामरसुन्दरीरतिरसैः अभ्यस्तोऽनुभूतः अमरसुन्दरीणां रतिरसः संभोगरसो यैस्तैः सासूयं सक्रोधमालोकितो निरीक्षितः घोरो भयानकः स्यन्दनवेगेन निःसहायां मह्यां पृथिव्यां दिक्कुम्भिना दिग्दन्तिना कुम्भीनसश्रेष्ठेन सर्पश्रेष्ठेन शेषेण प्रार्थिता शान्तिर्यस्य स तथा । 'कुम्भीनसः क्रूरसर्पे स्त्रियां लवणदातरि' इति मेदिनीकरः ॥

धूतचापलतया विराजतोर्मार्गणाभिहतमर्मणोर्मिथः ।
नान्तरं ददृशुराहवे तयोः साधुवादमुखरा नभश्चराः ॥ १० ॥

तयोः रामरावणयोः भीमदुर्योधनयोर्वा आहवे संग्रामे अनन्तरं विशेषं नभश्चरा गगनचारिणो देवादयो न ददृशुः न पश्यन्ति स्म । किंभूतयोः । धूतचापलतया त्यक्तचापलत्वेन विराजतोः । मिथोऽन्योन्यं मार्गणैर्बाणैः अभिहतं मर्म ययोः । कीदृशाः नभश्चराः । साधु साध्विति वचनेन मुखराः ॥

---

१. 'महाभुजयोः समीकम्' कलि०. २. 'तदा' कलि०.

मुक्ताशोकस्तबकनिकरैः सावतंसा इवाशा
विद्युच्छेदैरिव शबलिताः शारदा वारिवाहाः ।
उल्काजालैरिव जटिलिता जज्ञिरे व्योमगर्भा-
स्तूर्णोत्कीर्णैः प्रसभमुभयोरायुधार्चिःकलापैः ॥ ११ ॥

उभयोः रामरावणयोः भीमदुर्योधनयोर्वा तूर्णं शीघ्रमुत्कीर्णैः विक्षिप्तैरायुधानामस्त्राणामर्चिषः तेजसः कलापैः समूहैराशा दिशः सावतंसा इव जज्ञिरे । किंभूतैः । मुक्तस्त्यक्तः अशोकस्तबकानां निकरः समूहो यैस्ते । 'अवतंसो न स्त्रियां स्यात्कर्णपूरेऽपि शेखरे' इति मेदिनीकरः । शारदाः शरत्कालीना मेघा विद्युच्छेदैः सौदामिनीखण्डैरिव शबलिताः कर्बुरा जज्ञिरे । अस्त्रतेजःकलापैरिति । व्योमगर्भा गगनान्तराणि उल्काजालैर्जटिलिता इव बभूवुः । गगनगर्भाः । तेजोनिकरैर्विभूषिता इति । सर्वत्रोत्प्रेक्षालंकारः । 'मुक्ता स्त्री मौक्तिके प्राप्तमुक्तिमोचितयोस्त्रिषु' इति विश्वः ॥

मनोरथगतिध्वंसपरिवर्धितरोषयोः ।
रणकर्म सुदक्षत्वादश्रान्तमुभयोरभूत् ॥ १२ ॥

उभयो रामरावणयोर्भीमदुर्योधनयोर्वा रणकर्म समरव्यापारः अश्रान्तमनवरतमभूत् । सुदक्षत्वात् अत्यर्थकुशलत्वात् । कीदृशयोः । मनोरथस्य काङ्क्षाया या गतिस्तस्या ध्वंसेन परिवर्धितो रोषो ययोस्तौ ॥

तथा तयोर्विक्रम उद्दिदीपे दिदृक्षया व्योम्नि यथा समेताः ।
दिवौकसोऽप्येकतरेण लभ्यं जयं न निश्चेतुमलंबभूवुः ॥ १३ ॥

तयो रामरावणयोर्भीमदुर्योधनयोर्वा विक्रमः पराक्रमः तथा तेन प्रकारेण उद्दिदीपे प्रकाशितः, यथा दिवौकसो देवा अपि दिदृक्षया दर्शनेच्छया व्योम्नि गगने समेता मिलिता एकतरेण तयोर्द्वयोर्लभ्यं प्राप्यं जयं निश्चेतुं नालंबभूवुर्न समर्था अभूवन् । किं रामस्य रावणस्य वा जय इति किं भीमस्य दुर्योधनस्य वा जय इति ॥

मध्ये तयोरायुधघट्टजन्मा प्रतिक्षणं वह्निशिखोल्लसन्ती ।
भीता तयोरेकतरं ग्रहीतुं साक्षाज्जयश्रीरिव लक्ष्यते स्म ॥ १४ ॥

तयो रामरावणयोर्भीमदुर्योधनयोर्वा मध्ये आयुधघट्टजन्मा अस्त्रघट्टोत्पन्ना प्रतिक्षणमुल्लसन्ती वह्निशिखा अनलज्वाला लक्ष्यते स्म । केव । तयोर्द्वयोर्मध्ये एकतरं ग्रहीतुं साक्षाज्जयश्रीरिवेति ॥

पौष्पी वृष्टिः पुरस्तात्तदुपरि कुसुमोपक्षये खेचरौघै-
र्मुक्ता मुक्ताकलापाः किल तदुपरमे केवलाः साधुवादाः ।

---

१. 'रक्ता' कलि०.

संयत्संरम्भभीतास्त्रिदशयुवतयोऽप्यञ्चलैरंशुकानां
चक्षूंषि च्छादयन्त्यो दिवि दयिततमैर्दूरमालिङ्ग्य नीताः ॥ १५ ॥

तयो रामरावणयोर्भीमदुर्योधनयोर्वा उपरि खेचराणां गगनचारिणामोघैः समूहैः पुष्पसंबन्धिनी वृष्टिः वर्षणं मुक्ता त्यक्ता पुरस्तात्प्रथमतः। कुसुमोपक्षये कुसुमानामुपक्षये अलाभे सति मुक्ताकलापा मुक्ता मुक्तसमूहास्त्यक्ता इति। तदुपरमे तद्व्यये सति केवलाः साधुवादा मुक्ताः। त्रिदशयुवतयो देवाङ्गनाः दिवि आकाशे दयिततमैर्वल्लभैः आलिङ्ग्य परिरभ्य संग्रामाद्दूरमानीताः। हेतुगर्भविशेषणम्। यतः। संयतः संग्रामस्य संरम्भे भीतास्त्रस्ताः अत एवांशुकानां वस्त्राणामञ्चलैरेकदेशैश्चक्षूंषि छादयन्त्यः पिदधत्यः ॥

दिग्भित्तिप्र[1]तिनादिदुन्दुभिरवप्रक्षोभिगर्भोच्च[2]ल-
न्नानानागनगेन्द्रनक्रनिकरप्रोत्क्षिप्तवीचिच्छटः।
वेलान्तानुदलङ्घयत्कुपितयोर्नूनं तयोरायुध-
ज्वालौर्वानललङ्घितस्य नभसो निर्वापणायाम्बुधिः ॥ १६ ॥

अम्बुधिः समुद्रः वेलान्तानुदलङ्घयत्। ऊर्ध्वं गत इत्यर्थः। नूनमुत्प्रेक्षायाम्। तयो रामरावणयोर्भीमदुर्योधनयोर्वा कुपितयोः क्रुद्धयोः आयुधानामस्त्राणां ज्वाला दीप्तिः सैव और्वानलः तेन लङ्घितस्याक्रान्तस्य नभसो गगनस्य निर्वापणाय शान्त्यर्थम्। स किंभूतः। दिग्भित्तौ प्रतिनादी यो दुन्दुभिरवः देववाद्यविशेषध्वनिः तेन प्रकर्षेण क्षोभिनः ये गर्भादभ्यन्तरादुच्चलन्तो नाना नागाः सर्पा हस्तिनो नगेन्द्रा मैनाकप्रभृतयः नक्रा जलजन्तुविशेषास्तेषां निकरैः समूहैः प्रकर्षेणोत्क्षिप्ता ऊर्ध्वं प्रेरिता वीचिच्छटा कल्लोलपङ्क्तिर्यस्य स तथा ॥

विलोक्य विद्वेषिवधे ससंशयं रणे जगत्प्राणभुवं नृपात्मजम्।
उपायमस्मै निभृतं न्यवेदयज्जयोचितं कोऽपि पुरातनो मुनिः ॥ १७ ॥

कोऽपि पुरातनो मुनिः (अगस्त्यः) अस्मै श्रीरामाय जयोचितं जययोग्यमुपायं न्यवेदयत् निवेदयति स्म। निभृतं गुप्तं कृत्वा। नृपात्मजं रामं रणे समरे विद्वेषिणो रावणस्य वधे ससंशयं संशयितमालोक्य जगत्प्राणभुवं संसारिणां प्राणभूमिं जयोपायं कथितवानित्यर्थः ॥ पक्षे—अस्मै भीमाय पुरातनो मुनिः श्रीकृष्णः जगत्प्राणो वायुस्तस्माद्भूरुत्पत्तिर्यस्य तं नृपात्मजं भीमं विद्वेषिणो दुर्योधनस्य वधे संशयितमालोक्य कृष्णेन किल दुर्योधनोरुभङ्गाय निजोरुस्पर्शात्संज्ञा भीमाय दत्तेति ॥

प्रवर्त्य भीमोऽथ लसन्महायुधं विरोधिवीरं निजघान मर्मणि।
पुरेव रामः शतमन्युसंभवं महास्त्रमोक्षेण निशाचरेश्वरम् ॥ १८ ॥

---

१. 'प्रतिनाद' कलि०. २. 'च्छल' कलि०.

रामो दाशरथिर्विरोधिवीरं निशाचरेश्वरं रावणं मर्मणि महास्त्रमोक्षेण महास्त्रं प्रक्षिप्य जघान हतवान् । किंभूतः । भीमो भयानकः । प्रवर्त्य प्रवर्तनं कृत्वा । लसन्महायुधं यस्य तम् । यथा पुरा शतमन्युसंभवं वालिनं मर्मणि इवेति ॥ पक्षे—भीमो वृकोदरो विरोधिवीरं दुर्योधनं मर्मणि जघान । पुरा निशाचरेश्वरं रावणमिव । किंभूतम् । शतमन्योः क्रोधस्य संभवो यस्मात् ॥

ततः स उच्चैर्गतमानसोऽपि दुर्योधनश्छिन्नदशाननश्रीः ।
प्राप्योरुभङ्गं जगतीं जगाम सुरद्विषां मूर्त इवाभिमानः ॥ १९ ॥

दुष्टं योधनं युद्धं यस्य स तादृशः स रावणो जगतीं जगाम पृथ्वीं गतः । ऊरुश्चासौ भङ्गश्चेति पराजयः तं प्राप्य उच्चैर्गतं मानसं यस्य स उच्चमानस इत्यर्थः । अभिमानगुरुत्वाद्विष्णुना हतत्वाच्चेति । गतमानसो गतप्राण इति वा । 'मानसं सरसि स्वान्ते' इति विश्वः । छिन्ना दशानां दशसंख्यानामाननानां मुखानां श्रीर्लक्ष्मीर्यस्य सः । सुरद्विषामसुराणां मूर्तो मूर्तिमान् अहंकार इव ॥ पक्षे—दुर्योधनो धार्तराष्ट्रः ऊर्वोर्भङ्गः ऊरुभङ्गः तं प्राप्य जगतीं जगाम । छिन्ना दशा अवस्था यस्याः सा एवंभूता आननश्रीर्यस्य स छिन्नदशाननश्रीः । शेषं तुल्यम् ॥

अन्ते संग्रामयज्ञस्य सद्यः पूर्णाहुतीकृतः ।
तत्कायः परिचस्कार दारुणं रणमण्डलम् ॥ २० ॥

तस्य रावणस्य दुर्योधनस्य वा कायः शरीरं रणमण्डलं परिचस्कार अलंकरोति स्म । संग्राम एव यज्ञस्तस्यान्ते सद्यस्तत्कालं पूर्णाहुतीकृतः । अन्यत्रापि यज्ञे पूर्णाहुतिः क्रियते ॥

विससृजुरथ वृष्टिं कौसुमीमम्बुवाहा
ननृतुरमरवध्वो दध्वनुः खे मृदङ्गाः ।
जगुरनिमिष[1]संघा दिक्पुरंध्र्यः प्रसेदु-
स्तुतुषुरखिललोका मङ्गलेनेव पूर्णाः ॥ २१ ॥

मङ्गलेनेव पूर्णा इति सर्वत्र संबध्यते । मङ्गलेन पूर्णा इवाम्बुवाहाः मेघाः अथानन्तरं कुसुमसंबन्धिनीं वृष्टिं विससृजुः तत्यजुः । अमरवध्वो देवाङ्गनाः ननृतुः । खे गगने मृदङ्गाः दध्वनुः शब्दं चक्रुः । दिशश्च पुरंध्र्यश्च दिक्पुरंध्र्यः प्रसेदुः । अनिमिषाणां देवानां संघा जगुः । 'अनिमिषभूताः' इति पाठे दिश एव पुरंध्र्यः अनिमिषभूताः अनिमिषाः प्रबुद्धा भूता जना यासाम् । अनिमेषभूता निर्निमेषाश्च अखिललोकाश्च तुष्टुवुः संतुष्टा बभूवुः ॥

---

१. 'सूताः' कलि०.

तीर्त्वा प्रतिज्ञां पवनात्मजेन प्रत्यागतेनाभिहितारिभङ्गा।
मेने तदानीं मनुजेन्द्रपत्नी महोत्सवं भर्तृमुखावलोकम् ॥ २२ ॥

मनुजेन्द्रस्य श्रीरामस्य पत्नी सीता भर्तुः मुखावलोकं स्वामिमुखदर्शनं महोत्सवं मेने। तदानीं तस्मिन्काले प्रतिज्ञां तीर्त्वा। पवनात्मजेन हनूमता प्रत्यागतेन अभिहितः अरिभङ्गो रावणवधो यस्यै सा तथा ॥ पक्षे—मनुजेन्द्रपत्नी द्रौपदी भर्तृमुखावलोकं महोत्सवं मेने पवनात्मजेन भीमेनाभिहितारिभङ्गा कथितदुर्योधनवधा इति। शेषं तुल्यम्॥

महावराहेण महीव सागरात्समुद्धृता भीमबलेन संकटात्।
नरेन्द्रपत्नी प्रतिपन्नमङ्गला जहर्ष जन्मान्तरमास्थिता यथा ॥ २३ ॥

नरेन्द्रपत्नी सीता जहर्ष तुष्टा बभूव। जन्मान्तरं पुनर्जन्म आस्थिता यथेति। द्वितीयजन्माश्रिता वेत्यर्थः। सा किंभूता। प्रतिपन्नमङ्गला प्राप्तमङ्गला। भीमं भयानकं बलं सैन्यं यस्य तेन भीमबलेन रामेण संकटाद्दुर्गात् समुद्धृता। आदिवराहरूपिणा विष्णुना सागरात्समुद्रमध्यात्पृथ्वीव ॥ पक्षे—नरेन्द्रपत्नी द्रौपदी भीमस्य वृकोदरस्य बलेन सामर्थ्येन। तुल्यमन्यत् ॥

पत्युः प्रतिज्ञार्णवलङ्घनेन सकञ्चुका संचितचारुवेणी।
अनल्पसंतापहुताशमध्याद्विनिःसृता राजवधूर्विरेजे ॥ २४ ॥

राज्ञो रामस्य वधूः सीता विरेजे शुशुभे। अनल्पः संतापो यस्यैवंभूतस्य हुताशस्य वह्नेः मध्याद्विनिःसृता बहिर्गता। अग्निप्रवेशं कृत्वा विशुद्धा रराजेत्यर्थः। पत्युः स्वामिनः प्रतिज्ञार्णवस्य प्रतिज्ञासमुद्रस्य लङ्घनेन सकञ्चुका कञ्चुकयुक्ता। तथा संचिता चार्वङ्गी वेणी यस्याः सा तथा। कृतवेषपरिष्कारेत्यर्थः ॥ पक्षे—राजवधूः द्रौपदी अनल्पो यः संतापो दुःखं स एव हुताशो वह्निस्तन्मध्यात्। पत्युर्भीमस्य प्रतिज्ञार्णवलङ्घनेन सकञ्चुका संचितचारुवेणी। यदा दुःशासनेन तस्याः केशाम्बराकर्षणं कृतं तदारभ्याबद्धवेण्येवासीत्, पश्चात्तस्मिन् हते परिष्कृतवेणीबन्धेत्यर्थः ॥

राज्ये नियुक्तेन विभीषणेन हरिप्रणेत्रानुगतो बलेन।
नराधिपः स्वां नगरीं प्रतस्थे विमानराजप्रभुतां प्रपन्नः ॥ २५ ॥

नराधिपः श्रीरामः स्वां नगरीमयोध्यां प्रतस्थे जगाम। विमानराजस्य विमानश्रेष्ठस्य पुष्पकस्य प्रभुतां प्रपन्नो गतः। रावणवधात्प्राप्तं पुष्पकनामानं विमानं व्योमयानमारुह्येति भावः। राज्ये अर्थाद्रावणस्य। नियुक्तेन विभीषणेन लङ्काधिपतिना अनुगतः कृतपश्चाद्गमनः। बलेन वानरस्य सैन्येन हरीणां वानराणां प्रणेत्रा नायकेन सुग्रीवेणा-

---

१. एतत्पद्यं सौप्तिकपर्वकथानुवादक'समुद्वहन्–'इत्यादिश्लोकचतुष्टयोत्तरमुचितमत्र लेखकप्रमादात्पतितं भवेत्.

नुगतः॥ पक्षे—नराधिपो युधिष्ठिरः स्वां नगरीमिन्द्रप्रस्थं प्रतस्थे। किंभूतः। विमाना विगतमाना मानशून्या ये राजानस्तेषां प्रभुत्वं प्रपन्नः॥

समुद्वहन्भर्तरि भक्तिमुत्कटां कृपानुगामी कृतवर्मनोदनः।
तमन्वगच्छद्गुरुवंशवर्धनः क्षपाचरो राजवरं विभीषणः॥ २६॥

क्षपाचरो विभीषणस्तं राममन्वगच्छत् अनुजगाम। राजवरं राजश्रेष्ठम्। स कीदृशः। भर्तरि स्वामिनि उत्कटामधिकां भक्तिमुद्वहन्। कृपया करुणयानुगामी अनुगमनशीलः कृपानुगामी। तथा कृतं वर्म संनाहो येन स कृतवर्मा योधस्तं नोदयति प्रेरयति यः स तथा। यद्वा कृतं वर्मणः संनाहस्य नोदनमपनयनं येन स तथा। त्यक्तसंनाह इत्यर्थः। गुरु यथा स्यात्। तथा वंशस्य स्वकीयवंशस्य वर्धनः उत्कर्षकर्ता। यद्वा गुरोर्जनकस्य पितुर्वंशवर्धनः राक्षसवंशरक्षकः॥ पक्षे—तं राजवरं युधिष्ठिरं गुरोर्द्रोणस्य वंशवर्धनः पुत्रः अश्वत्थामा अन्वगच्छत्। पाण्डवं लक्ष्यीकृत्य जगाम। किंभूतः क्षपाचरो रात्रिचारी। कृपः कृपाचार्यः अनुगामी यस्य स तथा। कृतवर्मणा राजविशेषेण नोदनं प्रेरणं यस्य। भर्तरि दुर्योधने उत्कटामधिकां भक्तिमुद्वहन्निति। विभीषणो भयंकरः॥

स[1] कुलस्यानुकूलेन शनैरारात्पताकिनीम्।
प्रभञ्जनः कुम्भजाशासंभवस्तामवर्धयत्॥ २७॥

प्रभञ्जनो वायुस्तां पताकिनीं रामसेनामश्वत्थामादिसेनां वा अवर्धयत् वर्धयति स्म। शनैर्मन्दम्। आरात्समीपे। कुलस्यानुकूलेन राजकुलस्यानुकूलकारिणेत्यर्थः। हेतौ तृतीया। कुम्भजोऽगस्त्यस्तस्याशा दिक् दक्षिणा तस्यां संभवो जन्म यस्य स तथेति। दक्षिणदिक्संभव इत्यर्थः॥

अभ्यर्णे कीर्णसेनापतिपृथुकुणपं कृत्तभीष्मारिकण्ठं
योधव्रातप्रतीकैर्विषमितवसुधं ध्वस्तनानाकुमारम्।
खेलद्वेतालमारादुपरिपरिपतत्फेरुभेरुण्डदण्डं
द्रष्टुं[2] सा नालमासीत्पथिषु नृपवधू राजपुत्राजिरङ्गम्॥ २८॥

नृपवधूः सीता द्रौपदी वा राजपुत्राणां रामादीनां युधिष्ठिरादीनां वा आजिः संगरः स एव रङ्गो नर्तनभूमिः तं द्रष्टुं पथिषु वर्त्मसु नैवालमासीत् नैव समर्था बभूव। अभ्यर्णे

---

१. 'शकुनस्यानुकूल्येन' इति कलिकातामुद्रितपाठ एव साधीयान्। तत्र रामायणपक्षे शकुनं शुभसूचकनिमित्तम्। तस्यानुकूल्येनेत्यर्थः॥ भारतीयपक्षे तु रात्रौ निःशङ्कं सुप्तं काकं मारयत उलूकस्यानुकूल्येनोपदेशेन प्रभञ्जनः प्रकर्षेण शत्रुमर्दनः कुम्भजस्य द्रोणस्याशया संभवो यस्य तादृगश्वत्थामा तां पताकिनीं पाण्डवीयसेनामच्छेदयदमारयत्' इत्यर्थः. २. 'श्रोतुं वा' कलि०.

समीपे कीर्णा विक्षिप्ता ये सेनापतयः तत्र पृथवो बहवः कुणपाः प्रेता यत्र । यद्वा (पक्षे—) कीर्णाः सेनापतौ धृष्टद्युम्ने (मृतत्वात्) पृथवः कुणपा यत्र तम् । गमकत्वाद्वाधिकरणे बहुव्रीहिः । यद्वा कीर्णः समन्ततो विकीर्णः सेनापतिः पृथुर्महान् कुणपो राक्षसो घटोत्कचादिर्यत्र तम् । कृत्तश्छिन्नो भीष्मो भयानकोऽरिकण्ठो यत्र ॥ पक्षे—कृत्तः भीष्मेण गाङ्गेयेनारीणां कण्ठो यत्र तम्[1] । योधव्रातानां वीरसमूहानां प्रतीकैः शरीरैर्विषमिता वसुधा पृथ्वी यत्र तम् । ध्वस्ता नानाविधाः कुमारा (अतिकायादयो द्रौपदेया वा) यत्र तम् । खेलन्तो वेताला यत्र तम् । आराद्दूरत उपरि परिपतन्तः पतमानाः फेरवः शृगालाः तैर्भेरुण्डा भयानका रुण्डाः कबन्धा यत्र तम् । 'भेरुण्डा देवताभेदे पक्षिण्यन्तरयोः स्त्रियाम् । भयानके वाच्यलिङ्गो मार्तण्डः क्रोडसूर्ययोः ॥' इति मेदिनीकरः ॥

कृतप्रतीकारमरेः कृतागसः समग्रचूडामणिमौलिनिग्रहात् ।
अभीष्टवन्तो[2] विजयं महाभुजं ससोदरं तं सुहृदोऽनुवव्रजुः ॥ २९ ॥

सुहृदो मित्राणि तं श्रीराममनुवव्रजुः अनुव्रजन्ति स्म । ससोदरं सलक्ष्मणम् । महान्तौ भुजौ यस्य तं महाभुजम् । कृतागसः कृतापराधस्य शत्रोः समग्रचूडामणिमौलिनिग्रहात् कृतप्रतीकारमित्यर्थादागसः समग्राश्चूडामणयो यत्र एवंभूता ये मौलयः किरीटानि तन्निग्रहात् तदपहरणात् । ते किंभूताः । विजयमभीष्टवन्तः आकाङ्क्षन्तः ॥ पक्षे—तं विजयमर्जुनं ससोदरं युधिष्ठिरादिसहितमरेरश्वत्थाम्नः कृतागसः सौप्तिकराजपुत्रहन्तुः समग्रचूडामणिर्यो मौलिः तस्य निग्रहाच्छेदनात् कृतप्रतीकारम् । सुहृदः किंभूताः । अभीष्टवन्तः अभीष्टं विद्यते येषाम् । 'चूडा स्त्रियां तु वलभौ शिखायां बाहुभूषणे' इति विश्वप्रकाशः । 'मौलिः किरीटे धम्मिल्ले चूडायामवतंसके' इति मेदिनीकरः ॥

एवं विलङ्घ्यापदमर्णवं वा जवेन पश्चात्कृतदीर्घमार्गः ।
स बन्धुवर्गं भरतप्रधानं ददर्श राजा धृतराष्ट्रमग्रे[3] ॥ ३० ॥

स राजा श्रीरामः बन्धुवर्गं ददर्शापश्यत् । कीदृशम् । भरतप्रधानम् । भरतः कैकेयः प्रधानं मुख्यं यत्र तम् । एवमनेन प्रकारेण आपदं विपदमर्णवं समुद्रमिव वा विलङ्घ्य जवेन वेगेन पश्चात्कृतो लङ्घितो दीर्घो मार्गो येन स तथा । अग्रे प्रथमतो धृतं राष्ट्रं येन तम् ॥ पक्षे—राजा युधिष्ठिरः अग्रे पुरस्ताद्धृतराष्ट्रं कौरवेश्वरं ददर्श सबन्धुवर्गं स्वजनसमूहसहितं भरतानां भरतवंशानां प्रधानम् ॥

शिखावलानामिव वारिवाहं वनप्रियाणामिव[4] चैत्रमासम् ।
उदन्वतामिन्दुमिवोज्जजृम्भे प्रीतिस्तमालोकयतां जनानाम् ॥ ३१ ॥

---

१. भीष्मारेः शिखण्डिनः कण्ठो यत्रेति सम्यक्. २. 'अभिष्टवन्तो' कलि०. ३. 'माशु' कलि०. ४. 'पिकावलीना' कलि०.

तं रामं युधिष्ठिरं वा आलोकयतां जनानां प्रीतिरुज्जृम्भे ववृधे । केषामिव । शिखावलानां वारिवाहमिव । यथा मेघं पश्यतां मयूराणां प्रीतिर्वर्धते । वारिवाहपदेन वर्षाकालीनत्वमुक्तम् । यथा चैत्रमासं पश्यतां वनप्रियाणां कोकिलानाम् इन्दुं पश्यतामुदन्वतां समुद्राणामिवेति । शिखा अस्यास्तीति शिखावलः । 'शिखाया वलच्' ॥

चिराद्वियोगे तपसीव तीव्रे गते समाप्तिं परिपाकभाजा ।
फलोदयेनेव तदीक्षणेन कृतार्थतामापुरमात्यवर्गाः ॥ ३२ ॥

अमात्यवर्गाः प्रकृतिगणास्तयोः श्रीरामयुधिष्ठिरयोरीक्षणेन विलोकनेन कृतार्थतामापुः कृतार्था बभूवुः । परि सर्वतो भावेन पाकभाजा परिपक्वेन । निष्पन्नेनेत्यर्थः । तीव्रे कठिने वियोगे विश्लेषे समाप्तिं गते सति । तपसीव फलोदयेनेवेति । यथा तपसि समाप्तिं गते सति फलोदयेन तपस्याफलप्राप्त्या कृतार्थतां प्राप्नुवन्ति परिपाकभाजेति । समानम् ॥

श्रीखण्डद्रवनीरजीकृतपथा वल्गत्पताका क्वचि-
द्भास्वत्तोरणराजिरुत्सुकजनप्रारब्धरम्योत्सवा ।
हृद्यातोद्यरवा ससंभ्रमवधूकान्तोच्चहर्म्यावली
पत्यावेष्यति कामिनीव नगरी सा कॢप्तशोभा बभौ ॥ ३३ ॥

सा नगरी अयोध्या, इन्द्रप्रस्थं वा, बभौ शुशुभे । पत्यौ स्वामिनि श्रीरामे युधिष्ठिरे वा आगच्छति सतीति कामिनीव । सापि पत्यौ वल्लभे आगच्छति शोभते । कीदृशी । श्रीखण्डस्य चन्दनस्य द्रवेण नीरजीकृतः संमार्जितः । लिप्त इति यावत् । पन्था मार्गो यत्र सा । 'अहर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च' इति सकारलोपः । 'ऋक्पूरब्धूपथामानक्षे' इत्यकारः समासान्तः । वल्गन्त्यः पताका यत्र सा तथा । क्वचिदिति कस्मिंश्चित्प्रदेशे भास्वती दीप्तियुक्ता तोरणानां राजिर्यत्र सा तथा उत्सुकेनोत्कण्ठासहितेन जनेन प्रारब्धः रम्य उत्सवो यस्यां सा तथा । हृद्यो मनोहरः आतोद्यानां गीतनृत्यवाद्यानां रवो यत्र सा तथा । ससंभ्रमाभिः सादराभिः वधूभिः कान्ता कमनीया उच्चा हर्म्यावली गृहश्रेणी यत्र सा । कॢप्ता रचिता शोभा यत्र सा । कामिनीपक्षे । यथायोगं तृतीयान्तः षष्ठ्यन्तश्चान्यपदार्थ इति ॥

करकिसलयमुक्तैर्लाजवर्षैर्वधूना-
मलघुभिरनुवेलं कीर्यमाणाङ्गयष्टिः ।
प्रमुदितजनवर्गं राजमार्गेण गत्वा
भवनमवनिपालः प्राविशत्पूर्वजानाम् ॥ ३४ ॥

पूर्वजानां स्ववंश्यानां पितृपितामहादीनां भवनं गृहमवनिपालो राजा श्रीरामो युधि-

ष्ठिरो वा प्राविशत् । कीदृशः । अनुवेलं वारं वारं बहुभिर्लाजवर्षैः कीर्यमाणा अङ्गयष्टिर्यस्य सः । कीदृशैः । नगराङ्गनानां करकिसलयमुक्तैः अलघुभिर्बृहत्तरैः । किंभूतं भवनम् । प्रमुदितो जनवर्गो बन्धुजनसमूहो वा यत्र तम् । राजमार्गेण राजपथेन गत्वा आवासमित्यर्थात् । 'लाजः स्यादार्द्रतण्डुले' इति मेदिनीकरः ॥

नाथेन साकं प्रथमं गतायास्तेनैव साकं पुनराव्रजन्त्याः ।
साक्षाच्छ्रियो मूर्तिरिवाविवेश पुरे नरेन्द्रस्य तदा पुरंध्री ॥ ३५ ॥

तदा तस्मिन्काले नरेन्द्रस्य श्रीरामस्य युधिष्ठिरस्य वा पुरे नगरे पुरंध्री सीता द्रौपदी वा आविवेश प्रविष्टा । साक्षात्प्रत्यक्षं श्रियो लक्ष्म्याः मूर्तिरिव । सहोपमैव वा । तेन नाथेन श्रीरामेण युधिष्ठिरेण वा साकं सह प्रथमं गतायाः वनवासमित्यर्थात् पश्चात्तेनैव साकं पुनराव्रजन्त्याः आशुगच्छन्त्याः ॥

तदा तदालोकनसंत्वराणां मुखैर्वधूनां निचिता गवाक्षाः ।
विकासिहेमाम्बुजनिर्भराणां सरोवराणां समतामवापुः ॥ ३६ ॥

तस्मिन्काले गवाक्षा जालमार्गाः सरोवराणां सरसां समतां साम्यमवापुः प्राप्नुवन्ति स्म । वधूनां मुखैर्निचितान्तरालाः । तासां किंभूतानाम् । तदालोकने श्रीरामादीनां युधिष्ठिरादीनां वा आलोकने दर्शने सत्वराणां शीघ्रगामिनीनाम् । सरसां कीदृशानाम् । विकासिभिः हेमाम्बुजैः निर्भराणां व्याप्तानाम् । तस्याः सीताया द्रौपद्या वा दर्शनार्थं सत्वराणामिति केचित् ॥

चयेन दन्ताधरलोचनत्विषां विलक्ष्यमाणानुभवेन सुभ्रुवाम् ।
सुवर्णवातायनपङ्क्तयस्तदा विचित्ररत्नैः[2] खचिता इवाबभुः ॥ ३७ ॥

तदा तस्मिन्काले सुवर्णवातायनपङ्क्तयः कनकगवाक्षश्रेणयः आबभुः शुशुभिरे । विचित्रैर्नानारूपै रत्नैः खचिता संबद्धा इव । केन । चयेन । कासाम् । सुभ्रुवां संबन्धि दन्ताधरलोचनत्विषां दन्तानामधराणां दन्तच्छदानां लोचनानां च त्विषां दीप्तीनाम् । कथंभूतेन । विविधो नानारूपो लक्ष्यमाणोऽनुभवो यत्र तेनेति ॥

शरीरसंधारणदुःखराशेरेतत्फलं श्रेय इति स्मरन्तीम् ।
स्नुषामुखन्यस्तसबाष्पदृष्टिं भक्त्या ववन्दे जननीं नरेन्द्रः ॥ ३८ ॥

नरेन्द्रः श्रीरामो युधिष्ठिरो वा जननीं मातरं कौसल्यां कुन्तीं वा भक्त्या ववन्दे नमस्करोति स्म । किंभूताम् । स्नुषायाः पुत्रवध्वाः सीतायाः द्रौपद्या वा मुखे न्यस्ता सबाष्पा आनन्दबाष्पयुक्ता दृष्टिर्यया तां तथा । इति स्मरन्तीम् । इतीति किम् । शरीरस्य संधारणे यो दुःखराशिः संवृत्तः तस्यैतत्फलं श्रेयः कल्याणं पुत्रस्नुषामुखदर्शनरूपं

१. 'तत्पराणां' कलि०. २. 'रत्नोत्खचिताः' कलि०.

फलमिति । यद्वा । भक्तिः स्वामिसेवा सीता द्रौपदीकृता वा तया हेतुभूतया स्नुषामुखे न्यस्ता सबाष्पा दृष्टिर्ययेति योजनीयम् । अश्रुणः पूर्वावस्था बाष्पः इति वृद्धाः ॥

आयोधनान्मृत्युमुखादिवोग्राद्विनिःसृतं भ्रातृसहायमग्रे ।
कृतप्रणामं तमवेक्ष्य माता बालस्तदा जात इतीव मेने ॥ ३९ ॥

तदा तस्मिन्काले माता जननी कौसल्या कुन्ती वा तं श्रीरामं युधिष्ठिरं वा अग्रे कृतप्रणाममवेक्ष्य दृष्ट्वा इतीव मेने स्वीचकार 'बालः शिशुः जात उत्पन्नः' इति । कीदृशम् । मृत्युमुखादिव यमहस्तादिवोग्राद्भयानकात् आयोधनात्समरात् विनिःसृतमागतं भ्रातृसहायं सलक्ष्मणं भीमादिसहितं वा ॥

संमोचिते तस्य जटाकलापे प्रसाधकैः कङ्कतिसक्तहस्तैः ।
निरन्तरग्रन्थिरपि श्लथोऽभूत्तदा जनानां हृदयेषु शोकः ॥ ४० ॥

तदा तस्मिन्काले जनानां स्निग्धजनानां हृदयेषु निरन्तरग्रन्थिरपि गाढग्रन्थिरपि शोकः श्लथो बभूव । विग्रन्थिरभूदित्यर्थः । कस्मिन्सति । तस्य रामस्य युधिष्ठिरस्य वा जटाकलापे जटाजूटे संमोचिते सति । कैः । प्रसाधकैः नृभिः संत्याजितदृढग्रन्थौ सति । कथंभूतैः प्रसाधकैः । कङ्कतौ कचकर्षण्यां सक्ता हस्ता येषां तैरिति ॥

अथाभिषेकाय नृपस्य मौलैः सद्यो विसृष्टा निपुणाः पुमांसः ।
तीर्थाम्भसामाहरणाय चेरुः पृथ्वीं रसानामिव सूर्यपादाः ॥ ४१ ॥

अथानन्तरं निपुणाः कुशलाः आप्ताः पुमांसः पुरुषाः मौलैः प्रधानामात्यैः राज्ञः कृते तीर्थाम्भसां तीर्थजलानामाहरणाय आनयनाय पृथ्वीं चेरुश्चरन्ति स्म । सद्यस्तत्काले विसृष्टाः प्रस्थापिताः । किमर्थमभिषेकाय राज्याभिषेकार्थम् । सूर्यपादा इव । यथा रवेः पादाः रसानां जलानामपहरणाय जगच्चरन्ति ॥

तं चार्वङ्ग्या सह दयितया भद्रपीठोपविष्टं
वारां पूरैः कनककलशावर्जितैरभ्यषिञ्चन् ।
इष्टान्मन्त्राञ्जगदघहरान्व्याहरन्तो मुनीन्द्रा
मेरुं मेघा इव सुनिनदाः संचितं कल्पवल्ल्या ॥ ४२ ॥

तं श्रीरामं युधिष्ठिरं वा मुनीन्द्रा वशिष्ठादयो धौम्यादयो वा अभ्यषिञ्चन् अभिषिञ्चन्ति स्म । कैः । वारां जलानां पूरैः समूहैः । किंभूतैः । कनकस्य कलशेभ्यः आवर्जितैः त्यक्तैः । कीदृशं तम् । चार्वङ्ग्या सुन्दराङ्ग्या दयितया सीतया द्रौपद्या वा सह समं भद्रपीठे सिंहासने उपविष्टमास्थितम् । यत्र समप्राधान्येनान्वयस्तत्र साहित्यम् । सप्तदशावरास्तमुपासीरन्निति । यत्रैकस्य प्राधान्येनान्वयः अपरस्य तद्गुणत्वेन तत्र

१. 'भिरतैः स्वमौलैः' कलि०. २. 'संगतं' कलि०.

सहत्वमिति यथा यत्कर्तव्यं तदनया सहेति । एतच्च सहत्वं साहित्यविवेके विवृण्वते । यथा कल्पवल्ल्या कल्पलतया संचितं सम्यग्व्याप्तं सुनिनदाः शोभननिनादयुक्ता मेघा अभिषिञ्चन्ति ॥

जलोच्चयस्तन्मुकुटाग्रभागान्निपत्य गात्रं परितो विसर्पन् ।
रराज मेरोः शिखराभिघाताद्विष्वग्विसारीव सुरापगौघः ॥ ४३ ॥

जलोच्चयः पानीयसमूहः रराज बभौ । क इव । सुरापगौघ इव । यथा मेरोः शिखराभिघाताद्विष्वक्सर्वतो विसारी विसरणशीलः सुरापगाया गङ्गाया जलौघः शोभते । तं विशिनष्टि—तस्य श्रीरामदेवस्य युधिष्ठिरस्य वा मुकुटाग्रभागात् निपत्य गात्रं परितः विसर्पन् । 'परितोऽभितःसमयानिकषाहिरुग्यो(हादियो)गे द्वितीयापि दृश्यते' इति द्वितीया ॥

सद्यो विद्याधरकरपुटैर्वारिवाहैश्च मुक्ता
दूरोत्सर्पत्परिमलमिलद्भृङ्गसंगीतहृद्या ।
ज्योत्स्नाफेनस्तबकसदृशी मङ्क्षु पर्यस्तरत्क्ष्मां
दिव्योद्यानद्रुमशिखरजा पुष्कला पुष्पवृष्टिः ॥ ४४ ॥

पुष्पवृष्टिः क्ष्मां पृथ्वीं पर्यस्तरत् परिस्तृतां व्याप्तां चकार । कीदृशी । सद्यस्तत्कालं विद्याधरकरपुटैः वारिवाहैश्च मुक्ता त्यक्ता । दूरादुत्सर्पन् विसारी यः परिमलः पुष्पगन्धस्तेन मिलन्तो ये भृङ्गा भ्रमरास्तेषां संगीतेन सम्यग्गायनेन हृद्या मनोहारिणी । ज्योत्स्नेव फेनस्तस्य स्तबकः तत्सदृशी तत्समाना । मङ्क्षु तत्क्षणात् दिव्योद्यानस्य नन्दनवनस्य द्रुमाणां शिखरादग्राज्जाता पुष्कला प्रचुरा । 'स्यात्परिमलो विमर्देऽतिमनोहरगन्धयोश्चापि । सुरतोपमर्दविकसच्छरीररागादिसौरभे पुंसि ॥' इति मेदिनीकरः ॥

प्रासादान्प्रतिनादयन्क्षितिभृतां द्राक्कन्दराः पूरय-
न्दिग्भित्तीः प्रतिघट्टयन्प्रगुणयन्नम्भोनिधीनां ध्वनिम् ।
मूर्च्छन्नुच्चविमानसद्मसु मुहुः स्वर्लोकवाद्यस्वनै-
राध्मातः शिवमाविरास जगतः कल्याणतूर्यध्वनिः ॥ ४५ ॥

कल्याणस्य तूर्यध्वनिः शब्दः आविरास आविरभूत् । 'प्रकाशे प्रादुराविः स्यात्' इत्यमरः । जगतः शिवं कल्याणमिति क्रियाविशेषणम् । किं कुर्वन् प्रासादान् धवलगृहान् प्रतिनादयन् प्रतिरवयुक्तान् कुर्वन् । क्षितिभृतां कन्दराः पूरयन् । द्राक् शीघ्रं दिग्भित्तीः प्रतिघट्टयन् प्रतिघर्षयन् । अम्भोनिधीनां समुद्राणां ध्वनिं प्रगुणयन् प्रकृष्टगुणान् कुर्वन् । अधिकं कुर्वन्निति यावत् । उच्चविमानेषु सद्मसु मुहुर्वारंवारं मूर्छन् वर्धमानः स्वर्लोकवाद्यानां देववाद्यानां स्वनैराध्मातः पूरित इति ॥

१. 'विवृतम्' कश्मी०. २. 'भागे नि' कलि०.

तं तरुण्योऽभिषेकान्ते राजानं निरराजयन्।
दीपैर्विद्युत्कलापेन मेघमाला इवाचलम् ॥ ४६ ॥

तं राजानं श्रीरामं युधिष्ठिरं वा तरुण्यो निरराजयन् नीराजनां चक्रुः। अभिषेकस्य राज्याभिषेकस्यान्ते। कैः। दीपैः। कमिव। अचलमिव। यथा मेघमाला विद्युतां कलापेनाचलं नीराजयन्तीति ॥

परितापमपानुदज्जनानां क्षितिभर्तुः कृतशोभमातपत्रम्।
निरवद्यतदीयकीर्तिगङ्गानवपूरोत्सुकहंसमण्डलाभम् ॥ ४७ ॥

आतपत्रं छत्रं जनानां प्रजानां परितापं समन्तादुद्वेगमपानुदत् दूरीचकार। तस्मिन् राजयति सति जनानामुद्वेगो नाभूदिति। किंभूतं तत्। क्षितिभर्तुः श्रीरामस्य युधिष्ठिरस्य वा। कृता शोभा कान्तिर्येन तत्। राज्ञः शोभामात्रजनकं संतापनोदनं तु प्रजानामिति भावः। क्षितिभर्तुरातपत्रं जनानां परितापमपानुददिति केचिद्योजयन्ति। अन्यच्च किंभूतम्। निरवद्या अवद्यशून्या तदीया रामसंबन्धिनी युधिष्ठिरसंबन्धिनी वा या कीर्तिः सैव गङ्गा तस्याः नवे पूरे प्रवाहे उत्सुकस्य हंसमण्डलस्येवाभा यस्य तत् ॥

विमलमुकुटमौलिः कुण्डलेद्धाङ्गदश्री-
र्मणिवलयविलासी तारहाराभिरामः।
परिगतकटिसूत्रः सोऽधिकं प्रेक्ष्य आसी-
दपर इव नराणां पुण्यजः पारिजातः ॥ ४८ ॥

अधिकं यथा स्यादेवं स रामो युधिष्ठिरो वा नराणां जनानां पुण्यजः पुण्याज्जातो धर्मावतारः प्रेक्ष्यः प्रेक्षणीयः सुन्दरः आसीद्बभूव। अपरः पारिजात इव। नराणां मध्ये पुण्याज्जातः परोऽन्यः पारिजात इवेति वा। कीदृशः। विमलं मुकुटं मौलौ यस्य स तथा। कुण्डलाभ्यामिद्धा उपचिता अङ्गदयोः श्रीर्यस्य सः। मणिवलयेन विलसितुं शीलं यस्य स तथा। तारेण हारेणाभिरामः मनोहरः। परिगतं कटिसूत्रं स्वर्णसूत्रं यस्य स तथा ॥

पुराणभूपालपरम्पराणां साम्राज्यलक्ष्मीवरकार्मणं[2] सः।
मणिप्रभाभासुरमध्यतिष्ठत्सिंहासनं सूर्य इवोदयाद्रिम् ॥ ४९ ॥

स श्रीरामो युधिष्ठिरो वा सिंहासनमध्यतिष्ठत्। 'अधिशीङ्स्थासां कर्म' इत्यधिकरणस्य कर्मसंज्ञा। किंभूतम्। पुराणानां पूर्वजानां भूपालानां याः परम्पराः तासां साम्राज्यस्य लक्ष्म्याः वरं श्रेष्ठं कार्मणं वशीकरणमन्त्रः। 'कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च' इति विश्वः। मणिप्रभाभिः भासुरं भासनशीलम्। सूर्य आदित्य उदयाद्रिमिव उदयपर्वतमिव ॥

---

१. 'लीव' कलि०. २. 'हर' कलि०.

मणिदर्पणमण्डले मनोज्ञे परिफुल्ला विरराज तस्य मूर्तिः ।
सुधियां हृदयेषु तद्गुणौघः ककुभां भित्तिषु पुण्यकीर्तिपूरः ॥९०॥

तस्य श्रीरामस्य युधिष्ठिरस्य वा मूर्तिः शरीरं निर्मले स्वच्छे मणिदर्पणमण्डले मणिघटिते दर्पणमण्डले मनोज्ञे सुन्दरे विरराज शोभते स्म । परि सर्वतोभावेन फुल्ला विकसिता दीप्ता सोत्साहेति । तयोश्च द्वयो राज्ञोः गुणौघः गुणसमूहः सुधियां हृदयेषु विरराज । ककुभां दिशां भित्तिषु पुण्यः कीर्तिपूरश्च विरराज । तयोः द्वयोरित्यर्थात् । 'पुण्यं धर्मे च सुकृते क्लीबं त्रिषु च शोभने' इति प्रकाशे ॥

[1]लीलायातैर्नयनचलनैः सस्मितैर्भ्रूविलासै-
र्यूनां चित्ते मनसिजदशां गाढमुद्बोधयन्त्यः ।
चञ्चच्छिञ्जद्वलयनिजदोर्वल्लरीवेल्लितैस्तै-
र्भेजुस्तं सप्रणयमबलाश्चामरालीमरालैः ॥ ९१ ॥

तं श्रीरामं युधिष्ठिरं वा सप्रणयं सस्नेहं भेजुः सेवन्ते स्म । 'प्रणयः प्रेम्णि विश्रम्भे याच्ञाविस्रम्भयोरपि' इति विश्वः । कैः । चामरालीमरालैः चामराणां या आली परम्परा सैव मराला हंसास्तैः । किंभूताः । यूनां तरुणानां चित्ते मनसिजदशां कामावस्थां गाढं यथा स्यादेवमुद्बोधयन्त्यः वर्धयन्त्यः । कैः । लीलायातैः लीलागमनैः । नयनचलनैः कटाक्षनिरीक्षणैः । लीलायातैरिति नयनचलनैरित्यस्य विशेषणं वा । लीलया आयातो येषां भ्रूविलासैर्भ्रूविक्षेपैः सस्मितैः सहासैः चञ्चद्रम्यं शिञ्जच्छब्दायमानं यत्र एवंभूता या निजा आत्मीया दोर्वल्लरी बाहुलता तस्य वेल्लितैः प्रेरणैः ॥

प्रसन्न[2]चक्षुश्चलनेष्वथ क्षणं किरीटकोटीषु कराग्रसंपुटम् ।
विधारयन्तः सुहृदश्चिराय तं यथोचितस्थानजुषः सिषेविरे ॥९२॥

सुहृदो मित्राणि तं श्रीरामं युधिष्ठिरं वा सिषेविरे सेवन्ते स्म । प्रसन्नयोश्चक्षुषोश्चलनेषु तयोर्द्वयो राज्ञोरित्यर्थात् कराग्रसंपुटमञ्जलिं किरीटकोटीषु विधारयन्तः विशेषेण धारयन्तः । अथानन्तरं चिराय चिरकालात् यथोचितस्थानजुषः । यस्य यस्य यदुचितं स्थानं योग्यं तत्र तत्रस्था इत्यर्थः । 'प्रसन्नचक्षुश्चलनेक्षणक्षणे' इति पाठे प्रसन्नचक्षुश्चलनेन यदीक्षणं तस्य यः क्षणः तस्मिन् ॥

अयाचिताभीष्टवरप्रदानैरुत्साहविस्रम्भकरैश्च वाक्यैः ।
कृतानुयोगैश्च गुणानुरूपैरतूतुषन्मित्रजनं जनेश्वरः ॥ ९३ ॥

जनस्येश्वरः श्रीरामः युधिष्ठिरो वा मित्रजनमतूतुषत् संतोषयामास । कैः । अयाचितस्याप्रार्थितस्याभीष्टस्य काङ्क्षितस्य वरस्य श्रेष्ठस्य वस्तुनः प्रदानैर्वितरणैः । 'वरो

---

१. 'लीलयत्तैः' कलि०. २. 'चक्षुर्ललितं सलक्ष्मणं' कलि०.

जामातरि वृतौ देवतादेरभीप्सिते। कुङ्कुमे च मनागिष्टे क्लीबं श्रेष्ठे च वाच्यवत् ॥' इति विश्वः। उत्साह आनन्दः विस्रम्भो विश्वासः। प्रीतिरिति यावत्। तौ कुर्वन्ति ये ते तथोक्तानि एवंभूतैर्वाक्यैश्च गुणानुरूपैः गुणसदृशैः कृतानुयोगैः कृतप्रश्नैश्च। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः॥

अग्र्यासु संपत्तिषु संनिवृत्ता वृता वरार्थे सुहृदः प्रसाद्य।
ययाचिरे संपदमानतास्ते तद्भृत्यभावादधिकां न कांचित् ॥ ९४॥

ते सुहृदो मित्राणि तद्भृत्यभावात् तस्य श्रीरामस्य युधिष्ठिरस्य वा भृत्यभावादधिकां कांचन संपदं न ययाचिरे न याचन्ते स्म। किं तु तद्भृत्यभाव एव याचितः तैः सुहृद्भिरिति। किंभूताः। आनताः प्रणताः। अग्र्यासु श्रेष्ठासु संपत्तिषु समृद्धिषु संनिवृत्ताः। सम्यङ्निवृत्ताः इत्यर्थः। प्रसाद्य प्रसन्नीकृत्य वरार्थमभिमतार्थं प्रसाद्येति वा वृताः प्रार्थिताः॥

अनुज्झितास्थानकगर्भमानकैर्ध्वनद्भिराराप्रथमं निवेदितैः।
अशेषसंगीतकलाविचक्षणैः क्षणात्स भेजे कुशलैः कुशीलवैः ॥९५॥

स श्रीरामो युधिष्ठिरो वा कुशलैः कुशीलवैः नटैर्भेजे सेवितः। क्षणात्क्षणं व्याप्य। किंभूतैः। अशेषाः समस्ताः संगीतस्य गीतनृत्यवाद्यात्मकस्य याः कलास्तत्र विचक्षणैः पण्डितैः। प्रथममानकैः पटहैः निवेदितैः अनुज्झितः आस्थानकगर्भः पूर्वरङ्गगर्भो यत्र तत्। तथा ध्वनद्भिः शब्दायमानैः॥

ततेषु विज्ञैर्विततेषु कोविदैर्घनेषु दक्षैः सुषिरेषु सूरिभिः।
अवादि वाद्यं पुरतोऽस्य वादकैरमुक्तगेयैर्लयबन्धसुन्दरम् ॥ ९६ ॥

अस्य श्रीरामस्य युधिष्ठिरस्य वा पुरतोऽग्रे वादकैः वाद्यमवादि वादितम्। कथंभूतैः। ततेषु वीणादिषु विज्ञैः कुशलैः। विततेषु विस्तीर्णेषु घनेषु कांस्यतालादिषु दक्षैः निपुणैः। तथा सुषिरेषु वंशादिषु सूरिभिः कुशलैः। तथा अमुक्तं गेयं यैस्तैः। लयस्य साम्यस्य बन्धस्तेन सुन्दरं मनोहरं क्रियाविशेषणं वा॥

सकेतकदलं यथा चतुरनेत्रचारैः सदः
सपल्लवचयं यथा करतलाञ्चलैः शोभयन्।
सविद्युदिव गात्रकैः सकमलावलीवाङ्घ्रिभि-
र्ननर्त ललितक्रियं निपुणलासकस्त्रीगणः ॥ ९७ ॥

निपुणः कुशलो यो लासकस्त्रीगणः नर्तकस्त्रीवर्गः ननर्त नृत्यं चकार। किं कुर्वन्। सदः सभां शोभयन् शोभितां कुर्वन्। कैः। चतुरनेत्रचारैः मनोज्ञनेत्रसंचारैः। सके-

१. 'चतुर' कश्मीर०.

सकदलं यथा भवति तद्वदित्यर्थः । सपल्लवचयम् । पल्लवचयवत् करतलप्रान्तैरित्यर्थः । गात्रकैः प्रशस्तशरीरैः सविद्युदिव विद्युत्सहितमिव । दीप्तिचाञ्चल्येन साम्यम् । अङ्घ्रिभिश्चरणैः सकमलावलीव सपद्मपङ्क्तीवेत्यर्थः । ललितक्रियं यथा स्यात् ललिता मनोहरा क्रिया यत्र ॥

सचन्द्रलेखश्चलहंसपक्षतिः सपद्मकोशः शुकतुण्डभासुरः ।
कराङ्गहारः सुदृशामशोभयत्तदा शरत्काल इव प्रभोः सभाम् ॥ ९८ ॥

तदा तस्मिन्काले श्रीरामस्य युधिष्ठिरस्य वा सुदृशां कामिनीनां कराङ्गहारः कराणां हस्तानामङ्गहारः कराङ्गविन्यासः अशोभयत् शोभयति स्म । सुदृशां कराङ्गहार इति शरत्काल इवेति । उभयं विशिनष्टि—सचन्द्रलेख इति । सह चन्द्रलेखया वर्तते यः स तथा । अर्धचन्द्रवत् कराङ्गन्यासेन तथात्वमिति भावः । चला हंसपक्षतिरिव क्वचित् चलहंसपक्षतिरिव कराङ्गन्यासेनेत्यर्थः । पक्षे । चला चञ्चला हंसपक्षतिर्यत्र । तथा सपद्मकोशः पद्मकोशसहितः । तद्वत् कराङ्गन्यास इत्यर्थः । पद्मकोशसहितः । तथा शुकतुण्ड इव भासुरः क्वचित् कीरचञ्चुरिव भासुरो दीप्तस्तदाकारः क्वचित्कराङ्गन्यास इति । पक्षे । शुकतुण्डैः भासुर इति ॥

स पूज्यानभिषेकान्ते स्वापतेयैरपूपुजत् ।
यथा ते संपदा प्रापुर्नरकिंनरराजताम् ॥ ९९ ॥

स श्रीरामः युधिष्ठिरो वा पूज्यान् ब्राह्मणादीन् मान्यान् स्वापतेयैः धनैरपूपुजत् पूजितवान् । अभिषेकान्ते राज्याभिषेकावसाने । यथा ते पूज्याः संपदा समृद्ध्या नरराजतां भूमिपतित्वं किंनरराजतां कुबेरत्वं च प्रापुः गता इति ॥

स स्थूललक्षो बहुलक्षसंख्यैर्वनीपकौघानवनीपवर्यः ।
धनैस्तदानीमधिनोदधिश्रीः सस्यानि पाथोभिरिवाम्बुवाहाः ॥ ६० ॥

सः अवनीपानां राज्ञां वर्यः श्रीरामो युधिष्ठिरो वा वनीपकौघान् प्रार्थकसमूहान् धनैर्वसुभिरधिनोत् प्रीणयति स्म । तदानीं तस्मिन्काले । कीदृशः । अधिका श्रीर्यस्य सः । बहुलक्ष्मीक इत्यर्थः । स्थूललक्षः बहुप्रदः । 'स्थूललक्षो बहुप्रदे' इति विश्वप्रकाशः । धनैः किंभूतैः । बहूनि लक्षाणि शतसहस्राणि संख्या येषां तैः बहुलक्षसंख्यैः । अम्बुवाहा इव । यथा मेघाः पाथोभिर्जलैः सस्यानि धान्यानि प्रीणयन्तीति ॥

रमा रसासारमारमानताननतानमा ।
रतागमामा गता रसानमाननमानसा ॥ ६१ ॥

सा रमा राजलक्ष्मीः तं श्रीरामं गता जगाम । तदा तस्मिन्काले रामं श्रितवतीत्यर्थः । इत्यग्रिमश्लोकेन 'रम्या' इत्यादिनान्वयः । कीदृशी रमा । रसा पृथ्वी तस्यां सारो बली यो मारः कन्दर्पः तस्य मानं चित्तसमुन्नतिं तनोति विस्तारयति या सा तथा ।

सारः श्रेष्ठः स्थिरो वा यो मारस्य कन्दर्पस्य मानः तं तनोति विस्तारयति या सेति वा। तनोतेः 'अन्येभ्योऽपि दृश्यन्ते' इति डप्रत्यये 'टेः' इति लोपे टापि रूपम्। पुनः किंभूता। न नता अनमा अनम्रा सती। न कस्मैचित्प्रणतेत्यर्थः। या नता भवति सा नम्रा। न तादृशीत्यर्थः (?)। तथा किंभूता। रतागमा रतोऽनुरक्तः आगमो यस्याः सा। पुनरपि किंभूता। अमा अविद्यमाना मा यस्याः सा अमा। प्रमाणरहितेत्यर्थः। अन्यच्च किंभूता रसानमाननमानसा रसेन मात्सर्यादिना अनममनम्रमाननमानसं मुखसरो यस्याः। 'सारो बलो स्थिरांशे च न्याये क्लीबं वरे त्रिषु' इति प्रकाशः। पादचतुष्टयं पृथक्कृत्य प्रतिपदं प्रत्यागतं तेन भ्रमणं सर्वतोभद्रः॥ यद्वा सा रमा लक्ष्मीः रसासारं रसा पृथ्वी तस्यां सारं श्रीरामं युधिष्ठिरं वा गता। कीदृशम्। आरं दातारं तथा आनताननतानमा आनतमाननं यस्य तस्य भावः आनताननता तया नमा कृतनमस्कारा। तथा रतागमामा। रतः आगमो यस्याः सा रतागमा आ समन्तात् मा शोभा यस्याः सा। तथा रसानमाननमानसा। रसेन इच्छया आनमानतमाननं मानसं च यस्याः सा। सर्वतोभद्रश्लोकः॥

रम्या कल्पविलासिनी क्षितिपतेर्लावण्यतेजस्विनी
नुत्याविष्कृतमण्डना स्थितिमती याभीष्टलोकान्तरा।
रक्षोराजसभाजकं मतिमतामाद्यं सुसेव्यं मुदा
दातारं रसितानुजे नरशतानीकेन रामं तदा॥ ६२॥

रामं श्रीरामचन्द्रं कथंभूतम्। रक्षोराजस्य रावणस्य सभाया अजकं क्षेपकम्। 'अज गतिक्षेपणयोः' इति धात्वनुसारात्। मतिमतामाद्यं प्रथमगण्यं सुसेव्यं सुष्ठु सेवनीयं मुदा हर्षेण दातारं धनप्रदम्॥ पक्षे—रमयतीति रामं क्रीडाजनकं मनोहरं वा युधिष्ठिरम्। कीदृशम्। रक्षः रक्षायाः रक्षणं। रक्ष् क्विबन्तः। तस्या हेतोः राज्ञां सभाजकं च मतिमतां सुसेव्यमिति केचित् योजयन्ति। शेषं समानम्। सा रमा का इत्याह—या रम्या रमणीया आकल्पं कल्पान्तं विलसितुं शीलं यस्याः सा आकल्पविलासिनी। क्षितिपतेः श्रीरामस्य युधिष्ठिरस्य वा लावण्यं तेजश्च अस्यामस्तीति तथा। नुत्या स्तुत्या आविष्कृतं मण्डनं यया। तथा स्थितिमती स्थितियुक्ता। तथा अभीष्टमाकाङ्क्षितं लोकानामन्तरं यस्याः सा। अन्यच्च किंभूता। अनुजे लक्ष्मणे रसिता संतुष्टा। नरशतस्य अनीकं तेन लक्षिता। पक्षे। अनुजे अर्जुने रसिता। अन्यत्समानम्। चक्रबन्धः। कविनामगर्भः श्लोकः 'कविराजकाव्यम्' इति॥

श्रुतचित्रकथस्तीर्थभूतात्कुम्भभुवः कवेः।
स्वपुरप्राप्तये चक्रे राजा हरिविसर्जनम्॥ ६३॥

---

१. 'रमिता निजेन लसता' कलि०.

राजा श्रीरामो हरीणां वानराणां सुग्रीवादीनां विसर्जनं चक्रे कृतवान् । स्वपुराणां प्राप्तये स्वस्वस्थानं प्रति । स किंभूतः । तीर्थभूतादुपाध्यायभूतात् कवेः वाल्मीकितः तथा कुम्भभुवः कुम्भाद्भूरुत्पत्तिर्यस्य तस्मात्कुम्भसंभुवादगस्त्यात् श्रुतचित्रकथः श्रुताश्चित्रा नानाप्रकाराः कथा पूर्ववृत्तान्ता येन । 'अवतारे विदुस्तीर्थं यात्रोपाध्यायमन्त्रिषु' इति शाश्वतः ॥ पक्षे—राजा युधिष्ठिरः हरिविसर्जनं श्रीकृष्णप्रस्थापनं चक्रे । [कुं पृथ्वीमुम्भयन्ति भूषयन्ति तादृशेषु धर्मप्रधानमनुजेषु वशिष्ठशापाद्भूरुत्पत्तिरस्य तादृशात्तीर्थभूतात्पितामहाद्भीष्मात् कवेः सर्वधर्मोपदेशकात्] स्वपुरस्य द्वारकायाः प्राप्तये । शेषं तुल्यम् ॥

श्रिया जुष्टः स भारत्या सानुजः साधुवत्सलः ।
पृथिवीं पालयामास कामदेव इवापरः ॥ ६४ ॥

इति श्रीहलधरणीप्रसूतकादम्बकुलतिलकचक्रवर्तिवीरश्रीकामदेवप्रोत्साहितकविराजपण्डितविरचिते राघवपाण्डवीये महाकाव्ये कामदेवाङ्के रावणदुर्योधनवधश्रीरामयुधिष्ठिराभिषेको नाम त्रयोदशः सर्गः ।

स श्रीरामो युधिष्ठिरो वा पृथिवीं पालयामास ररक्ष । कीदृशः । भरतादिसहितः भीष्मादिसहितो वा । श्रिया राजलक्ष्म्या जुष्टः सेवितः, भारत्या सरस्वत्या वाण्या च । 'तुष्टः' इति केचित् । साधुषु वत्सलः स्नेहनः अपरः कामदेव इव कन्दर्प इव । एतत्काव्यकर्ता राजविशेष इवेति वा ॥

इति समस्तप्रक्रियाविराजमानरिपुराजकंसनारायणश्रीनारायणचरणप्रणमहाराजाधिराजश्रीअमरसिंहकारिते महाश्रीशशिधरकृते राघवपाण्डवीयप्रकाशे त्रयोदशः सर्गः ।

**समाप्तमिदं काव्यम् ।**

# राघवपाण्डवीयश्लोकानुक्रमणिका ।